श्री नांदीमुख पूज्या  श्री वक्रांग्यै भगवत्यै नमः  ।

मंगलाचरणम्  ।

गणपतिः

शुक्लाबरधरं देवं शशिवर्णं चतुर्भुजम्  ।
प्रसन्न वदनं ध्यायेत् सर्व विघ्नोपशांतये  ॥

जगदंबा

बालार्क मराडलाभासां चतुर्बाहुं त्रिलोचनां  ।
पाशांकुश धनुर्बाण धारयन्तीं शिवां भजे  ॥

शिवः

करचरणं कृतं वाक्कायजं कर्मजंवा  ।
श्रवण नयनजं वा मानसं वाऽपराधं  ॥
विहित मविहितंवा सर्व मे तत्क्षमस्व  ।
जय जय करुणाब्धे श्री महादेवशंभो  ॥

विष्णुः

सच्चिदानंद रूपाय जगदंकुर हेतवे  ।
सदोदिताय पूर्णाय नमोऽनंताय विष्णवे  ॥

सूर्यः

हिरगमयेन पात्रेण सत्यस्याऽपिहितं मुखम्  ।
तत्त्वंपूषन्नपावृणु सत्य धर्माय दृष्टये  ॥

गुरुनी स्तुति

अज्ञान तिमिरांधस्य ज्ञानांजन शलाकया  ।
चक्षुरुन्मिलितं येन तस्मै श्रीगुरवे नमः  ॥

परमात्मानी स्तुति

श्रीहरिं परमानंद मुपदेष्टा रमीश्वरम्  ।
व्यापकं सर्व लोकानां कारणं तं नमाम्यहम्  ॥

दक्षिणामूर्तिः

ईश्वरोगुरु रात्मेति मूर्ति भेद विभागिने  ।
व्योमवद्व्याप्त देहाय दक्षिणामूर्तये नमः  ॥

आशीः प्रार्थना

सर्वेत्र सुखिनः संतु सर्वेसंतु निरामयाः  ।

सर्वे यद्राणि पश्यंतु माकश्चिद्दुःख माप्नुयात् ॥
कल्याण प्रार्थना
कालेवर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोयंक्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥

नांदी पुराण
तथा
नांदीमुख माहात्म्य

अथ नान्दि पुराणम्
अध्याय १

वसिष्ठ उवाच
भगवन्देव देवाग्र विभो धर्मादिकारण ।
त्वत्प्रसादाच्छ्रुताः सर्वे धर्मा वर्णाश्रमोचिताः १
कुण्डमण्डपदेवीनां प्रमाणं च यथाश्रुतम्
दीक्षां यज्ञादिकानां च वास्तुशास्त्रनिरूपणम् २
अवताराम्भगवतश्चतुर्विंशतिसंमितान् ।
मंत्रदीक्षाविधिश्चापि संस्कारानष्टसंयुतान् ३
चत्वारिंशन्मितान्सूर्य सोमवंशादिवर्णनम्
एतदन्यच्च भगवँच्छ्रुतं विस्तरतो मया ४
अधुना श्रोतुमिच्छामि ब्रह्मांडस्य निरूपणम्
संक्षेपात्कथितं यच्च पुराह्येतत्तु विस्तरात् ५
श्रोतुमिच्छाम्यहं वह्ने ब्रूहि प्रलयकारणम्
वह्निरुवाच
ब्राह्मवर्षशतांते च सर्वेषां संजिहीर्षया ६
विश्रामार्थं च भूतानां संसारे दुःखभागिनाम्
ससुद्रे पयसां शेते भगवान्भूतभावनः ७
तदाचैवोष्णकिरणास्तपन्संतापकारकः
द्वादशात्मा च जन्तूनां व्याकुलीकृतचेतसाम् ८
पाताल तलमारभ्य संकर्षणमुखानलः

दहते सर्वभूतानि विषोष्णज्वालयान्वितः ९
समानां च शतं पूर्वमनावृष्टिः प्रजायते
वायवोऽपि तदावान्ति जनसंतापकारकाः १०
धाराभिर्हस्तिहस्ताभिः प्लावयन्ति महीमिमाम्
मेघाश्च कालजनिताः क्षीयते द्रव्यमेव हि ११
गुणाच्च तत्पृथग्भूतं भूतं परमाणुतामियात्
वायुभिः क्षीणगन्धाभूरुदकत्वं तदाप्नुयात् १२
उदकं तद्धृतरसं ज्योतिष्ट्वायोप कल्पते
तमसा हृतरूपं तु वायौ ज्योतिः प्रलीयते १३
आकाशेन हृतस्पर्शो वायुर्नभसि लीयते
कालात्मदष्टकाष्ठादि सर्वमात्मनि लीयते १४
एतत्संक्षेपतो विप्र प्रलयः कथितस्तव १५
इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ प्रथमोऽध्यायः

## अध्याय २

वसिष्ठ उवाच
सर्गादि कारणं ब्रूहि कस्मात्सृष्टिः प्रजायते
सृष्टेः पालः पिता कश्च हर्ता चाख्यातु मर्हसि १
अग्निरुवाच
नारायणादिदं सर्वं समुत्पन्नं चराचर २
यथाहि देवः सृजति तथा वक्ष्यामि तच्छृणु
आसृष्टेः प्रलयं यावदेको नित्यः सनातनः
अंतर्लीनो महाभूतः सृष्टिं कर्तुमुपक्रमेत् ३
सात्विको राजसश्चैव तामसश्च तथाऽनघ
त्रिविधोऽयमहंकारो महत्तत्वादजायत ४
तदा वृत्तो हि भगवान्महाभूतान्ससर्जह
शब्दतन्मात्रिकाँश्चैव तन्मात्रा काशमेव च ५
शाब्दलक्षणिकश्चैव भूतादींस्तु समावृणोत्
बलवान भवद्वायुस्तस्य स्पर्शगुणो मतः ६
आकाशं शब्द तन्मात्रं स्पर्शमात्रं तथाऽवृणोत्

ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह ७
ज्योतीरूपाद्यतो वायोस्तद्रूपो गुणउच्यते
स्पर्शमात्रस्तु वै वायूरूपमात्रं समावृणोत् ८
तस्माज्जाता महीचेदं सर्वभूतगुणाधिका
संधातो जायते तस्मात्तस्य गन्धगुणो मतः ९
तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मातृकाः स्मृताः
तन्मात्राण्यवशेषाणि विशेषाः क्रमशोऽपराः १०
भूततन्मात्रसर्गोऽयमहंकारात्तु तामसात्
तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ११
एकादशं मनश्चात्र कीर्तितं तत्र चिंतकैः
बुद्धीन्द्रियाणि पंचात्र पंच कर्मेन्द्रियाणि च १२
तानि वक्ष्यामि तेषां च कर्माणि कुलपावन
श्रवणं त्वग्दृशौ जिह्वा नासिका चैव पंचमी १३
शब्दादिज्ञानसिद्ध्यर्थं बुद्धियुक्तानि पंच व
पायूपस्थौ हस्तपादौ वाङ्मयं चापि पंचमम् १४
आकाशवायुतेजांसि सलिलं पृथिवी तथा
शब्दादित्रिर्गुणैर्विप्र संयुक्तास्तत्पुरोत्तरे १५
नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना
नाशक्नुवन् प्रजाः सृष्टुं समागम्य तु कृत्स्नशः १६
पुरुषेण समासाद्य परस्परमथाश्रयात्
पुरुषाधिष्ठितत्वाच्च प्रकृत्यानुग्रहेण च १७
महदाद्या विशेषाये त्वंण्डमुत्पादयन्तिते
तत्क्रमेण विवृद्धं तु जलबुद्बुद्वत्स्थितम् १८
भूतेभ्योऽण्डं महाबुद्धे बृहत्त उदकेशयम्
प्राकृतं ब्रह्मरूपस्य विष्णोः स्थानमनुत्तमम् १९
तत्राव्यक्तस्वरूपोऽसौ विष्णुर्विश्वेश्वरः प्रभुः
ब्रह्मणो रूपमास्थाय स्वयमेव व्यवस्थितः २०
तस्मिन्नडेऽभवत्सर्वं सदेवासुरमानुषम्
रजोगुणयुतो देवः स्वयमेव हरिः परः २१
ब्रह्मरूपं समास्थाय जगत्सृष्टौ प्रवर्तते

अग्निरुवाच
ब्रह्मभूत्वा जगत्सृष्टौ भगवानप्यवर्तत २२
नारायणाख्यो भगवान् सर्वलोक पितामहः
उत्पन्नः प्रोच्यते विद्वन्नित्यः स ह्युपचारतः २३
निजेन तस्य मानेन ह्यायुर्वर्षशतं स्मृतम्
कालश्चापि स्मृतस्तेन तस्यायुःपरिकीर्तितम् २४
अन्येषां चैव भूतानां चराणामचरात्मनाम्
भूभृत्सुसागरादीनामशेषाणां च सत्तम २५
संख्याज्ञानं प्रवक्ष्यामि मनुष्याणां निबोध मे
अष्टादश निमेषाणां काष्ठका परिकीर्तिता २६
काष्ठात्रिंशत्कलाज्ञेया कलात्रिंशन्मुहूर्तकम्
त्रिंशत्संख्यैहोरात्रं मुहूर्तैर्मानुषं स्मृतम् २७
अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः
तै षड्भिरयनं मासैर्द्वेऽयने दक्षिणोत्तरे २८
अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम्
अयनं द्वितीयं वर्षं मर्त्यानामिह कीर्तितम् २९
नृणां मासः पितृणां तु ह्यहोरात्रमुदाहृतम्
वस्वादीनामहोरात्रं मानुषोवत्सरः स्मृतः ३०
दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंस्मृतम्
चतुर्युग द्वादशभिस्तद्विभागं निबोध मे ३१
चत्वारि त्रीणि द्वेचैकं कृतादिषु यथाक्रमम्
दिव्याब्दानां सहस्रैस्तु युगैराहुः पुराविदः ३२
तत् आमाणैः शतं सन्ध्या पूर्वा तत्र विधीयते
संध्यांशकश्च तत्तुभ्यो युगः स्यात्तत्र भो द्विज ३३
संध्यासं ध्यांशयोर्मध्ये यः कालो वर्तते खलु
युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञकः ३४
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्
प्रोच्यते तत्सहस्रं तु ब्रह्मणो दिवसोह्ययम् ३५
ब्रह्मणो दिवसे ब्रह्मन् मनवश्च चतुर्दश
भवन्ति परिमाणं हि तेषां कालकृतं शृणु ३६

सप्तर्षयस्तु शक्रादि मनुस्तत्सूनवोऽपि च
एककालेऽपि सृज्यन्ते संह्रीयन्तेऽपि पूर्ववत् ३७
चतुर्युगानां संख्या च साधिका ह्येकसप्ततिः
मन्वंतरं मनोःकालः शक्रादीनामपि द्विज ३८
अष्टौ शतसहस्राणि दिव्यया संख्यया स्मृतः
द्वापंचाशत्तथान्यानि सप्त चान्यानि वै मुने ३९
विंशतिश्च सहस्राणि कालोऽयं साधिकः स्मृतः
ब्राह्ममेकमहर्ज्ञेयमेतदेवानुकीर्तनम् ४०
एवं कालः समाख्यातस्तव वेदविदांवर
कालरूपः स भगवान् सृष्टिचक्रे प्रवर्तते ४१
इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ सर्गाध्याये कालवर्णनं नाम
द्वितीयोऽध्यायः २

## अध्याय ३

वसिष्ठ उवाच
भगवन् ब्रूहि देवेशः ससर्ज च यथा पुरा
पितृदेवर्षिमनुजान् गंधर्वाप्सरसो नगान् १
अग्निरुवाच
यथा ससर्ज देवोऽसौ तथा संक्षेपतः शृणु
चिंतयामास कल्पादौ धाता नारायणात्मकः २
जगत्येकार्णवीभूते नाभिपद्मे व्यवस्थितः
व्यचिंतयत्तदा ब्रह्मा दृष्ट्वा सर्वं जलात्मकम् ३
तदाच मधुकैटाख्यावसुरौ द्वौवभूवतुः
नारायणश्रुतिमलाज्जातौ दृष्ट्वा जगत्प्रभुः ४
त्रस्तस्तदा स भगवानस्मरव्जगतां प्रभुम्
योगमायायुतं तं च ज्ञात्वा तुष्टाव तां तदा ५
तयामुक्तः स भगवान् ददर्श मधुकैटभौ
उत्पन्नौ यौवनबलात्ब्रह्मांडक्षय कामुकौ ६
युयुधे सह ताभ्यां च भगवान् भूतभावनः
बाहुप्रहरणेनैव परस्परमताडयन् ७

मातंगाविव संक्रुद्धौहंतुकामौ मिथस्तदा
पेषयंतौचबाहुभ्यां धृत्वाधस्तात् कलेवरम् ८
दंष्ट्राग्रेण च दंशंतौ क्रुद्धौ संरक्तलोचनौ
पंचवर्षसहस्रं तु जातमेवं तदा द्विज ९
भगवान् तौ बलौ ज्ञात्वा प्रोवाच परमेश्वरम्
तुष्टोहं दानवाध्यन्नौ परं वरयतां तदा १०
मधुकैटभावूचतुः
क्रोधाविष्टौ तदा तौ तु प्रोचतुः परमेश्वरम्
वरं वरय देवेश दास्यावस्ते यथेप्सितम् ११
दास्यथो यदि मे दैत्यौ वरं वध्यौ तथा मम
भवतं चोचतुश्चायं व्याकुलीभूतचेतसौ १२
तत्र नौ वध्यतां नाथ यत्र निःसलिला मही
तथेत्युक्त्वा स भगवानशोषयज्जलं तदा १३
चक्रेण शिरसी छिन्ने तेन तत्र तयोस्तदा
अथ प्रोवाच धातारं सृष्टिकर्ता भवेति तम् १४
इत्युक्त्वांतर्दधे विप्र भगवान् पुरुषोत्तमः
ब्रह्मादि चिंतयामास कथं सृष्टिः प्रजायते १५
ब्रह्मणोऽपि महान् रोषः समुत्पद्यत चाग्रज
रोषसंभवकश्चैव तस्यांके बालकोजनि १६
अर्धनारीनरवपुः प्रचंडोऽतिशरीरवान्
तेजसा भासयन् सर्वा दिशश्च विदिशस्तथा १७
तं दृष्ट्वा तेजसा दीप्तं प्रत्युवाच प्रजापतिः
विभजात्मानमद्यत्वं मम वाक्यान्महामते १८
इत्युक्तो ब्रह्मणा तेन विप्र रुद्रः प्रतापवान्
स्त्रीभावं पुरुषत्वं च पृथक्पृथक् तथाऽकरोत् १९
विभेद पुरुषत्वंच दशधा चैकधाच सः
तेषां नामानि वक्ष्यामि शृणु मे द्विजरुत्तम २०
अजैकपादहिर्बुध्न्यः कपाली रुद्र एव च
हरश्च बहुरूपश्च त्र्यंबकश्चापराजितः २१
वृषाकपिश्च शंभुश्च कपर्दीरैवतस्तथा

एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः २२
स्त्रीत्वं चैव तथा रुद्रो बिभेद दशधैकधा
उमेव बहुरूपेण पत्नी चैव व्यवस्थिता २३
तपः कृता जले घोरमुत्तीर्णः स यदा पुरा
तदा स सृष्टवान् देवो रुद्रस्तत्र प्रतापवान् २४
तपोबलेन विप्रेन्द्र भूतानि विविधानि च
पिशाचवदनांश्चैव सिंहोष्ट्रमकराननान् २५
वेतालप्रमुखान्भूतानन्यांश्चैव सहस्रशः
विनायकानामुग्राणां त्रिंशत्कोटयर्धमेव च २६
अन्यत्कार्यं समुद्दिश्य सृष्टवान्स्कंदमेव च
एवं प्रकारो रुद्रोऽसौ मयातेकीर्तितः प्रभुः २७
अनुमार्गं मरीच्यादेः कथयामि निबोध मे
देवाद्याः स्थावरांताश्च प्रजाः सृष्टाः स्वयंभुवा २४
यदास्य च प्रजाः सर्वा न व्यवर्धन्त धीमतः
स तदा मानसान् पुत्रान् सदृशानात्मजोऽसृजत् २९
मरीचिमत्र्यंगिरसं पुलस्त्यं पुलहं क्रतुम्
प्रचेतसं वशिष्ठं च भृगुं चैव महामतिः ३०
नह ब्रह्मण इत्येते पुत्रत्वे निश्चयं गताः
अग्निश्च पितरश्चैव ब्रह्मपुत्रौ च मानसौ ३१
सृष्टिकाले महाभागौ ब्रह्मन्स्वयंभुवोद्गतौ
शतरूपां च संसृष्ट्वा कन्यां स मनवे ददौ ३२
तस्माच्च पुरुषाद्देवी शतरूपाव्यजायत
प्रियव्रतोत्तानपादौ प्रसूतिं चैव कन्यकाम् ३३
ददौ प्रमूर्तिं दक्षाय मनुः स्वायंभुवः स्वयम्
चतुराशीति लक्षाणि जीवांश्चापि तथा द्विजान् ३४
क्षत्रियांश्च तथा वैश्यान् विभो हि शूद्रजाँस्तथा
अंडजान्स्वेदजांश्चैव उद्भिजाँश्च जरायुजान् ३५
गंधर्वाप्सरसश्चैव ऋषिदेवगणांस्तथा
मनूँश्चैव महेन्द्रं च ससर्जभगवान्स्वयम् ३६
वसिष्ठ उवाच

भगवंस्त्वत्प्रसादेन श्रोतुमिच्छाम्यहं पुनः
लक्ष्म्या जलधिजाताया ब्रूहिमेकारणं विभो ३७
अग्निरुवाच
एतत्पृष्टं पुरा विद्वन् मैत्रेयेण पराशरात्
तदहं कथयिष्यामि गुह्याद्गुह्यतरं परम् ३८
मैत्रेय उवाच
क्षीराब्धौ श्रीः समुत्पन्ना श्रूयतेऽमृतमंथने
भृगोः ख्यात्यां समुत्पन्नेत्येतदाह कथं भवान् ३९
पराशर उवाचः
नित्यैवैषा जगन्माता विष्णोः श्री रनपायिनी
यथासर्वगतो विष्णुस्तथैवैवं द्विजोत्तम ४०
अर्थो विष्णुरियं वाणी नीतिरेषा नयो हरिः
बोधो विष्णुरियं बुद्धिर्धर्मोऽसौ सत्क्रिया त्वियम् ४१
सृष्टा विष्णुरियं सृष्टिः श्रीर्भूमिर्भूधरो हरिः
संतोषो भगवान् लक्ष्मीस्तुष्टिर्मैत्रेय सा सताम् ४२
पत्नीशाला मुने लक्ष्मीः प्रारवंशो मधुसूदनः
चितिर्लक्ष्मीर्हरिर्यूप इध्मा श्रीभगवान् कुशः ४३
सामस्वरूपी भगवानुद्गीतिः कमलालया
स्वाहा लक्ष्मीर्जगन्नाथो देवदेवो हुताशनः ४४
शंकरो भगवान् सौरिर्भूतिर्गौरी द्विजोत्तम
मैत्रेय केशवः सूर्यस्तत्प्रभा कमलालया ४५
विष्णुः पितृगणः पद्मा स्वधा शाश्वतपुष्टिदा
द्यौः श्रीः सर्वात्मकोविष्णुरवकाशोऽतिविस्तरः ४६
शशांकः श्रीधरः कीर्तिः श्रीस्तथैवानपायिनी
धृतिर्लक्ष्मीर्जगच्चेष्टा वायुः सर्वत्रगो हरिः ४७
जलधिर्द्विज गोविंदसावेला श्रीर्महामते
लक्ष्मीश्च स्वयमिंद्राणी देवेन्द्रो मधुसूदनः ४८
यमश्चक्रधरः साक्षात्धूम्राणी कमलालया
ऋद्धिः श्रीः श्रीधरो देवः स्वयमेव धनेश्वरः ४९
गौरी लक्ष्मीर्महाभागा केशवो वरुणः स्वयम्

श्रीर्देवसेनपृतना देवसेनापतिर्हरिः ५०
अवष्टंभो गदापाणिः शक्तिर्लक्ष्मीर्द्विजोत्तम
काष्ठालक्ष्मीर्निमेषोऽसौ मुहूर्तोऽसौ कलानु सा ५१
ज्योत्स्ना लक्ष्मीः प्रदीपोऽसौ सर्वसर्वेश्वरो हरिः
लताभूता जगन्माता श्रीर्विष्णुद्रुमसंस्थितः ५२
विभावरी तु श्रीर्देवी दिवसश्च गदाधरः
वरप्रदो वरो विष्णुर्वधूः पद्मवनालया ५२
नदस्वरूपी भगवान् श्रीर्नदीरूपसंस्थितिः
ध्वजश्च पुंडरीकाक्षः पताका कमलालया ५३
तृष्णा लक्ष्मीर्जगत्स्वामी लोभो नारायणः परः
रतिरौ च धर्मज्ञ लक्ष्मीगोविंद एव च ५४
किंचातिबहुनोक्तेन संक्षेपेणेदमुच्यते
देवतीर्यङ्गनुष्येषु पुंन्नाम्नि भगवान्स्वयम् ५५
स्त्रीनाम्नि श्रीश्च मैत्रेय न भेदो विद्यते परम् ५६
इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ मैत्रेय पराशर संवादे लक्ष्म्याः प्रादुर्भावो नाम तृतीयोऽध्यायः ३

## अध्याय ४

पराशर उवाच
इदं च शृणु मैत्रेय यत्पृष्टोहमिहत्वया
श्रीसंबंधंमयाप्येतच् श्रुतमासीन्मरीचितः १
दुर्वासाः शंकरस्यांशश्चचार पृथिवीमिमाम्
स ददर्श स्त्रजं विद्यामृषिर्विद्याधरीकरे २
संचारकाणामखिलं यस्या गंधेन वासितम्
अतिसेव्यमभृद्ब्रह्मन् तद्वनं वनचारिणाम् ३
उन्मत्तरूपधृग् विप्रः स दृष्ट्वा शोभनां स्त्रजम्
तां ययाचे वरारोहां विद्याधरवधूं ततः ४
याचिता तेन तन्वंगी मालां विद्याधरागना
ददौ तस्मै विशालाक्षी सारदा प्रणिपत्यतम् ५
तामादायात्मनो मूर्ध्निस्त्रजमुन्मत्तरूपधृक्

कृत्वा स विप्रो मैत्रेय परिवभ्राम मेदिनीम् ६
स ददर्श तमायातमुन्मत्तैरावतस्थितम्
त्रैलोक्याधिपतिं देवं सहदेवैः शचीपतिम् ७
तामात्मनः स शिरसः स्रजमुन्मत्तषट्पदाम्
आदायामरराजाय चिक्षेपोन्मत्तवन्मुनिः ८
गृहीत्वा मरराजेनु स्रगैरावतमूर्धनि
क्षिप्ताररराज कैलास शिखरे जाह्नवीं यथा ९
मदान्धकारिताक्षोऽसौ गंधोत्कृष्टेन वारणः
करिणाघ्राय निक्षिप्ता सा माला धरणीतले १०
ततश्चुक्रोध भगवान् दुर्वासा मुनिसत्तम
मैत्रेय देवराजं तं क्रुद्धश्चैनमुवाचह ११
ऐश्वर्यमत्त दुष्टात्मन् नतिस्तब्धोऽसिवासव
श्रियोधामस्रजं नूनं महत्तां नाभिवंदसे १२
प्रसाद इतिनोक्तं ते प्रणिपातपुरःसरम्
हर्षोत्फुल्लकपोलेन न चापि शिरसा धृता १३
मयादत्तामिमां मालां यस्मान्नबहुमन्यसे
त्रैलोक्यश्रीहतो मूढ विनाशमुपयास्यसि १४
मां मन्यसेऽन्यैः सदृशं भूतं शक्र भवान् द्विजैः
अतोऽवमाननंतस्मान् मानिना भवता कृतम् १५
महत्ता भवता यस्मात् क्षिप्ता माला महीतले
तस्मात्प्रणष्टलमीकं त्रैलोक्यं ते भविष्यति १६
यस्यसंजातकोपस्य भयमेति चराचरम्
तं त्वंमामतिगर्वेण देवराजावमन्यसे १७
पराशर उवाच
महेन्द्रो वारणस्कंधादवतीर्य त्वरान्वितः
प्रसादयामास तदा दुर्वाससमकल्मषम् १८
प्रसादयामास तदा प्रणिपातपुरः सरम्
प्रत्युवाच सहस्राक्षं दुर्वासा मुनिसत्तमः १९
नाहं कुपालुहृदयो न च मांभजते क्षमा
अन्ये ते मुनयः शक्र दुर्वाससमवैहि माम् २०

गौतमादिमिरन्यैस्त्वं गर्वमायादितो मुधा
अक्षांतिसारसर्वस्वं दुर्वासस एवैहि माम् २१
वशिष्ठाद्यैर्वयः सारैः स्तोत्रं कुर्वद्भिरुच्चकैः
गर्वगतोऽसियेनैवं मामेवाद्यावमन्यसे २२
ज्वलज्जट लापस्य भृकुटीकुटिलं मुखम्
निरीक्ष्य कस्त्रिभुवने ममयो न गतो भयम् २३
नाहंक्षमिष्ये बहुना कुमुक्तेन शतक्रतो
विडम्बनामिमां भूयः करोष्यनुनयात्मिकाम् २४
पराशर उवाच
इत्युक्त्वा प्रययौ विप्रो देवराजोऽपितंपुनः
आरु ह्यैरावतं ब्रह्मन् प्रययावमरावतीं २५
ततः प्रभृति निःश्रीकं सशक्रं भुवनत्रयम्
मैत्रेयासीदपध्वस्तं संक्षीणौषधिर्वारुधम् २६
न यज्ञा संप्रवर्तन्ते न तपस्यन्ति तापस्याः
न च दानादिधर्मेषु मनश्चक्रे तदा जनः २७
निःप्तत्वाः सकला लोका लोभादुपहतेन्द्रियाः
स्वल्पेपि हिवभूवुस्ते साभिलाषा द्विजोत्तमाः २८
यतः सत्वं ततो लक्ष्मीः सत्वं भूपेऽनुसारि च
निःश्रीकाणां कुतः सत्वं विना तेन गुणाः कृतः २९
बलशौर्याद्यभावश्च पुरुषाणां गुणैर्विना
लंधनीयाः समस्ताश्च बलशौर्यविवर्जिताः
भवत्यपध्वस्तमतिलंबितः प्रथितः पुमान् ३०
एवमत्यन्तनिःश्रीके त्रैलोक्ये सत्ववर्जिते
देवान् प्रति बलो योगं चक्रुदैतेयदानवाः ३१
लोभाभिभूता निःश्रीकादैरयाः सत्वविवर्जिताः
प्रिया विहीनैर्निःसत्वैर्देवाश्चक्रुस्ततो रणम् ३२
विजितास्त्रिदशा दैत्यैरिन्द्राद्याः शरणं ययुः
पितामहं महाभागं हुताशनपुरोगमाः ३३
यथाककथिते देवैर्ब्रह्मा प्राह ततः सुरान्
पराषरेशं शरणं ब्रजध्वमसुरार्दनम् ३४

उत्पत्तिस्थितिनाशानामहेतुं हेतुमीश्वरम्
प्रजापतिपतिं विष्णुमनन्तमपराजितम् ३५
प्रधानपुंसोरनयोः कारणं कार्यश्रूतयोः
प्रणतार्तिहरं विष्णुं स च श्रेयोविपास्यति ३६
एवमुक्त्वा सुरान् सर्वान् ब्रह्मा लोकपितामहः
तुष्टाव वाग्भिरिष्टाभिः परापरपतिं हरिम् ३७
ब्रह्मा उवाच
नमामि सर्वं सर्वेशमनन्तमजमव्ययम्
लोकधामधराभार मप्रकामभभेदिनम् ३८
नारायणमशीयांस मशेदाना मणीयमाम्
समस्तानां गरिष्टं यत् भूरादीनां गरीयसाम् ३९
यत्र सर्वं यतः सर्वमुत्पन्नं यत्पुरःसरम्
सर्वसूतश्चयो देवः पराणामपि यत्परः ४०
परः ---प्रात्पुरुषात् परमात्मस्वरूपधृक्
योगिभिश्चित्यनेयोऽसौ युक्तिहेतुर्मुमुत्तुभिः ४१
सत्सादयोः न संतीशे यत्र च प्राकृता गुणाः
स शुद्धः ---शुद्धेभ्यः पुमानाथः भसीदह ४२
कलाकाष्मनिमेषदि कालसूत्रस्यगोचरः
यस्यशर्श्चिर्न शुद्धस्य प्रसीदतु स नो हरिः ४३
प्रोच्यते परमेशो यो यः शुद्धोह्युपचारतः
प्रती---नो विष्णुरात्मायः सर्वदेहिनाम् ४४
यः कारणं च कार्यं च कारणस्यापि कारणम्
कार्यस्यापिचयः कार्यं प्रसीदतु स नो हरिः ४५
कार्यकार्यस्य यत्कार्यं तत्कार्यस्यापि यः स्वयम्
कार्यं कार्यवतो यश्च ततःस्मः प्रणताःश्च तम् ४६
कारणं कारणस्यापि तस्य कारणकारणम्
तत्कारणानां हेतुत्वं प्रणताःस्मः सुरेश्वरम् ४७
भोक्तारं भोज्यभूतं च सृष्टारं सृष्टिमेव च
कार्यकर्तृस्वरूपं तं प्रणताःस्मः परं पदम् ४८
विशुद्धं बोधवन्नित्य मजमव्ययमत्तयम्

अव्यक्तमविकार्य यत्तद्विष्णोः परमं पदम् ४९
न स्थूलं नैव सूक्ष्मं च प्रणमाभस्तमव्ययम्
यत्र देवा न मुनयो न एवं चापि शंकरः ५०
आनन्दि परमेशस्य तद्विष्णोः परमं पदम्
यद्योगिनः सदोद्युक्ताः पापपुण्यक्षयाक्षये ५१
पश्यन्ति प्रणमेन्नित्यं तद्विष्णोः परमं पदम्
शक्तयो यस्य देवस्य ब्रह्मविष्णुशिवात्मकम् ५२
भवन्ति भूतपूर्वस्य तद्विष्णोः परमं पदम्
सर्वेशसर्वभूतात्मन् सर्वसर्वाभयाच्युत ५३
प्रसीद विष्णो भक्तानां व्रजनो दृष्टिगोचरम्
यन्नावं भगवन् ब्रह्मा जानाति परमं पदम् ५४
तन्नता--मो ज--दाम तवसर्वगताच्युत
इत्येवं वचनान्येषां देवानां ब्रह्मणस्तथा ५५
ऊचुर्देवर्षयः सर्वे बृहस्पतिपुरोगमाः
यज्ञो यज्ञपुमान्नित्यो यः पूर्वेषां च पूर्वजः ५६
तन्नताः स्मो जगत्सृष्टुः सृष्टारमपि शोषणम्
भगवन् भूतभव्येश यज्ञमूर्तिधराव्यय ५७
प्रसीद प्रणतानां त्वमस्माकं देहिदर्शनम्
एष ब्रह्मा तथैवायं सहरुद्रैस्त्रिलोचनः ५८
सर्वादित्यैः समं पूषा पावकोऽयं सहाग्निभिः
अश्विनौ वसवश्चैमे सर्वे चैते मरुद्गणाः ५९
साध्या विश्वे तथा देवा देवेन्द्रश्चापि चेश्वरः
प्रणामप्रवणाश्चाथ दैत्यसैन्यपराजिताः ६०
शरणं त्वामनुप्राप्ताः समस्ता देवतागणाः
पराशर उवाच
एवं सर्वैः संस्तुतस्तु भगवान् शंखचक्रधृक् ६१
प्रददौ दर्शनं तेषां मैत्रेय परमेश्वरः
तं दृष्ट्वा ते ततो देवाः शंखचक्रगदाधरम् ६२
अपूर्वरूपसंस्थानं तेजसां राशिमूर्जितम्
प्रणम्य प्रणताः सर्वे संक्षोभस्तिमितेक्षणाः ६३

तुष्टुवुः पूराडरीकाद्मं पितामहपुरोगमाः
देवा ऊचुः
नमो नमो विशेषस्त्वं ब्रह्मा चापि पिनाकधृक् ६४
इन्द्रस्त्वमग्निःपवनो वरुणः सविता यमः
वसवो मरुतः संध्या विश्वेदेवा गणा भवान् ६५
योऽयंतवागतो देवसमीपं देवतागणः
सत्वमेव जगत्सृष्टर्यतः मर्दगतो भवान् ६६
त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारः प्रजापतिः
वेदावेद्यं च सर्वात्मन् तेजसा प्याययस्वनः ६७
तावदार्तिस्तथा वांछा तावन्मोहस्तथासुखम्
यावन्नायाति शरणं त्वामशेषाघनाशनम् ६८
तत्प्रसीद प्रसन्नात्मन् प्रपन्नानां कुरुष्व शम्
तेजसां नाथ सर्वेषां स्वशक्त्याप्यायनं कुरु ६९
एवं संस्तूयमानस्तु प्रणतैरमरैर्हरिः
प्रसन्नदृष्टिर्भगवानिदमाह स विश्वधृक् ७०
तेजसां भवतां देवाः करिष्याम्युपबृंहणम्
वदाम्यहं यत्क्रियतां भवद्भिस्तदिदं सुराः ७१
आनीय सहिता दैत्यैः क्षीराब्धौसकलौषधीः
मंथानं मंदरं कृत्वा नेत्रं कृत्वा च वासुकिम् ७२
मथ्यताममृतं देवाः सहाये मय्यवस्थिते
सामपूर्वं च दैतेयास्तत्र साहाय्यकर्मणि ७३
सामान्यफलभोक्तारो यूयं वाच्या भविष्यथ
मध्यमाने च तत्राब्धौ यत्समुत्पद्यतेमृतम् ७४
तत्पानाद्बलिनो यूयमजराश्च भविष्यथ
तथा चाहं करिष्यामि ते यया त्रिदशद्विषः ७५
न प्राप्यत्वमृतं देवाः केवलं क्लेशभागिनः
पराशर उवाच
इत्युक्त्वा देवदेवेन सत्यमेव ततःपुरा ७६
संधानमसुरैः कृत्वा यत्नवंतोऽमृतेऽभवन्
तत्रौषधीः समानीय देवदैतेयदानवाः

क्षिप्त्वा क्षीराब्धिपयसि शरदभ्रामलत्विषि
मंथानं मंदरं कृत्वा नेत्रं कृत्वाच वासुकिम् ७८
ततो मथितुमारब्धं मैत्रेय तरसाऽमृतम्
विबुधाः सहिताः सर्वे यत्र पुच्छं ततः कृताः ७९
कृष्णेन वासुकेर्दैत्याः पूर्वकाये निवेशिताः
ततश्च फणिनिश्वासवह्निनापहतत्विषः ८०
निस्तेजसोऽसुराः सर्वे बभूवुरमितद्युतः
तेनैव मुखनिश्वासवायुना स्वबलाहकैः ८१
पुच्छप्रदेशवर्षद्भिस्तदा चाप्यायिताः सुराः
क्षीरोदमध्ये भगवान् कूर्मरूपी स्वयं हरिः ८२
मंथानाद्रेरधिष्ठानं भ्रमतोऽभून्महामुने
रूपेणान्येन देवानां साध्यचक्रगदाधरः ८३
चकर्षनागराजानं दैत्यमध्येपरेण च
उपर्याक्रान्तवाञ्छैलं बृहद्रूपेण केशवः ८४
तथा परेण मैत्रेय यदृन्नष्टं सुरासुरैः
तेजसा नागराजानं तदाप्यायितवान् हरिः ८५
अन्येन तेजसादेवानुपबृंहितवान् विभुः
मथ्यमाने ततस्तस्मिन् क्षीराब्धौ देवदानवैः ८६
हविर्धान्य भवत्पूर्वं सुरभिः सुरपूजिता
जग्मुर्मुदं ततो देवा दानवाश्च महामुने ८७
व्याक्षिप्तचेतसश्चैव तेदेवाःस्तिमितेक्षणाः
किमेतदिति सिद्धानां दिवि चिंतयतां ततः ८८
बभूव वारुणी देवी मदाघूर्णितलोचना
कृतावर्तस्ततस्तस्मात्क्षीरोदाद्वासयञ्जगत् ८९
गंधेन पारिजातोऽभूद्देवस्त्रीनं दनस्तरुः
रूपौदार्यगुणोपेतस्तस्माच्चाप्सरसां गणः ९०
क्षीरोदधेः समुत्पन्नो मैत्रेय परमाद्भुतः
ततः शीतांशुरभवज्जगृहेतं महेश्वरः ९१
जगृहुश्च विषं नागाः क्षीरोदधिसमुद्भवम्
ततो धन्वंतरिर्देवस्तथाऽमृतवरंधरः ९२

विभ्रत्कमंडलुं पूर्णममृतस्य समुच्छ्रितः
ततः स्वस्थमनस्कास्ते सर्वे दैतेयदानवाः ९३
बभूवुर्मुदिताः सद्यो मैत्रेय मुनिभिः सह
ततः स्फुरत्कांतिमती विकाशकमलस्थिता ९४
श्रीदेवी पयसस्तस्माद्विकाशकरपंकजा
तां तुष्टुवुर्मुदायुक्ताः श्रीसूक्तेन महर्षयः ९५
विश्वावसुमुखास्तस्या गंधर्वाःपुरतो जगुः
धृताचीप्रमुखा ब्रह्मन् ननृतुश्चाप्सरोगणाः ९६
गंगाद्याः सरितस्तोयैः स्नानार्थमुपतस्थिरे
दिग्गजा हेमपात्रस्थग्रादाय विमलं जलम्
स्नापयांचक्रिरे देवीं सर्वदेवमहेश्वरीम् ९७
क्षीरोदरूपधृक् चास्यै मालामम्लानपंकजाम् ९८
ददौविभूषणान्यंगे विश्वकर्मा चकारह
दिव्यमाल्यांबरधरा स्नाताभूषणभूषिता ९९
पश्यतां सर्वदेवानां ययौ वक्षःस्थलं हरेः
ततोऽवलोकिता देवा हरिवक्षःस्थलस्थया १००
लक्ष्म्या मैत्रेय सहसा परां निर्वृत्तिमागताः
उद्वेगं परमं जग्मुर्दैत्या विष्णुपराङ्मुखाः १०२
त्यक्ता लक्ष्म्या महाभाग दीना विकलतां गताः
ततस्ते जगृहुर्दैत्या धन्वंतरिकरे स्थिताम् १०३
कमंडलुं महावीर्या यत्रास्ते तद्विजामृतम्
मायया लोभयित्वा तान् विष्णुः स्त्रीरूपसंस्थितः १०४
दानवेभ्यस्तदादाय देवेभ्यः प्रददौ प्रभुः
पुनः पपुः सुरगणाः सशक्राद्यास्तदामृतम् १०५
उद्यतायुधनिस्त्रिशा दैत्यास्तांश्च समभ्ययुः
पीतेऽमृते च बलिभिर्देवैर्दैत्यवमूस्तदा १०६
वध्यमाना दिशोभेजे पातालं च विवेशह
ततो देवा मुदायुक्ताः शंखचक्रगदामृतम् १०७
प्रणिपत्य यथापूर्वमशासत्तत्त्रिविष्टपम्
ततः प्रसन्नतां सूर्यः प्रययौ स्वेन वर्त्मना १०८

ज्योतींषि च तथा मार्गंप्रययुर्मुनिसत्तम
जज्वाल भगवांश्चोच्चैश्चारुदीप्तिर्विभावसुः १०९
धर्मे च सर्वभूतानां तदामतिरजायत
क्रियाजुष्टं च त्रैलोक्यं बभूव द्विजसत्तम ११०
शक्रश्चत्रिदशश्रेष्ठस्तदा श्रीमानजायत
सिंहासनगतः शक्रः संप्राप्य त्रिदिवं तथा १११
देवराज्ये स्थितो देवीं तुष्टावाब्जकरां ततः
इन्द्र उवाच
नमस्ये सर्वरत्नानां जननीमब्ज संभवाम् ११२
श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षःस्थलस्थिताम्
त्वं सिद्धिस्त्वं स्वधास्वाहा सुधा त्वं लोकपावनी ११३
संध्या रात्रिस्तथा भूतिर्मेधा श्रद्धा सरस्वती
यज्ञविद्या महाविद्या गुह्यविद्यासि शोभने ११४
आत्मविद्या च देवि त्वं विमुक्तफलदायिनी
आन्विक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च ११५
सौम्यासौम्यैर्जगद्रूपैस्त्वयैतद्देवि पूरितम्
कात्वन्या त्वामृते देवि सर्वयज्ञमयंवपुः ११६
अध्यास्ते देवदेवस्य योगिचिंत्यगदाभृतः
त्वया देवि परित्यक्तं सकलं भुवनत्रयम् ११७
विनष्टप्रायमभवत् त्वयेदानीं समेधितम्
भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान्नृणाम् ११८
शरीरारोग्यमैश्वर्यं रिपुपक्षक्षयः सुखम्
देवि त्वदृष्टिदृष्टानां पुरुषाणां न दुर्लभम् ११९
त्वं मातासर्वभूतानां देवदेवो हरिः पिता
तवैतत्तेजसा मातर्जगद्व्याप्तं चराचरम् १२०
मा नः कोशं तथा कोष्ठं नो गृहं नःपरिच्छदम्
नःशरीरं कलत्रं च त्यजेन्मा सर्वपाविनि १२१
मा पुत्रान् नः सुहृद्वर्गान्मापशून्नोविभूषणम्
मात्यजेद्व्राभदेवस्य विष्णुर्वक्षःस्थलाश्रया १२२
सत्येन सत्वशौचाभ्यां तथा शीलादिभिर्गुणैः

त्यद्धयन्ते नेतरे सद्यः संत्यक्ता ये त्वयामले १२३
त्वयाविलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः
कुलैश्च यैश्च पूज्यन्ते पुरुषानिर्गुणा अपि १२४
स श्लाध्यः सगुणी धन्यः सकुलीनः सबुद्धिमान्
सशूरः सचविक्रान्तो यस्त्वया देवि वीक्षितः १२५
सद्यो वैगुणयमायान्ति शीलाद्याः सकलागुणाः
पराङ्मुखी जगद्धात्री यस्यत्वं विष्णुवल्लभे १२६
न ते वर्णयितुं शक्ता गुणाञ्जिह्वापि वेधसः
प्रसीद देवि पद्माक्षि मास्मांस्त्याक्षीः कदाचन १२७
पराशर उवाच
एवं श्रीः संस्तुता सम्यक् प्राह दृष्ट्वा शतक्रतुम्
शृणवतां सर्वदेवानां सर्वभूतस्थिता द्विज १२८
श्रीरुवाच
परितुष्टास्मि देवेश स्तोत्रेणानेन ते हरे
वरं वृणीष्व यस्त्विष्टो वरदाहंतवागता १२९
इन्द्र उवाच
वरदायदि मे देवि वरार्हो यदिचाप्यहम्
त्रैलोक्यं न त्वया त्याज्यं एष एव वरः परः १३०
स्तोत्रेण च तवानेन यस्तोष्यत्यब्धिसंभये
स त्वया न परित्याज्यो द्वितीयोऽस्तु वरोमम १३१
श्रीरुवाच
त्रैलोक्यं त्रिदशश्रेष्ठ न त्यक्ष्याम्यपि वासव
मां स्तोष्यति नतस्याहं भविष्यामि पराङ्मुखी १३२
एवं ददौ वरं देवी देवराजाय वै पुरा
मैत्रेय श्रीर्महाभागा स्तोत्राराधनतोषिता १३३
भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वमुदधेःपुनः
देवदानवयत्नेन प्रसूताऽमृतमंथने १३४
एवं यदा जगत्स्वामी देवदेवो जनार्दनः
अवतारं करोत्येष तदाश्रीस्तत्सहायिनी १३५
पुनश्च पद्मादुद्भूता ह्यादित्योभूद्यदाहरिः

यदा च भार्गवो रामस्तदाभूद्धरिणी त्वियम्  १३६
राघवत्वे  भवेत्सीता रुक्मिणी कृष्णजन्मनि
अन्येषु चावतारेषु विष्णोरेषा सहायिनी  १३७
देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी
विष्णोर्देहानुरूपा वै करोत्येषात्मनस्तनुम्  १३८
यश्चैतच्छृणुयान्नित्यं लक्ष्म्यायश्च पठेन्नरः
श्रियो न विच्युतिस्तस्य गृहे यावत्कुलत्रयम्  १३९
पठ्यते यत्र चैवैषा गृहेषु श्रीर्महामुने
अलक्ष्मीः कलहाधारा न तेष्वास्ते कदाचन  १४०
एतत्ते कथितं ब्रह्मन् यन्मांत्वं परिपृच्छसि
क्षीराब्धौ श्रीर्यथा जाता पूर्वं भृगुसुता सती  १४०
इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ लक्ष्यी प्रादुर्भावो नाम चतुर्थोऽध्यायः

## अध्याय ५

वह्निरुवाच
एवमुक्तः स धर्मज्ञो मैत्रेयो ज्ञानिनां वरः  १
पुनः प्रोवाच विप्रेन्द्रं साधुश्लक्ष्णया गिरा
मैत्रेय उवाच
कथितं मे त्वया सर्वं यत्पृष्टोऽहं महामुने  २
भृगुसर्गात् प्रभृत्येषु सर्गोमे कथ्यतां पुनः
पराशर उवाच
भृगोः ख्यात्यां समुत्पन्ना लक्ष्मीर्विष्णुपरिग्रहा  ३
तथा धाताविधातारौ ख्यात्यां जातौ सुतौ भृगोः
आयतिर्नियतिश्चैव मेरोः कन्ये नगात्मनः  ४
धातृविधात्रोस्ते भार्ये तयोर्जातौ सुतावुभौ
प्राणश्चैव मृकंडश्च मार्कंडेयोमृकंडतः  ५
ततो वेदशिराजज्ञे प्राणस्यापि सुतं शृणु
प्राणस्य द्युतिमान्पुत्रो ह्यजवांश्च ततोऽभवत्  ६
ततोवंशो महाभाग विस्तारं भार्गवो गतः
पत्नी वरीचेः संभूतिः पूर्णमासमसूयत  ७

विराजाः सर्वगश्चैव तस्य पुत्रौ महात्मनः
वंशसंकीर्तने पुत्रान्प्रवद्त्येऽहं ततो द्विज ८
स्मृतिनेश्चांगिरसः पुत्रः प्रसूताः कन्यकास्तथा
सिनीवाली कुहूश्चैव राका चानुमतिस्तथा ९
अनुसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान्
सोमं दुर्वाससं चैव दत्तात्रेयं च योगिनम् १०
प्रीत्यां पुलस्त्यभार्यायां दत्तोनिस्तत्सुतोऽभवत्
पूर्ववन्मुनिः सोऽगस्त्यः स्मृतः स्वायंभुवेंतरे ११
कर्मशः शार्वरीवाश्च सहिष्णुश्च सुतत्रयम्
क्षेमा तु सुषुवे भार्या पुलस्त्यस्य प्रजापतेः १२
क्रतोश्च सन्नतिर्भार्या वालखिल्यानसूतसा
षड्त्रिंशानि सहस्राणि ऋषीणामूर्ध्वरेतसाम् १३
अंगुष्ठपर्वमात्राणां ज्वलद्भास्करतेजसाम्
ऊर्जायां तु वशिष्ठस्य सप्ताजायंत वै सुताः १४
राजो गात्रोऽर्धबाहुश्च वसनश्चानवस्तथा
सुतपाः शुक्रइत्येते सर्वेसप्तर्षयोऽमलाः १५
योसावग्निरभिमानी ब्रह्मणस्तनयोऽग्रजः
तस्मात्स्वाहा सुतानेताँस्त्रीनुदारौजसोद्विज १६
पावकं पावमानं च शुचिं चापि जलाशिनम्
तेषां च संततावन्ये चत्वारिंशच्च पंच च १७
कथ्यन्ते बहयश्चैते पितापुत्रत्रयं च यत्
एवमेकोनपंशाशत् वह्नयः परिकीर्तिताः १८
पितरो ब्रह्मणा सृष्टा व्याख्याता ये मया तव
तेभ्यः स्वधा सुतेऽसूतमैनीं वैकिरिणीं तथा १९
ते उभे ब्रह्मवादिन्यौ योगिन्यौच तथा द्विज
उत्तमज्ञानसंपन्ने सर्वैः समुदिते गुणैः २०
इत्येता दक्षकन्यानां कथितापत्यसंततिः
श्रद्धावान्संस्मरन्नित्यं नानपत्योऽभिजायते २१

इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ मैत्रेयपराशर संवादे
सर्गस्थितिनामोऽध्यायः ५ संपूर्णः

## अध्याय ६

वसिष्ठ उवाच
ब्रूहि मे भगवन्नग्ने परमाश्चर्यदां कथाम्
किं चक्रे भगवान् विष्णुः श्रियमापंकजेक्षणाम् १
उन्निद्रपद्मनयनां ज्वलत्पावकसन्निमाम्
कमलासनसंविष्टां विष्णुवक्षः स्थलाश्रयाम् २
लसच्चंद्रमुखांभोजां सर्वाभरणभूषिताम्
नूपुरैः रत्नसंयुक्तैः कटिमूत्रविराजिताम् ३
सम्यक् कथय देवेश परं कौतूहलंहिमे
वैवाहिक विधानं तज्ज्ञातुमिच्छाम्यहं विभो ४
अग्निरुवाच
सदानपायिनी लक्ष्मीर्विष्णुवक्षःस्थलालया
यथाहि भगवान्नित्यस्तथा तदनुवर्तिनी ५
लोकशिष्योपदेशार्थं यथाहि कृतवान् विभुः
वैवाहको विधिः सम्यक् श्रुतिदृष्टेन कर्मणा ६
तदहं ते प्रवक्ष्यामि लीलया चरितं हि यत्
एतत्पृष्टं पुरा ब्रह्मन् नारदेन महात्मना ७
पद्मासनसमासीनब्रह्मणे परमात्मने
ब्रह्मोवाच
भगवानुपयेमे तां यथा वक्ष्यामि ते शृणु ८
तदा रुद्रादयो देवा वशिष्ठाद्या महर्षयः
सर्वे समागताश्चैव गंधर्वाप्सरसां गणाः ९
शुद्धा स्वर्णमयी वेदी निर्मिता विश्वकर्मणा
वरुणेनाहृतं तोयं सर्वतीर्थभयं शुभम् १०
दंपत्योरभिषेकार्थं निर्मलं चापिपावनम्
नेदुर्दुंदुभयो देवा पुष्पवर्षैरवाकिरन्
मागधा बंदिनश्चापि युंजते स्तुतिमुत्तमाम्
ननृतुस्तत्र विप्रर्षे ह्युर्वश्याद्याप्सरोगणाः १२
जगुर्गंधर्वपतयो ललितं सुकंलान्वितम्

समित्कुशो हविश्चापि शमीमानीतवानहम्  १३
धृतवान् छत्रकं सूर्यो रत्नस्वर्णमयं शुभम्
चामरे कृतवंतौ तावश्विनावात्मनः प्रभोः  १४
शिवस्तांडवमारेभे नंद्यादिगणसंयुतः
हर्षेणोत्कुल्लनयनो नानावाद्यसमन्वितः  १५
चक्रेवेधाविधानेन विवाहं चैतयोः शुभम्
वसिष्ठ उवाच
कथं चक्रे विवाहं हि ब्रह्मासु कमलेक्षणः  १६
विप्राः के के समाहूता वेदवेदांगवेदिनः
अग्निरुवाच
विप्रानांदीमुखाः श्राद्धे वृद्धिनैमित्तिके तथा  १७
पितापितामहाद्याश्च चतुःपार्वणसंभवाः
कथयामि च ते ब्रह्मन् तेषां चैवामिधा यथा  १८
अग्निष्वात्ताबहिर्षद आज्यपा सोमपास्तथा
रश्मिपा उपहूताश्च तथैवायन्तुनः परे  १९
साप्रयोऽनप्रयश्चैव देवत्रा जेषमाणकाः
स्तोमतुष्टास्तवाचान्ये प्रोक्ता नांदीमुखाःसुराः  २०
आदित्या वसवो रुद्रा नासत्यावश्विनाविभौ
संतर्पयन्ते चैनान्वा उक्त्वा नांदीमुखान्सुरान्  २१
ब्रह्मणस्ते समादिष्टाः पितृमातृपसत्तमाः
तान्संतर्प्य ततः सृष्टिं कुरुते ह्यात्मसंभवः  २२
अन्येऽपिपितरो मर्त्या निवसन्ति त्रिविष्टपे
द्विविधास्ते प्रदृश्यन्ते सुखिनो दुःखिनःपरे  २३
ये ये श्राद्धानि यच्छन्ति मर्त्यलोके स्ववंशजाः
ते सर्वे तत्र संदृष्टा देववन्मुदिताः स्थिताः  २४
येषां प्रयच्छते नैव श्राद्धं किंचित्स्ववंशजाः
दुःखिता दुर्भ गास्तेऽत्र दृश्यन्ते ते दिवौकसः  २५
ते सर्वे तत्र संहृष्टा देववन्मुदिताःस्थिताः
भक्त्या हृष्टा महाराज सहस्राक्षप्रपूजिताः  २६
तथान्ये विविधाः सर्वे प्रस्थिताः स्वेन कर्मणा

पितृलोकं महाराज दुर्लभं त्रिदशैरपि २७
तान् दृष्ट्वाप्रस्थितान्सर्वान् पितरोमर्त्यसंभवाः
क्षुत्पिपासार्दिता ये च ते ऊचुर्दैन्यमाश्रिताः २८
स्तुत्वार्थसंस्तुतैर्दिव्यैः पितृसूक्तैश्च सत्तमैः
वेदोक्तैरपरैश्चैव पितृतुष्टिकरैः परैः २९
ततः प्रोचुश्च संहृष्टाः पितरस्तान्सुरोद्भवाः
प्रसन्नाःस्मो वयं सर्वे युष्माकं शंसितव्रताः ३०
तस्माद्ब्रूत वयं येन यच्छामो वो हृदि स्थितम्
पितरःऊचुः
वयं हि पितरः ख्याता मनुष्याणामिहागताः ३१
स्वर्गे स्वकर्मणा नित्यं निवसामः सुरैः सह
विमानेषु पवित्रेषु संस्थिताः सर्वं तोदिशः ३२
वांछितेषु च लोकेषु यामोध्वजपताकिषु
हंसबर्हिणजुष्टेषु संसेव्या वनिता गणैः ३३
गंधर्वैर्गीयमानाश्च स्तूयमानाश्च गुह्यकैः
परं संतिष्ठमानानामस्माकं त्रिदशैः सह ३४
अत्यर्थं जायते तीव्रा क्षुत्पिपासातिदारुणा
यस्यां मन्यामहे चित्ते वह्निमध्यागता वयम् ३५
भक्षयामः किमेतान्हिपक्षिणो विविधानपि
हंसादीन्मधुरालापान् खङ्गान् शल्लान्मृगांस्तथा ३६
यदि कश्चित्क्षुधाविष्टः कंचिदादाय यक्षिणम्
गुप्तो गृह्णाति भक्षार्थं दृंतुं शक्नोतिसोऽपिन ३७
अजराश्चामराश्चैव स्वर्गे ये स्वर्गगाः खगाः
तथा मनोरमा वृक्षा नंदनादिवनेषु च ३८
फलिता ये प्रदृत्यन्ते प्राप्याश्चापि मनोरमाः
तत्फलानि च यत्सर्वे गृह्णीमः पितरो यदि ३९
न लभ्यंज्ञे च यत्नेन समाकृष्टानि तान्यपि
एतल्लेखापगातोयं तृषार्ता यदि यत्नतः ४०
आदिवामो न हस्तेषु चहते न पुनः स्पृशेत्
भुंजानश्च न वेऽप्यत्र दृश्यतेऽत्र पिबह्यपि ४१

तकस्मात्रिविष्टये वासो ह्यस्माकं पोरदारुगः
एते सुरगणाः सर्वे चान्ये गुह्यकादयः ४२
दृश्यन्तेऽत्र विभानस्याः सर्वे संहृष्टमानसाः
ज्ञुत्पिपासापरित्यक्ता नानाभो न समाश्रयाः ४३
कदाचित्रवयं सर्वे भवामस्त्रिदश इव
ज्ञुत्पिपासापरित्यक्तां नानाभोनसमाश्रयाः ४४
तत्किं कारणमेतद्धि ज्ञुत्पिपासा प्रजायते
आकस्मिकी च बाधा नः कदाचिच्च प्रणश्यति ४५
तथा कुरुत भद्रं नो यथा तुष्टिः प्रजायते
शाश्वतीवै यथान्येषां देवानां स्वर्गदासिनाम् ४६
भूप हि पितरो यस्माद्देवानां पाहितात्मनाम्
अयंचैव मनुष्याणां तेन नः शरणं गताः ४७
पितर ऊचुः
अस्माकमपि चैवेषा कष्टावस्था प्रजायते
शक्राया विबुधा ह्यग्राः श्राद्धं यच्छन्तिनो यदा ४८
ततश्चागत्य ते सर्वे देवान्संप्रार्थयामहे
ततस्तृप्तिं प्रगच्चामस्तैर्देवैस्तर्पितादयम् ४९
युष्माकं वंशजा ये च प्रयच्छन्ति समाहिताः
कथं न तृप्तिमायातास्ते सर्वे तैः प्रतर्पिताः ५०
यत्रप्रसादिभिर्वश्यैर्न तप्यन्ते कथंचन
ज्ञुत्पिपासार्दिताः सर्वे ते तदास्युन संशयः ५१
किं पुनर्नरकस्थाये धर्मराजतिवेशने
एतद्धिकारणं प्रोक्तं युष्माकं च कथंचन ५२
ज्ञुत्पिपासोद्भवं रैप्तुं युष्माभिर्यदुदीरितम्
तदस्माकं विभागश्चेद्रूपं गच्छधसत्तमाः ५३
सर्वकव्यस्य दत्तस्यतत्कुर्मो विहितं शुभम्
ब्रह्माणं प्रार्थयित्वाच स्वयं गत्वा तदन्तिकम् ५४
बाडभित्येव तैरुक्तैस्तत आदाय वानपि
दिव्याः पितृगणाः प्राप्ता विधेः सदनमुत्तमम् ५५
नांदीमुखान्पुरस्कृत्य पितृन्पांस्तर्पयेद्विधिः

सृष्टिकालेऽपि संप्राप्ते वृद्धिकामः सुरेधरः ५६
अथ तैःसरते सर्वे स्तुत्वा तं कमलासनम्
प्रणिपत्य स्थिताः सर्वे पितरो विनयान्तिताः ५७
पितृस्तांन्विनयोपेतान्मणिपातपुरःसुरान्
विधिःप्रोवाच विधिवत् सान्त्वयन् श्लक्ष्णयागिरा ५८
ब्रह्मोवाच
किमर्थं पितरः सर्वे समायाता यमान्तिकम्
देवताभिर्गवामाध समङ्गयाः सर्वदास्थिताः ५९
पितर ऊचुः
पितरो यानवा ह्येते स्वर्गप्राप्ताः स्वकर्मभिः
देवानां मध्यसंस्थाश्च पीडयन्ते क्षुत्पिपासया ६०
यदा यच्छन्ति नो वेश्याः कथंचैव प्रमादतः
तदा गच्छन्ति नोतृप्तिं यथायांतिसदासुराः ६१
तदा तैः प्रायं नास्माकं कृता शाश्वततृप्तये
न च शक्ता वयं दाशे न त्वां समुपस्थिताः ६२
यदा स्युर्देवता व्यग्रास्तदास्माकमपि प्रभो
कव्यं विना भवेदेषा दशाकष्टा सुरेश्वर ६३
तस्मात्कुरु प्रसादं नः सममेतैः सुरेश्वर
यथा स्याच्छाश्वती तृप्तिः स्वस्थानस्थायिनामपि ६४
एतेऽस्माकं प्रदास्यन्ति कव्यं यन्निजत्रंशजैः
प्रदत्तं तेन संप्राप्ता वयं देव त्वदन्तिकम् ६५
देवानां श्चैव कर्तव्यं तद्यास्माकं प्रतृप्तये
वराः क्रियाभिहीनं तन्नतेषां विद्यते क्रिया ६६
पितृनुद्दिश्य यत्कव्यं ब्राह्मणेभ्यः प्रदीयते
स्नातैर्धाताम्पैर्मर्त्यैस्तद्भवेत्तृप्तिदं महत् ६७
पितृणां सर्वदेवेश इत्येषा वैदिकी श्रुतिः
न सुतस्याधिकारोऽस्ति देवानां चद्विजादिवत् ६८
पियूषमपि तैर्दत्तं तन्न नः स्यात्तु तृप्तये
तस्मान्मानुपदत्तैर्नो यथा कव्यैः प्रजायते ६९
स्वर्गस्थानां परा तृप्तिः सममेतैस्तथा कुरु

अग्निरुवाच
तच्छ्रुत्वा सुचिरं ध्यात्वा ब्रह्मा लोकपितामहः ७०
तानुवाच सतः पितॄन् सर्वानृषिगणोत्तम
ब्रह्मोवाच
अस्मिंस्त्रेतायुगे संज्ञा हव्यकव्यसमुद्भवा ७१
संप्रयाता युगे ब्रह्मन् कलौ न प्रभविष्यति
यथा यथा युगानां वैहास एव भविष्यति ७२
तथा तथा जना दुष्टा भविष्यंत्यन्यभक्तिकाः
पाखण्डधर्मनिरता वेदाचारविनिंदकाः ७३
पितृमातृगुरुद्वेषपरातिथिविनिंदकाः
नदास्यन्ति यथोक्तानि ते कव्यानि कथंचन ७४
ततः कष्टतरावस्था पितॄणां संभविष्यति
तस्मादहं करिष्यामि सुखोपायं शरीरिणाम् ७५
येन सतर्पिता यूयं परां तृप्तिमवाप्स्यथ
पितुः पितामहस्यैतत्तत्पितुश्च ततः परम् ७६
समुद्देशेन दत्तेन ब्राह्मणेभ्यः प्रभक्तितः
सर्वेषां स्यात्परा तृप्तिर्यावन्मे पितरोऽधुना ७७
तथा मातामहानां च पत्नेनास्त्यत्रसंशयः
त्रिभिः संतर्पितास्तेऽपि तर्पिताः स्युर्यथावधि ७८
युष्माकं तृप्तये यश्च सुखोपायो भविष्यति
तं श्रूयतां महाभागः गदतो मम सांप्रतम् ७९
पितृनन्येनयेनैव समुद्दिश्य द्विजोत्तमान्
तर्पयिष्यन्ति तेनैव पिंडान्दास्यन्ति भक्तितः ८०
तन्नाम्ना तेन वस्तृप्तिः शाश्वती संभविष्यति
तस्माद्गच्छत संतुष्टा स्वानि स्थानानि पूर्वजाः ८१
ततस्ते सहिताः स्वेषु स्वानि स्थानानि भेजिरे
विमानैः सूर्यसंकाशैर्गत्वापि च द्विजोत्तम ८२
अथ काले गते ब्रह्मन् कष्टेन महता ततः
तच्छापि न ददुः श्राद्धं मर्त्यास्त्रिपुरुषं चयत् ८३
नित्यं पितॄन् समुद्दिश्य बहवोऽत्र द्विजोत्तम

समेत्याथपुनः सर्वे ब्रह्माणं शरणं गताः ८४
प्रोचुश्च प्रणिपत्योच्चैः सुदीनाः प्रपितामहम्
भगवन्नप्रयच्छन्ति नित्यं वो वंशसंभवाः ८५
श्राद्धानि दौस्थ्यमापन्नास्तेन सीदामहेवयम्
यथापूर्वं तथद्यैव तमुपायं प्रचिंतय ८६
किंचित्तेन दरिद्रा वै प्रीणयन्ति च ते पितृन्
अग्निरुवाच
तेषां तद्वचनं श्रुत्वातानाह प्रपितामहः ८७
कृपाविष्टो द्विजेन्द्राशु सर्वान् पितृगणांस्तथा
सत्यमेतन्महाभागा दौस्थ्यं यान्ति दिनेदिने ८८
जना यथा यथा यांति युगं श्रेष्ठं च पृष्ठतः
तथापि च करिष्यामि युष्मदर्थमसंशयम् ८९
उपायं नित्यसंतृप्तिर्येनचात्र भविष्यति
अमानाम रवे रश्मिः सहस्रप्रमुखंस्थितः ९०
तस्मिन्वसति येनेन्दुरमावास्या ततःस्मृता
तस्मिन्नहनि ये श्राद्धं पितृनुदिश्य चात्मनः ९१
करिष्यन्ति नराभक्त्या ते भविष्यन्ति सुस्थिताः
धनधान्यसमोपेताः सर्वशत्रुविवर्जिताः ९२
अपभृत्युपरित्यक्ता मम दाक्यान्न संशयः
अग्निरुवाच
तस्य तद्वचनं श्रुत्वा बभूवुर्हृष्टमानसाः ९३
पितरः कव्यमासाद्यप्रहृष्टेनान्तरात्मना
ययुः स्वानि निकेतानि प्रेषिताः पद्मयोगिना ९४
अमावास्या दिनं प्राप्य श्राद्धं दृत्तं स्ववंशजैः
संतुष्टाः सायमात्रं ते संतस्थुर्हृष्टमानसाः ९५
गच्छता त्वथ कालेन दौःस्थ्यं प्राप्य नराभुवि
दर्शेऽस्मिन्नपि नो श्राद्धं प्रायःकुर्वन्ति केचन ९६
ततः पितृगणाः सर्वे ये दिव्या ये च मानुषाः
क्षुत्पिपासाकुला भूयो ब्रह्माणं शरणं गताः ९७
प्रोचुश्च प्रणिपत्योच्चैस्ते समेताः पितामहम्

परमं दैन्यमास्थाय बाष्पगद्गदया गिरा ९८
प्रभो चन्द्रक्षये श्राद्धं प्रोक्तं मास्सं त्वया विभो
अस्माकं प्रीणनार्थाय यत्करिष्यन्ति मानवाः ९९
दुःस्थास्तेऽपिचनोकुर्युः प्रायशस्तु पितामह
तेनास्माकं परापीडा क्षुत्पिपासासमुद्भवा १००
तस्मात्कुरु प्रसादं नो यथापूर्वं सुरेश्वर
तथापि दुःस्थितालोके तर्पयिष्यन्ति नो जनाः १०१
अग्निरुवाच
अथ ब्रह्मापि संचित्य तानुवाच पितामहः
युष्मदर्थं मयोपायश्चिन्तितः पितरो लघुः १०२
येन तृप्तिं परां यूयं गमिष्यथ मुदान्विताः
अमावास्योद्भवं श्राद्धमलब्ध्वा प्रतिवत्सरम् १०३
यथा मम प्रसादेन तच्छृणुध्वं समाहिताः
आषाढयाः पंचमे पक्षे कन्यासंस्थे दिवाकरे १०४
मृताहनिपितृन्येवै श्राद्धं दास्यन्ति मानवाः
तस्यसंवत्सरं यावत्तृप्ताःस्यु पितरो ध्रुवम् १०५
एवंज्ञात्वा करिष्यन्ति पितृपक्षे नरा भुवि
श्राद्धं नूनं न संदेहो भविष्यथ सुतर्पिताः १०६
यावत्संवत्सरं तेन ह्येकेन पितृसत्तमाः
तस्मिन्नपि तु यः श्राद्धं युष्मभ्यं न प्रदास्यति १०७
शोकेनापि दरिद्रोऽसावंत्यजत्वमुपैष्यति
आसनं शयनं भोज्यं स्पर्शं संभाषणं तथा १०८
ये करिष्यिन्ति तैः सार्धतेऽपिपापतरा नराः
न तेषां संततिर्वृद्धिं प्रयास्यति कथंचन १०९
नसुखं धनधान्यं च तेषां भावि कथंचन
तस्माद्गच्छत चाव्यग्राः स्वस्थानं पितरोध्रुवम् ११०
कलिकालेऽपि संप्राप्ते दारुणे निर्धनेजने
वर्षान्ते श्राद्धमेकं हि प्रकरिष्यन्ति मानवाः १११
येनाखिलं भवेद्वर्षं युष्माकं प्रीतिरुत्तमाः
अग्निरुवाच

तच्छ्रुत्वा पितरोहृष्टाजग्मुःस्वंस्वं निकेतनम्  ११२
वर्षान्तेऽपि समासाद्य श्राद्धंनस्युब्रुभुक्षिताः
अथयेऽत्र दुरात्मानो निःशंकाः कृपणात्मकाः  ११३
कलिना मोहिताः श्राद्धं वत्सरान्तेऽपिनो ददुः
तेषां च पितरो भूयो दिव्यैः पितृभिरन्विताः  ११४
ब्रह्माणं शरणं जग्मुः प्रोचुस्ते दीनमानसाः
भगवन्वत्सरस्यान्ते कन्यासंस्थे दिवाकरे  ११५
अस्माकं वंशजाः श्राद्धं वत्सरान्तेऽपिनोददुः
तेन संपीडिता देव क्षुत्पिपासासमाकुलाः  ११६
वयं शरणमापन्नास्तत्प्रतीकारमाचर
यथापूर्वं महाभाग वदोपायं लघूत्तमम्  ११७
एकाहिकेन श्राद्धेन येनास्माकं च शाश्वतीः
प्रीतिः संजायते देव त्वत्प्रसादात्सुरेश्वर  ११८
वंशक्षयेऽपि संजाते नास्माकं पतनं भवेत्
अग्निरुवाच
तेषां तद्वचनं श्रुत्वा चिरंध्यात्वा पितामहः  ११९
कृपया परयाविष्टस्ततः प्रोवाच सादरम्
ब्रह्मोवाच
अन्यो युष्मत्प्रतृष्टयर्थमुपायश्चिंतितो मया  १२०
स लघुयोनवोऽत्यन्तं तृप्तिर्भवति शाश्वती
माङ्गल्ये समनुप्राप्ते वृद्धिनैमित्तहेतवे  १२१
वृद्धिश्राद्धं च ये कुर्युः पितृभक्तिपरायणाः
देवानां च पितृणां च प्रकुर्वन्ति नरोत्तमाः  १२२
श्राद्धमाभ्युदयं चैव तुष्टयर्थमृषिसत्तमाः
अथोपायोपिचान्योस्ति कथयिष्यामि तच्छृणु  १२३
गयाशिरः समासाद्य श्राद्धं दास्यन्तियेऽत्रवः
अप्येतस्य प्रभावेण दिव्यांगति मवाप्स्यथ  १२४
अपिपापात्मनः पुंसो विप्रघ्नस्यापिदेहिनः
अपिरौरवसंस्थस्य कुंभीपाकगतस्य च  १२५
प्रेतभावं गतस्यापि यस्य श्राद्धं प्रदास्यति

गयाशिरसि वंशस्य तस्य मुक्तिर्भविष्यति १२६
एतन्मम वचः श्रुत्वा सांप्रतं भुविमानवैः
गयाशिरसि सुव्यक्तं युष्माकं मुक्तिदायकम् १२७
अग्निरुवाच
तच्छ्रुत्वा पितरस्तस्य वचनं परमेष्ठिनः
अनुज्ञातास्ततस्तेन स्वानिस्थानानिभेजिरे १२८
ततः प्रभृति श्राद्धानि प्रवृत्तानि धरातले
पिंडदानसमेतानि यावदापुरुषत्रयम् १२९
पूर्वं ब्रह्मादितः कृत्वा येकेचित्पुरुषागताः
परलोकं समुद्दिश्य तान्नरान् शक्तितो तृप १३०
तत्संख्यानां द्विजेन्द्राणां दत्तवंतोऽपिवांछितम्
लोकेशुभमिदं श्राद्धं दरिद्राणां सुखावहम् १३१
पितृणांदेवतानां च मनुष्याणां सुतृप्तिदम्
तस्माच्छ्राद्धं प्रकर्तव्यं पुरुषेण विजानता १३२
पितृणां वांछता तृप्तिं कालेष्वेतेषु यत्नतः
गयायां च विशेषेण लोकद्वयमभीप्सुना १३३
न ददाति नरः श्राद्धं पितृणां चंद्रसंक्षये
क्षुत्पिपासापरीतांगाः पितरस्तस्य दुःखिताः १३४
प्रेतपक्षं प्रतीक्षन्ते गुरुवांच्छासमन्विताः
कर्षका जलदं यद्वद्विना नक्तमतन्द्रिताः १३५
प्रेतपक्षेव्यतिक्रान्ते यावत्कन्यांगतो रविः
तावच्छ्राद्धं प्रवाञ्छन्ति दत्तं स्वैः पितरः सुतैः १३६
ततस्तुलागतेप्येके सूर्ये वांछन्ति वै द्विज
श्राद्धं स्ववंशजैर्दत्तं क्षुत्पिपासासमाकुलाः १३७
तस्मात्स्ववंशजैः कार्यं श्राद्धं चाभ्युदये शुभम्
तेन षाण्मासिकी तृप्तिर्भवत्येव न संशयः
पितरो हृष्टमनसो जायन्ते दिवि हर्षिताः १३८
तस्मात्स्ववंशजैः कार्यं श्राद्धं चैतदतन्द्रितैः
तेन संतोषिताः स्वेषां कुर्वन्ति च शुभं महत् १३९
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ आभ्युदयिक प्रशंसा नाम षष्ठोऽध्यायः

## अध्याय ७

वसिष्ठ उवाच
कथमुद्वाहिता लक्ष्मीः किंकृतंहि द्विजोत्तमैः
श्राद्धं च लोकशिक्षार्थं कथं हि कृतवान् विभुः १
एतन्मे सर्वमाचक्ष्व परं कौतूहलं हि मे
अग्निरुवाच
एतदेव पुरापृष्टं वेधसे च मरीचिना २
तदहं संप्रवक्ष्यामि शृणुष्वैकाग्रमानसः
ब्रह्मोवाच
चतुर्विंशतिजातीयाः समायाता महर्षयः ३
ततो हृष्टमना विष्णुरर्हणां कृतवान् विभुः
पाद्यमर्घ्यं तथार्चां च बहुपुष्पोपहारकैः ४
श्राद्धे नांदीमुखान् विप्रानवृणोद्भगवान्हरिः
वृद्धिश्राद्धं च कृतवान् लोकानां हितमेधया ५
ब्रह्माणं च पुरोधाय पितॄणां तुष्टिकाम्यया
ततो गीतं जगुः सर्वा मातरः सुभगाः शुभाः ६
भेरीदुंन्दुभयो नेदुर्वाद्यंवाद्यपरायणाः
ननृतुरुद्धताः सर्वा स्तथा चाप्सरसोमुदा ७
गंधर्वाः सकलं सर्वे जगुरुत्फुल्ललोचनाः
सुवेदं विविदुर्विप्रा नांदीमुखपुरःसराः ८
सर्वे देवाः स्थितास्तत्र पुष्पवर्षाणि भेजिरे
अथ तैर्ब्राह्मणैः सार्धमाजगाम स्वयं हरिः ९
लक्ष्म्या सह तदा सर्वैर्माङ्गल्यैर्विविधैस्तथा
लक्ष्म्याः करग्रहंचक्रे भगवान् हरिरीश्वरः १०
समक्षमिन्द्ररुद्राणां ब्रह्माग्निवरुणात्मनां
हविः पल्लवलाजानां पुष्योधूमः समुच्छ्रितः ११
चंचले च तयोर्नेत्रे ह्यवेक्षेते परस्परम्
वेद्यां गतो महाविष्णुः सर्वदेवैः प्रपूजितः १२
मागधैर्वंदिभिश्चापि स्तुतः सर्वजनप्रियः

माङ्गल्यान्यथावर्तंत चत्वारि विदुषां वर  १३
वेदानां ध्वनिभिः सार्धं नांदीमुखमुखेरितैः
देवानां मातरश्चापि माङ्गल्यार्थं प्रचक्रिरे  १४
वर्धापनं ततश्चापि लक्ष्मीलक्ष्मीशयोस्तथा
आशीर्भिर्वेदतं त्रोक्तैर्विप्रा नांदीमुखास्तथा  १५
वर्धापयामासुरथो वेदवेदांगपारगाः
ब्रह्मण्याश्चसुशीलाश्च सदाचारपरायणाः  १६
तपोनिष्ठा यज्ञनिष्ठाः पूजितास्तुसुरैरिह
शापानुग्रहणे दक्षाः पूज्या पूज्यतमास्तथा  १७
अभिषेकं ततश्चक्रु सर्वतीर्थोदकैः शुभैः
उपयेमे विधानेन लक्ष्मीं कन्यां हरिस्तदा  १८
वेदोक्तेन सुशीलां वा इंदीवरसमेक्षणाम्
प्रस्फुरच्चन्द्रवदनां हर्षेणोल्लसितेक्षणाम्  १९
एवमुद्वाह्य विधिवद्देवान् सर्वान् सकिन्नरान्
संमान्य भोज्यवस्त्राद्यैर्ना नालंकारभूषणैः  २०
प्रस्थाप्य विधिवत् विप्र चक्रे पूजां सविस्तराम्
नांदीमुखेभ्यो विप्रेभ्यो दद्याद्विष्णुरथोऽच्युतः  २१
एकैकस्य राथा दत्तं गयामष्टोत्तरं शतम्
सुवर्णामुक्तारचितं रत्नमाणिक्यशोभितम्
सर्वोपहारसंयुक्तं सवत्सं च सुशोभितम्  २२
तथा पंचशतं दत्तं भारस्यचसुवर्णकम्
सर्वेभ्यो भूसुरेभ्यश्च दत्ताभूमिरियं तदा  २३
तेभ्यस्तथा द्विजोभ्योऽथ रथाश्चमहिषीगणः
असंख्यातस्तथा मुक्ता वासोलंकारभूषणम्  २४
तथाखानिःसुवर्णानां शुभा भूरुहसंस्थिता
एवं दत्तं तदा दानं कथ्यते किं द्विजोत्तम  २५
मरीचिरुवाच
के विप्रास्ते महात्मानः कुतस्ते च समागताः
तेषाम् च शुभनामानि तन्नोवद सुविस्तरात्  २६
येषां प्रभावो भगवन् कथ्यते च त्वयाविभो

सुयोग्यायेहि विख्याता प्रसिद्धाः पृथिवीतले २७
ब्रह्मोवाच
शृणुष्वावहितो भूत्वा कथयामि द्विजोत्तम
तेषामागमनं चैव विवाहे मेशयो स्तथा २८
स्थानं चापि तथा ब्रह्मन्नभिधानं सुशोभनम्
महिमापि तथा चाशु प्रोच्यते द्विजसत्तम २९
गोदातीरे समासीनो वेदवेदांगपारगः
कौडिन्यइति विख्यातः समानीतस्तदा द्विज ३०
ततः पश्चिमदिग्भागे वेदभूषणभूषितः
भारद्वाजः सदाचारो मुख्यो ब्राह्मणसत्तम ३१
गंगातीरे समासीनः श्रुतिस्मृतिपुराणगः
उशना दोषरहितः सदेन्दुरिव राजते ३२
गोमत्थादक्षिणे भागे तपश्चारी द्विजोत्तमः
चन्द्रादित्याभिधो विदष्वेद्रादित्यइवापरः ३३
रेवातीरे शुभेस्थाने गौतमो मुनिसत्तमः
अहुतःसोऽपि मनुजो विष्णुना शुभवर्त्मना ३४
प्रयागात्सुसमायातः कौशिलः शुभवर्त्मकः
कपिलश्च समायातस्तथा वै द्विजसत्तम ३५
अरण्ये जंवुकाख्ये च सर्वतीर्थमयेशुभे
आत्रेयः सर्वधर्मज्ञः सदाचारपरायणः ३६
गुह्यारण्ये समासीनो नाम्नोपमन्युको द्विजः
सोऽपितत्र समानीतः सदा कल्मषनाशनः ३७
वत्सिसो वसते भूमौ ब्रह्मारण्ये द्विजोत्तम
ततः सोऽपि समायातो विष्णुनाहूत एव च ३८
इलावर्तस्य वर्षस्य पश्चिमां दिशमास्थितः
अगिराश्च समायात उद्वाहेमेशयोस्तदा ३९
ततश्चोत्तरदिग्भागे बर्हदोनाम विश्रुतः
तथा गार्ग्यइति ख्यातः समायातस्तदैदहि ४०
जातूकर्णोथवैनाम वेत्रवत्यां सदा स्थितः
उत्तरंतीरमास्थाय तदा यातः सुशोभनः ४१

मुद्गलाख्यः सदाचारः सुशीलो वेदपारगः
कृष्णाहूतः समायातः श्राद्धे नांदीमुखे द्विजः ४२
कृष्णासिर्वेदवेदांगः सर्वशास्त्रार्थवित्तमः
श्राद्धेचाभ्युदये योग्यः कृष्णेनानीत एव हि ४३
विंध्याचलोत्तरे शृङ्गे कौशिको मुनिसत्तमः
लोककिश्च समायातः संभावयितुमीश्वरम् ४४
कश्यपः सर्ववेदज्ञस्तस्य दक्षिणतःस्थितः
आजगाम तदाहूतः श्राद्धकर्मणि मुख्यगः ४५
शांडिल्यः सर्वपापघ्नो दर्शनेनाशु वै द्विज
तदानीतः सुरेन्द्रैश्च विष्णुभक्तिपरायणः ४६
सर्वतीर्थसमौ शान्तौ सदापूज्योजनेष्वथ
अग्निवेश्यः समायातः भार्गवश्च तथैवहि ४७
पूष्करे सुमहत्तीर्थे स्थितिमन्तौ तपोधनौ
वत्ससोऽथ जगामाशु वशिष्ठोऽपि तथैव हि ४८
उत्तरस्यां दिशिस्थौ यौ गंगातीरे समाश्रितौ
एते महर्षयः सिद्धाः समायातास्तपोधनाः ४९
यतः प्रवर्तिता नूनं विप्रा नांदीमुखा अभी
चतुर्विंशतिसंख्याता वेदवेदाङ्गवेदिनः ५०
धर्मनिष्ठास्तपोनिष्ठाः सर्वदूषणवर्जिताः
निष्कलंकाः भुवपुषः सदाचारपरायणाः ५१
दृष्ट्वातांश्च समायातान् वेदवेदाङ्गवेदिनः
मुदं प्राप परां ब्रह्मन् सर्वलोकपितामहः ५२
सर्वेशः शरणं देवो ब्रह्मण्यः सद्भिरन्वितः
परमात्मस्वरूपोऽसौ योगिनां परमोगुरुः ५३
वरेण्यो वरदो विष्णुर्ब्रह्मेशानस्वरूपधृक्
जितेन्द्रियो जितामित्रो जितक्रोधो जितासुरः ५४
ब्रह्मेशोब्रह्मविद् ब्रह्मा ब्रह्मण्यो ब्राह्मणप्रियः
सर्वाधारो निराधारो निरीहो जनताप्रियः ५५
मरीचिरुवाच
श्रुत्वावैवाहिकं कर्म त्वत्तः श्रीपरमात्मनोः

न तृप्तिमधिगच्छामि तथा नांदीमुखीं कथाम् ५६
कथयस्व प्रसादेन तैर्विप्रैः किमकारि यत्
पराशर उवाच
विप्रा नांदीमुखाः सर्वे लक्ष्मीनारायणौ तदा ५७
उद्वाह्य विधिवद्विप्र परां मुदमुपागताः
तदा तदात्मिकाः सर्वे स्तुत्वाच जगदंबिकाम् ५८
विष्णोरुत्सङ्गगां कान्तां प्रसाद्य च पुनः पुनः
वेदोक्तेन स्तवनाथ पुराणोक्तेन वै पुनः ५९
इत्येवं याचमानास्तु भवानीं कमेलेक्षणाम्
लसदिदुंवरप्रख्यमुख कांतिविराजिताम् ६०
किंचित्स्मिता स्थविलस हन्तपङ्क्तिविराजिताम्
तयादत्तवरास्तुष्टा स्तपःक्षामा जितेन्द्रियाः ६१
अस्मद्वंशे च ये जाता विप्रा नांदूमुखाः शुभे
ते त्वया न परित्याज्या यावदाहूतसंप्लवम् ६२
तदा तेभ्यो हि विप्रेभ्यो यदाहजगदंबिका
तत्तेहंकथयाम्याशु वेधसो मे मुखाच्छ्रुतम् ६३
श्रीरुवाच
भोभो नांदीमुखा विप्रा युष्माकं ये स्त्रवंशजाः
निर्धना दुर्भगाःक्रूरा भविष्यन्ति न ते शुभाः ६४
कदापि मामका विप्रा निर्धना न भवन्ति हि
इति श्रुत्वा तदा सर्वे जाताः पृष्टा स्ततो द्विज ६५
तदैव विभुनाप्याशुदत्ता वै भक्तिरुत्तमा
याचिता तैस्तु विप्रेन्द्रैःस्तोत्रैः स्तुत्वाऽथ तं हरिम् ६६
मरीचिरुवाच
ज्ञातमेतन्मयात्त्वत्तो यथा सर्वमिदंजगत्
विष्णुर्विष्णोर्विष्णुतश्च नापरं विद्यते ततः ६७
एतत्ते श्रोतुमिच्छामि त्यक्तभेदो महात्मना
वेदव्यासस्वरूपेण यथास्ते च युगे युगे ६८
यस्मिन् यस्मिन्युगे व्यासो सोऽयमासीमहामुने
तंतमाचक्ष्व भगवन् शाखाभेदांस्तथैव च ६९

पराशर उवाच
वेदद्रुमस्य मैत्रेय शाखाभेदसहस्रकम्
न शक्यं विस्तराद्वक्तुं संक्षेपेण भृणुष्वतत् ७०
द्वापरे द्वापरे विष्णुर्व्यासख्यो महामुने
वेदमेक सुबहुधा कुरुते जगतो हितं ७१
वीर्यं तेजोभलंबाल्यं मनुष्याणामवेक्षणचै
हिताय सर्वभूतानां वेदं वेदान् करोति सः ७२
यया स कुरुते तन्वा वेदभेकं पृथक्प्रभुः
वेदव्यासाभिधानात्तु सा मूर्तिर्मधुविद्विषः ७३
अस्मिन्मन्वंतरे येये व्यासास्तांस्तान्निबोधमं
अष्टाविंशति संख्याको वेदो व्यस्तो महर्षिभिः ७४
वैवस्वतेंऽतरे तस्मिन् द्वापरेषु पुनःपुनः
वेदव्यासा व्यतीता ये अष्टाविंशतिरुत्तमाः ७५
चतुर्द्धा यैस्ततो वेदो द्वापरेषु पुनःपुनः
द्वापरे प्रथमे व्यस्ताः स्वयं वेदाः स्वयंभुवा ७६
द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः
तृतीये चोशनाभ्यासश्चतुर्थे च बृहस्पतिः ७७
सविता पंचमे व्यासो यमः षष्ठे व्यवस्थितः
सप्तमे च तथैवेन्द्रो वशिष्ठश्चाष्टमः स्मृतः ७८
सारस्वतश्च नवमे त्रिधामा दशमे स्थितः
एकादशे स्वत्रिभृगु भरद्वाजस्ततःपरम् ७९
त्रयोदशे चांतरीक्षः पिप्पलादश्चतुर्दशे
त्रय्यारुणः पंचदशे षोडशेतु धनंजयः ८०
कृतंजयः सप्तदशे कृष्णज्याष्टादशे स्मृतः
ततो व्यासो भरद्वाजो भरद्वाजात्तु गौतमः ८१
गोतमादुत्तमोव्यासो हर्यात्मा यो विधीयते
अथहर्यात्मनो वेनः स्मृतो वाचश्रवास्ततः
सोमपुष्पायणस्तस्मात्तृणबिन्दुरिति स्मृतः ८२
यज्ञभृद्भार्गवस्तस्माद्वाल्मीकिर्यो विधीयते ८३
तस्माद्धि भार्गवश्चाभूत्ततः पाराशरः स्मृतः

जातूकर्ण्योऽभवत्तस्मात् कृष्णद्वैपायनस्ततः ८४
अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः
एको वेदश्चतुर्द्धातैः कृतो वै द्वापरादिषु ८५
भविष्यद्द्वापरे चैव द्रोणिर्व्यासो भविष्यति
व्यतीते च तथा तस्मिन् कृष्णद्वैपायने मुने ८६
ध्रुवमेकाक्षरं ब्रह्मन्नोमित्येवं व्यवस्थितम्
बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते ८७
प्रणवाधिष्ठितं नित्यं भूर्भुवःस्वरितीर्यते
ऋग्यजुःसामाथर्वणां यत्तस्मै ब्रह्मणे नयः ८८
जगतः प्रलयोत्पत्तौ यत्तु कारणसंज्ञितम्
महतः परमं गुह्यं तस्मै सुब्रह्मणेनमः ८९
अगामपरमक्षय्यं जगत्संमोहनालयम्
संप्रकाशनवृत्तिभ्यां पुरुषार्थप्रयोजनम् ९०
सांख्यष्टानवतां निष्ठागतं संमदृगात्मनाम्
यत्तदव्यक्तममृतं प्रवृत्तिब्रह्मशाश्वतम् ९१
प्रधानमात्मयोनिश्च गुहास्त्वं च शाश्वतम्
अविभागस्तथाशुक्रमक्षरं बहुलात्मकम् ९२
परमब्रह्मणे तस्मै सर्वात्मने नमो नमः
यद्रूपं वासुदेवस्य परमात्मस्वरूपिणः ९३
एतद्ब्रह्म त्रिधागेदयमेदमपि स प्रभुः
सर्वभूतेष्वभेदोऽसौ भिथतेमिश्रबुद्धिभिः ९४
स ऋङ्मयः साममयः सर्वात्मा सयजुर्मयः
ऋग्यजुःसामाथर्वात्मा स एवात्मा शरीरिणाम् ९५
स विद्यते वेदमयः स वेदं करोति त्रेदैर्बहुभिः सशाखम्
शाकाप्रणेता स समस्तशाखा ज्ञानस्वरूपो भगवाननंतः ९६
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ लक्ष्मीविवाहोनाम सप्तमोऽध्यायः

## अध्याय ८

मरीचिरुवाच
आद्यो वेदश्चतुष्पादः शतसाहस्रसंमितः

ततो दशगुणः कृत्स्नो यज्ञोऽयं सर्वकामधुक् १
ततोह्यभून्मतो व्यासचाष्टाविंशतिमेंतरे
वेदमेकं चतुष्पादं चतुर्द्धा व्यश्रजत् प्रभुः २
यथा तेनैव वै व्यन्ता वेदव्यासेन धीमता
ब्रह्मोवाच
वेदाव्यस्ताः समस्तास्तैर्व्यैस्ताःसद्भिर्यथापुरा ३
तदधुनैव वेदानां शास्त्रभेदान् द्विजोत्तम
चतुर्युगेऽथ रचितान्समस्तेच्यथ धारय ४
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्
कः प्राज्ञो भुवि मैत्रेय महाभारतकृद्भवेत् ५
तेनव्यस्ता यथावेदा व्यासेन च महात्मना
द्वापरे ह्यत्र मैत्रेय तन्मे शृणु यथार्थतः ६
ब्रह्मणा नोदितौ व्यासो वेदं व्यस्तं प्रचक्रमे
शिष्यानध्यापयामास चत्वारो वेदपारगान् ७
ऋग्वेदंश्रावयामास पैलं च भूमिसत्तमः
वैशम्पायननामानं राजुरध्वाभेषजा ८
जैमिनिं सामवेदं च तथैवाथर्ववेदवित्
सुमन्तुस्तस्य शिष्योऽभूद्वेद वासस्य धीमतः ९
रोमहर्षणनामानं महाबुद्धिं महामुनिम्
मूतमग्राहयत्याठ मितिहासपुराणयोः १०
यस्तु ह्यासीद्यजुर्वेदस्तं चतुर्था व्यकल्पयत्
चातुर्होत्रमभूत्तस्मात्तेन यज्ञमथाकरोत् ११
आध्वर्यवं यजुर्भिस्तु चर्ग्भिर्होत्रं तथा मुनिः
उद्गात्रं सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः १२
ततः स ऋच उद्धृत्य ऋग्वेदवृत्वान्मुनिः
यजुर्भिश्च यजुर्वेदं सामवेदं च सामभिः १३
ततः स ऋच उद्धृत्य सर्वं वै कृतवान् यिभुः
तथा चाथर्ववेदेन सर्वकर्माणि सत्प्रभुः १४
कारयामास मैत्रेय ब्रह्मत्वं च यथा स्थितः
सोयकेकौ महावेदस्तरुस्तेन तथा कृतः १५

चतुर्द्धाथ ततेरजातं वेदपादपकाननम्
विभेद मयभं विप्र पैलत्र्यृग्वेदपादपम् १६
इन्द्रप्रमितयेऽयाह बाष्कलायनसंहिताम्
चतुर्द्धा स विमेदाय बाष्कलिर्निजसंहिताम् १७
वोद्धादिभ्यो ययौ तास्तु शिष्येभ्यः स महामुनिः
बोध्याग्निवाढरौ तद्वद्याज्ञवल्क्यपराशरौ १८
प्रतिशास्त्रं च शाखायास्तस्यास्ते जगृहुर्मुने
इन्द्रप्रमित्तिरेवाह संहितां स्वसुतं ततः १९
मराडूकेयं महात्मानं मैत्रेयाध्यापयत्तदा
तस्य शिष्यप्रशिष्येभ्यः पुत्रान् शिष्यान् यथाक्रमम् २०
वेदमित्रस्तु साकल्पः संहितां तामधीतवान्
चकार संहिताः पंच शिष्येभ्यः प्रददौ च ताः २१
तस्यशिष्यास्तु ये पंच तेषां नामानि मे शृणु
मुद्गलो गोमुखश्चैव दात्स्यः शालीयएव च २२
शिशिरः पंचमोप्यासीन्मैत्रेय स महामुनिः
संहितात्रितयं चक्रे शापणिश्चरथेतरम् २३
निरुक्तमकरोद्ब्रह्मन् चतुर्थं मुनिसत्तम
कौजो वैलालकश्चैव बलाकश्च महामुनिः २४
निरुक्तश्च चतुर्योऽभूद्वेदवेदांगपारगः
इत्येताः प्रदिशाखान्योप्यन्वशासद्द्विजोत्तम २५
बाष्कलश्चापरास्तिस्त्रः संहिताः कृतवान् द्विज
शिष्यः कलापनिर्गार्ग्यस्तृतीयश्च तथा चयः
इत्येता बह्वृचः प्रोक्ताः संहिता यैः प्रवर्त्तिताः २६
इति श्रीबह्निपुराणे नांदीमुखोत्पत्तौ चतुःशाखाभेद कथननामाष्टमोऽध्यायः

## अध्याय ९

वसिष्ठ उवाच
यजुर्वेदतरोः शाखाः सप्तविंशति रेव च
वैशम्पायननामासौ व्यासशिष्यश्चकारताः १
शिष्ये ताश्च जगृहुस्तेऽप्युनुग्रहात् शिष्येभ्यः प्रददौ

याज्ञवल्क्यश्च तस्याभूत् देवरातसुतो द्विज २
शिष्यः परमधर्मज्ञो गुरुवृत्तिपरः सदा
ऋषिर्योद्य महामेरोः समाजेनाभिगच्छति ३
तस्य वै सप्तरात्रान्ते ब्रह्महत्या भविष्यति
पूर्वमेवं मुनिगणैः समयोऽभूत्कृतो द्विज ४
वैशम्पायन एकस्तु तं व्यतिक्रान्तबांतदा
स्वस्त्रियं बालकंसोऽथ यदादृष्टमधातयत् ५
शिव्यानाह च भोः शिष्या ब्रह्महत्यापहं व्रतम्
चरध्वं मत्कृते सर्वे न विचार्य विदं तथा ६
तथाह याज्ञवल्क्याख्यस्तत्किमेभिर्द्विजैर्विभो
क्लेशितैरल्पतेजोभिश्चरिष्येहमिदं व्रतम् ७
तं तु क्रुद्धो गुरुःप्राह याज्ञवल्क्यं महामतिम्
मुच्यतां यन्त्वयाधीतं मत्तो विप्रावमन्यक ८
निस्तेजसो वदस्येतान् यस्त्वं ब्राह्मणपुंगवान्
तेन शिष्येण नार्यो मे ममाज्ञामभंगकारिणा ९
इत्युक्तो रुधिराक्तानि सरूपाणि यजूंषि सः
छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः १०
यजूंषि च विसृष्टानि याज्ञवल्क्येनवै द्विज
जगृहेस्तित्तिरिर्भूत्वा तैत्तरीयास्तु ते ततः ११
ब्रह्महत्याव्रतं जीर्णं गुरुणा चोदितैः स्तवैः
चकाराध्वर्यवस्ते च चरणान्मुनिसत्तम १२
याज्ञवल्क्योऽथ मैत्रेय प्राणायामपरायणः
तुष्टाव प्रणतः सूर्यं यजूंष्यभिलषंस्ततः १३
याज्ञवल्क्य उवाच
नमः सवित्रे जगतां रूपायाभिततेजसे
ऋग्यजुः सामभूताय त्रयीधाम्ने च ते नमः १४
नमोग्निसामभूताय जगतः कारणात्मने
भास्कराय परंतेजः सौषुम्णगुरु बिभ्रते १५
कलाकाष्ठानिमेषादिकालाज्ञानात्मने नमः
ध्येयाय विष्णुरूपाय परमाक्षररूपिणे १६

बिभर्तियः सुरगणानाप्यायेन्दुंस्त्ररश्मिभिः
स्वधामृतेन च पितॄन् तस्मै वृत्यात्मने नमः १७
हिमांबु घर्म रश्मीनां कर्ताहर्ता च यः प्रभुः
तस्मै त्रिकालरूपाय नमः सूर्यायः वेधसे १८
अपहन्ति तमो यश्च जगतोऽस्य जगत्पतिः
सत्यधामधरो देवो नमस्तस्मै विवस्वते १९
यत् कर्मयोग्यो न यतोनैवापः शान्तिकारणम्
यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते २०
सृष्टोयमंशुभिर्लोकः क्रियायोग्यो हि जायते
पवित्रताकारणाय तस्मै शुद्धात्मने नमः २१
नमः सवित्रेमूर्याय भास्कराय नमोनमः
आदित्यायादिभूताय देवानां च नमोनमः २२
हिरण्मयो रथो यस्य केतवोऽमृतवाजिनः
वहन्ति भुवने लोके चक्षुषस्तं नमाम्यहम् २३
इत्येवमादिभिस्तेन स्तूयमानः स्तवैरविः
वाजिरूपधरः प्राह व्रियतामिति वांछितम् २४
याज्ञवल्क्यस्तदा प्राह प्रणिपत्य दिवाकरम्
यजूंषितानि मे देहि यानि सन्ति च मे गुरौ २५
वसिष्ठ उवाच
एवमुक्तो ददौ तस्मै यजूंषि भगवान् ऋषिः
अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः २६
यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम
वाजिनस्ते समाख्याताः सूर्योश्वः समभूद्यतः २७
शाखाभेदास्तु तेषां वै दशपंच च वाजिनाम्
कण्वाद्यास्तु महाभागा याज्ञवल्क्यप्रवर्तिताः २८
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ यजुर्वेदस्य वाजिमाध्यंदिनीयशाखानाम नवमोऽध्यायः

## अध्याय १०

वशिष्ठ उवाच

सामवेदतरोः शाखा व्यासशिष्यः स जैमिनिः
क्रमेण येन मैत्रेय विभेद शृणु तान्मम १
सुमंतुस्तस्य शिष्योऽभूत्सुधन्वास्याप्यभूत्सुतः
अधीतवंतावेकैकां संहितां तौ महामुनी २
सहस्रसंहिताभेदं सुकर्मा तत्सुतः स्मृतः
चकार तं च तच्छिष्यौ जगृहाते महामती ३
हिरण्यनाभः कौशल्यः पौपिंजिश्च द्विजोत्तम
गृहितास्तेऽपि चोच्यन्ते पंडितैः प्राच्यसामगाः ४
लौगाक्षिः क्षुथुभिश्चैव कुसीदिर्लांगलिस्तथा
पौपिंजिशिष्यैस्तद्भेदैः संहिता बहुलीकृता ५
हिरण्यनाभशिष्याणां चतुर्विंशतिसंहिताः
तैश्चापिसामवेदोऽसौ शाखाभिर्बहुलीकृतः ६
अथर्वाणमथोवक्ष्ये संहितानां समुच्चयम्
अथर्ववेदं स मुनिः सुमंतुरमितद्युतिः ७
शिष्यमध्यापयामास क्रवंधं सोऽपि तद्द्विधा
कृत्वातु देवदर्शाय तथाऽपद्माय दत्तवान् ८
देवदर्शस्य शिष्यस्तु मौंजोब्रह्मबलिस्तथा
शोल्कायनिः पिप्पलादस्तथान्यो मुनिसत्तम ९
पथ्यस्यापि त्रयः शिष्याः कृता यैर्द्विजसंहिता
जावालिः कुमुदादिश्च तृतीयः शौनकोद्विजः १०
शौनकस्तु द्विधा कृत्वा ददावेकान्तबभ्रवे
सैन्धवायनसंज्ञाय द्वितीयां संहितां ददौ ११
सैंधवा मुंजकेशाश्च भिन्नभेदा द्विधा पुनः
नक्षत्रकल्पो वैतानः संहितानां विकल्पकः १२
आख्यानैश्चाप्युपाख्यानैःकथाभिः कल्पशुद्धिभिः
पुराणसंहितां चक्रे पुराणार्थविशारदः १३
प्रख्यातो व्यासशिष्योऽभूत्सुतो वै लोमहर्षणः
पुराणसंहितां तस्मै ददौ व्यासो महामुनिः १४
सुमतिश्चाग्निवर्चाश्च मित्रायुः शशपावनः
अकृतव्रणोऽथ सावर्णिः षट्शिष्यास्तस्य चाभवन् १५

काश्यश्च संहितावर्तः सावर्णिः शंसलायनः
लोमहर्षस्य निकटंतृणानि मूलसंहिताः १६
चतुष्टयेनाप्येतेन संहितानामिदं ततम्
आद्यं सर्वपुराणानां पुराणं ब्राह्ममुच्यते १७
अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते
ब्राह्मं पाद्यं वैष्णवं च शैवं भागवतं तथा १८
तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम्
आग्नेयमष्टमं चैव भविष्यं नवमं तथा १९
दशमं ब्रह्मवैवर्तं लिंगमेकादशं स्मृतम्
वाराहं द्वादशं प्रोक्तं स्कांदं चैव त्रयोदशम् २०
चतुर्दशं वामनं च कौर्म्यं पंचदशं स्मृतम्
मात्स्यं च गारुडं चैव ब्रह्मांडं च ततः परम् २१
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च
सर्वेष्वेतेषु कथ्यन्ते संशानुचरितुं तु यत् २२
यदेतत्तव विप्रर्षे पुराणं कथ्यते मया
एतदाग्नेयसंज्ञं वै पाद्मस्यसमनंतरम् २३
सर्गे च प्रतिसर्गे च वंशे मन्वंतरादिषु
कथ्यते भगवान् विष्णुरशेषेषुहि सत्तम २४
अंगानि चत्वारो वेदा मीमांसान्यायविस्तरः
पुराणं धर्मशास्त्रं च विद्याश्चैताश्चतुर्दश २५
आयुर्वेदो धनुर्वेदो गांधर्वश्चैव ते त्रयः
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैवताः २६
ज्ञेया ब्रह्मर्षयः पूर्वं तेभ्यो देवर्षयः पुनः
राजर्षयः पुनस्तेभ्य ऋषिप्रकृतयस्ततः २७
इति शाखा असंख्याताः शाखाभेदास्तथैव च
कर्तारोवेदशाखानां शाखाभेदस्य हेतवः २८
सर्वमन्वंतरेष्वेवं शाखाभेदः समः स्मृतः
प्राजापत्यास्तु नैर्ऋत्यास्तद्विकल्पास्त्विमे द्विज २९
एतत्ते नोदितं सर्वं यत्पृष्टोहमिहत्वया
मरीचे वेदसंबंधं किमन्यत् कययामि ते ३०

इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ शाखा विस्तारो नाम दशमोऽध्यायः

## अध्याय ११

मरीचिरुवाच
पितामह महाप्राज्ञ कथयस्व प्रसादतः
विधिवज्ज्ञातिसंबंधं परं कौतूहलं हि जः १
ब्रह्मोवाच
शृणुसंक्षेपतो वत्स ज्ञातिभेदं यथा क्रमात्
उदीच्याश्च महात्मानः सर्वे ब्रह्मर्षयोऽमलाः २
कारणांतरभेदेन ज्ञातिभेदास्त्वनेकधा
सर्वैर्महर्षिभिस्तेऽपि शाखाविस्तारहेतुतः ३
विस्तृता ज्ञातिसंबंधान् भेदान् वक्तुं न शक्यते
तथापि शृणु विप्रर्षे संक्षेपात्कथयाम्यहं ४
आनंदपुरणाश्चैव विप्रा वेददिदुत्तमाः
आहिच्छत्रास्तथा प्रोक्ता अन्येषट्पदकाः स्मृताः ५
भिन्न मालोद्भवाश्चैव श्रीमत्खेटकवासिनः
धर्मारण्योद्भवाश्चैव तेषां भेदास्त्वनेकधा ६
विप्राणांचैव सर्वेषां ज्ञातिभेदास्तु सर्वतः
देशग्रामविभेदात्तु तेषां नामादिकं च यत् ७
आचाराश्च तथा तेषां कुलदेशविभेदतः
कलौ संवर्धमाने च भविष्यन्ति तु ते द्विजाः ८
आचारविमुखाः केचित्कीटकादिषुवासिनः
अथान्येबहवो विप्राः कपिलाद्यास्त्वनेकशः ९
जंबुसरोद्भवाश्चैके मेदपाटास्तथैव च
तथा मदहराश्चैव ग्रीगौढा जालहौरकाः १०
चित्रकूटोद्भवाश्चैके भल्लीवालरबालकाः
देशपालादिपालाश्च गयापालास्तथापरे ११
शाचोराः रोढपालाश्च वातदैवास्तिलिंगिकाः
उदीच्याश्च तथा केचित् वाल्मीकिस्थापिताः परे १२
करद्दट्टा नंदिहरा राज्यपालास्तथापरे

षडायता स्तिसोलाश्च धनोरा गौडपालकाः १३
तथा पुष्करणाः प्रोक्ता महाराष्ट्रा द्विजोत्तमाः
कनोजा गारुडाश्चैव नारदीयास्ततः परे १४
नृसिंहपुरजाश्चैव तथा टंकणपालकाः
मंडोरा ज्येतपालाश्च गुग्गुलिनस्तथा परे १५
कांयोडकादयश्चान्ये विप्राःप्रोक्ता महर्षिभिः
एते विप्रा हिते चोक्ता एवं नान्दीमुखास्तथा १६
दशविंशक भेदेन ब्राह्माभ्यन्तरभेदतः
चतुरशीतिसंख्याता विप्राः प्रोक्तं मनीषिभिः १७
काश्मीराः कोंकणाः काच्छाः कर्णाटाः करहाटकाः
कावेर्याः कोशलाःकांच्यास्तथैतेनार्यदेशजाः १८
तेषां मुख्यतमा ह्येते द्विजा नांदीमुखाः स्मृताः
ज्ञानिनः सर्वधर्मज्ञा वेदवेदांग वेदिनः १९
धर्मनिष्ठास्तपोनिष्ठाः शापामुग्रहणेक्षमाः
येषां भगवता साक्षाल्लक्ष्म्यासह गदा भृता २०
नन्दिग्रामपुरं दिव्यं दत्तं सद्भिरलंकृतम्
सुवर्णमणिभिर्युक्तं निर्मितं विश्वकर्मणा २१
विप्रैर्वेदांगविद्भिश्च चतुर्विंशति गोत्रजैः
अधिष्ठितं तच्छुशुभे नगरं सार्वकामिकम् २२
यत्रदेवो महादेवो कपालेश्वरसंज्ञितः
पूजितो मनुजैर्देवैर्विधिवद्वांच्छितप्रदः २३
सर्वे देवाःसहेन्द्राश्च यत्र तिष्ठन्ति सर्वदा
पुराया दिव्यनदी यत्र वसते रविकुराडके २४
तत्र सर्वाणि तीर्थानि वसन्ति सततं भुवि
ध्यायन्ति मुनयः सर्वे पुराणं पुरुषं सदा २५
देवर्षिपितृसंघाश्च तुष्टिमायान्ति तर्पिताः २६
मरीचिरुवाच
उद्वाहा विधिवद्ब्रह्मन् लक्ष्मीनारायणात्मनोः
किं कृतं हि द्विजैश्चापि नांदीमुखपुरःसरैः २७
किं कृतं द्रविणैतैस्तु गोमहिष्यादिकैस्तथा

एतन्मे ब्रूहि भगवन् सर्वलोकपितामह  २८
ब्रह्मोवाच
विश्वकर्माणमाहूय भगवान् हरिरीश्वरः
प्रोवाच सर्वकर्मज्ञं तं शिल्पिज्ञानिनं शुभम्  २९
रचयस्व पुरीं दिव्यां गृहोद्यानैरलंकृताम्
शालाभिः प्रतिशालाभिर्हेमभूषाभिरन्विताम्  ३०
विश्वकर्मा उवाच
विनिर्मेया पुरी कुत्र कस्मिंस्तीर्थे दनेऽपि वा
आज्ञया ते महाबाहो विप्राणां सौख्यदा यथा  ३१
श्रीभगवानुवाच
मरुकच्छे समाभिष्टे सर्वसत्वनिषेविते
नानावृक्षसमाकीर्णे नानागुल्मलतावृते  ३२
यत्र संशोभते चापि वनं पुष्पफलार्हणम्
वनश्रियः कुचाकारैर्वीजपुरैः प्रपूरितम्  ३३
रसारूथरसालैस्तैरशोकैः शोकहारिभिः
तालैस्तमालैर्हंतालैः शालैः सर्वत्रशोभितम्  ३४
पूगैराकाशलम्बैश्च श्रीफलैः श्रीप्रदैःकिल
सुरंगैश्च मनोरंगै चानीरैर्बीजपूरकैः  ३५
पूरितं च मदांदोलकर्पूरकदलीदलैः
विश्रामायसमापन्नानाह्वयन्तमिबाध्वगान्  ३६
दुटजस्तवकैर्भान्तेऽधिष्ठिनं च वकैरिव
दाडिमैश्च दिदीर्णश्च स्वांतं दर्शमतीव यत्  ३७
कलयन्तमिबालोलैर्मल्लिकास्तवकस्तनम्
उदुंबरैरंबरगैरनंतफलमालिभिः  ३८
पनसैर्वननासाभिः शुकनासैः पलाशकैः
समंततो भ्राजमानं कदंवककरंजकैः  ३९
निराजितं वनोद्दीपैः राजचंपककोटकैः
सपुष्पशाल्मलीभिश्च जितपद्माकरश्रियम्  ४०
कदलीदलकैरुच्चैः क्वचित्कांचनकेतकैः
कृतमालैरक्तमालैः शोभमानं क्वचित्क्वचित्  ४१

कर्कधृवन्भुजीवैश्च पुत्रजीवैर्विराजितम्
शाकशंखवनैरम्यैश्चंदनैरक्तचंदनैः ४२
हरीतकी कर्णिकारा धात्रीवरविभूषितम्
द्राक्षाबल्ली नागरल्ली कणारल्लीशतावृतम् ४३
सदाफल सदापुष्प वृक्ष वल्लीविराजितम्
एला सवंग मरीच कुलंजन वनावृतम् ४४
मल्लिकायूथिकाकुंददमयंतीसुगन्धितम्
भ्रमद्भ्रामरमालाभिर्मालतीभिरलंकृतम् ४५
नानासरित्सरःस्रोतः पल्लवैः परितो वृतम्
केकिकेकारवैर्दूरात् कुर्वन्तं स्वागतं किल ४६
दंध्यशृंगमृगाक्षश्च शमीपादपशोभितः
यत्रकापालिकेशश्च सर्वदुःखौ घनाशनः ४७
गंगा संनिहिता यत्र सर्वकल्मपनाशिनी
दुर्गा भगवती यत्र नित्यं संनिहितासदा ४८
तथेत्युक्त्वा जगामाशु श्रष्टलक्षणलक्षितः
तां पुरीं रचभाभास सुषट्कोणत्रिकोणिकाम् ४९
वीथीभिश्चापि रथ्याभिबत्वरैरूपशोभिताम्
सुवर्णभरनै रभ्यैरगणैः कोष्ठकैः शुकैः ५०
शोभमानां पताकाभिः स्फाटिकाट्टालिकादिभिः
हेमकुम्भसमाकीर्णां मुक्तातोरण भूषिताम् ५१
सुरद्रुमलतोपानविचित्रोपपनान्विताम्
हेमशृंगैर्दिविस्पृग्भिः एकातिकाट्टालगोपुरैः ५२
वज्रवैडुर्यकस्तम्भैराजन्तीं स्वापुरीमिव
हेमराजतभित्तीनां तेजोभिः समलंकृताम् ५३
क्षणेन रचयामास समृद्धां देवसूत्रधृक्
तमागत्य ततःप्राह देवदेवं जगत्प्रभुम् ५४
प्रांजलिः प्रणतो भक्त्या संभावयितुमीचरम्
स्तुत्वा तं च जगन्नाथं सर्वलोकपिताभाम् ५५
विश्वकर्मोवाच
मयाऽरचि पुरीरम्या स्वदाज्ञायंत्रितेन च

भगवानपि संतुष्टः परां निर्वृत्तिमागतः ५६
नांदीमुखेभ्यो विप्रेभ्यः प्रादात्तत्पुरमीश्वरः
धनधान्यसमाकीर्णं हेमरत्नविभूषितम् ५७
ततस्ते च द्विजाः सर्वे सपुत्राः सपरिग्रहाः
निवासं चक्रिरे तत्र प्रहृष्टा धनसंपदा ५८
तत्रारण्ये बहवो वर्णा आश्रया ब्रह्मवेदिनः
वसतिं कृतवन्तोऽन्ये चेश्वराज्ञासुयंत्रिताः ५९
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ नंदिग्रायनिरूपणनाम एकादशोऽध्यायः

## अध्याय १२

मरीचिरुवाच
भगवन् देवदेवेश सर्वलोकपितामह
सर्वकारणकारुण्य ज्ञानदीपप्रवर्त्तक १
परमेष्ठिन सुरज्यैष्ठ सर्पदेवनमस्कृत
त्वं धाता त्वं विधाता च सृष्टा हर्ता च पालकः २
त्रिरूपो बहुरूपोऽसि सर्वदेवैः प्रपूजितः
कथयस्व प्रसादेन कपालेश्वरकारणम् ३
ब्रह्मोवाच
कपालेश्वरमाहात्म्यं श्रूयतामधुना द्विज
चतुर्थस्य महाभागास्तत्रक्षेत्रे स्थितस्य च ४
श्रतमात्रेय येनात्र नरः पापात्प्रमुच्यते
मरीचिरुवाच
केनायं स्थापितोदेवः कपालेश्वसंज्ञितः ५
तस्मिन्दृष्टे फलं किंस्यात्पूजेते च वदस्वनः
पितामह उवाच
इन्द्रेण स्थापितः पूर्वमेष देवो द्विजोत्तम ६
कपालेश्वरसंज्ञस्तु ब्रह्महत्याविमुक्तये
तत्प्रभावात्सुरश्रेष्ठस्तयामुक्तो द्विजोत्तम ७
पापपूरूपदानेन चेत्येषा वैदिकी श्रुतिः
अन्योऽपि यो नरस्तं च पूजयित्वा प्रगक्तितः ८

यच्छति ब्राह्मणेन्द्राय प्रदानं पापपूरुषम्
दक्षिणामूर्तिमासाय प्रोवाचेदं बृहस्पति ९
कपालेश्वरजेक्षेत्रे गत्वा तं वीक्ष्य शंकरम्
योददाति शरीरं च कृत्वा हेममयं ततः १०
मुच्यते नात्रसंदेहः पातकैः पूर्वसंचितैः
मरीचिरुवाच
ब्रह्महत्या कथंजाता सुरेन्द्रस्य हि सूतज ११
एतन्मे सर्वमाचक्ष्व परं कौतुहलं हि मे
कपालेश्वरसंज्ञस्तु कथं देवश्च संस्थितः १२
ब्रह्महत्या कथं नष्टा तत्प्रभावाद्विवस्वतः
सपाप पुरुषो देयो विधिना केन वै विभो १३
कैर्मंत्रैः स हि देयः स्यात्कीदृशैश्च ह्युपस्करैः
दर्शनात् पूजनाच्चापि किंफलंजायते नृणाम् १४
अदत्वा स्वशरीरं वा पूजयेत्केवलं वद
ब्रह्मोवाच
अहं ते कीर्तयिष्यामि कथामेतां पुरातनाम् १५
यां श्रुत्वापि महाभाग नरः पापात्प्रमुच्यते
अज्ञानाज्ज्ञानतोवापि विहितैरन्यजन्मनैः १६
दृष्टमात्राश्रयेणात्र पातकात्तद्दिनोक्तवात्
मुच्यते नात्र संदेहः सत्यमेतन्पयोदितम् १७
पुरा त्वष्टुः सुतोजज्ञे दानवो द्विजसत्तम
पुलोमदुहितुः पार्श्वाद्द्विगार्यस्यः सुवीर्यवान् १८
सबाल एव धर्मात्मा आसीत्सर्वजनप्रियः
दान्वं भावमुत्सृज्य द्विजभक्तिपरायणः १९
स गत्वा पुष्करारण्यं परमेण समाधिना
तोपयामास देवेशं पद्मजं तपसि स्थितम् २०
तस्मै तुष्टः स्वयं ब्रह्मा दृष्टिगोचरमामटः
प्रोवाच वरदोऽस्मीति किंते कृत्यं करोम्यहम् २१
वृत्रउवाच
यदि तुष्टोसि देवेशब्राह्मणत्वं प्रयच्छये

ब्राह्मणत्वं समासाय साधषामि परं पदम्  २२
तेन किंचिदसाध्यं च ब्राह्मरयेन भवेन्मम
ब्राह्मरयेन समं चान्यत्र किंचित्प्रतिभातिमे  २३
परमं दैवतं किंचिन्न विप्राद्विद्यते ध्रुवम्
तस्मान्मे हृत्स्थितं चान्यदपि राज्यं त्रिविष्टपे  २४
ब्रह्मोवाच
तस्य तद्वचनं श्रुत्वा हृष्टस्तत्र पितामहः
ब्राह्मणत्वं स्वयं दत्वा ततः प्रोवाच सादरम्  २५
मयात्वं विहितो विप्रः पुत्र प्रकुरु वांछितम्
प्रसादयस्व सततं ब्राह्मणान् ब्रह्मवित्तमान्  २६
ब्राह्मणैः सुप्रसन्नैश्च प्रीयन्ते सर्वदेवताः
तस्मात्सर्वप्रयत्नेन पूजनीया द्विजोत्तमाः  २७
ब्रह्मोवाच
एवमुक्तस्तदा मे च वृत्रोऽभूद्ब्राह्मणस्ततः
ब्राह्मया सूद्म्या समोपेतो ब्रह्मचर्यपरायणः  २८
तस्मिंस्तपसि संस्थे च हता इन्द्रेण दानवाः
वंशोच्छेदे समापन्ने दानवानां प्रहात्मनाम्  २९
ततस्ते दानवाः सर्वे पराभूताः सुरैस्ततः
स्वस्थानं संपरित्यज्य दुःखशोकसमन्विदाः  ३०
तन्मातरं पुरस्कृत्य तत्सकाशमुपागताः
स च तां मातरं दष्ट्वा वृत्तान्तैश्च समंततः  ३१
दानवैश्च पराभूतैस्तथाभूतां च मारुतम्
किमागमनकृत्यं च दुःखितानां यमान्तिके  ३२
दानवा ऊचु
वयं देवैः पराभूताः भवन्तं शरणं गटचः
क्वयामोऽन्यत्र चास्माकं त्वां विना नास्ति संश्रयः  ३३
तेषां तद्वचनं श्रुत्वा वृत्रः प्रोवाच सादरम्
देवानहं हनिष्यामि गम्यतां यत्र रोचते  ३४
दनुरुवाच
तवागमनकृत्यं च मातः कथयसांप्रतम्

तथा कुरु महावीर क्षिप्रं दारपरिग्रहम्  ३५
वंशवृद्धौ प्रमाणं चेद्वाक्यं तधममोद्भवम्
एष एव परो धर्म एष एव परो त्रयः  ३६
पुत्रश्च जननीवाक्यं यत्करोषि संपाहितः
तथा स्त्रीणां पतिं मुक्त्वा नान्यास्ति भुवि देवता  ३७
जनन्यां जीवमानायां तथैव च सुतस्य च
अतिक्रम्य च या नारी पतिं धर्मपरा भवेत्  ३८
तत्सर्वं विफलं तस्या जायते च न संशयः
पुत्रः स्वजननीवाक्यं योतिक्रम्य यथारुचि  ३९
करोति धर्मकृत्यानि तानि सर्वाणि तस्य च
भवन्ति हि वृथा नूनं हव्यं भस्महुतं यथा  ४०
अरण्ये रुचितानां च ह्यूपरे वापितानि च
तथैव बधिरस्याग्रे गीतं नृत्यमचमृषः ४१
तद्वन्मातृमतादन्यत्कृतं पुत्रस्य धर्मणम्
सर्वं तन्नात्र संदेहस्तेनाहं त्वामुपागता  ४२
बन्धूनां वचनात्पुत्र दुःखार्ता च विशेषतः
किंवा ते बहुनोक्तेन भूयोभूयश्च पुत्रक  ४३
आनृण्यं जायते यद्वत् पितृणां स्यात्तदा शृणु
परमं वेत्ति सम्यक्त्वं सर्वं ज्ञातिसमुद्भवम्  ४४
यदि वत्स प्रमाणं चेत्कुरुष्व च वचो मम
तस्यास्तद्वचनं श्रुत्वा वृत्रः संचित्य चेतसि  ४५
श्रुतिस्मृत्युक्तवाकोन न मातुर्विद्यते परम्
स तथेति प्रतिहाय चानिनाय परिग्रहम्  ४६
त्वष्टा तस्मै ददौ प्रीतस्ततो रत्नान्यनेकशः
दानवानां महावीर्यो ब्रह्मण्येन  समन्वितः  ४७
अभिविक्तस्तदा वृत्रः स्वरास्ये तेऽसुरादिभिः
श्रुत्याभिषेकं संहृष्टास्तस्य वृत्रायभान्धवाः  ४८
दानवाश्च सभाजग्मुर्पेतत्रासन् पुरोगताः
पातालाद्गिरिदुर्गैश्च स्थलदुर्गेभ्य एव च  ४९
कृतवैराः समं देवैः कोपेन मरुता वृताः

ततः प्रोत्साहितः सर्वैर्दानवैः स महाबलः ५०
प्रस्थितः शत्रुनाशाय महेन्द्रभवनं प्रति
शक्रोऽपि वृत्रमाकर्ण्य समायांतं युयुत्सया ५१
सन्मुखः प्रययौ हृष्टाः सर्वदेवसमन्वितः
ततः समभवद्युद्धं देवानां सह दानवैः ५२
तत्रोवाच गुरुः शक्रमायुधं कुरुदेवय
वृत्रोऽयं दारुणो नूनं बलद्वयसमन्वितः ५३
चत्वारश्चाग्रतो वेदा पृष्ठतः सशरं धनुः
तेन जेतव्य एवायंतवैव च महाहवे ५४
तस्मात्संकनमेतेन त्वं कुरुष्व शचीपते
ततो विभासमायातं जहि वक्रेण दानवम् ५५
भडुपायै रिपुर्विध्य इति शास्त्रनिदर्शनम्
भुंजानश्च शयानश्च दत्वा कन्यामपि स्वकाम् ५६
ष्वेपदानेन संयोज्य कृत्वापि शपथं गुरुम्
भायाप्रपंचमासाय तस्मादेवं कुरुष्व च ५७
इन्द्र उवाच
यद्येवं च रक्यं गत्वा त्वं विश्वासे नियोजय
टव वाक्येन विश्वासं नूनं यास्यति दानवः ५८
ब्रह्मोवाच
शक्रस्य मतमास्थाय प्रत्स्थे च बृहस्पतिः
यत्र वृत्रः स्थितो दैत्यो युद्धाय कृतनिश्चयः ५९
वृत्रोऽपि तं समालोक्य स्वयं प्राप्तं बृहस्पतिम्
सदैव द्विजभक्तः स दृष्टात्मा समपद्यत ६०
विशेषात्प्रणिपत्योच्चैर्वाक्यमेतदभाषत
वृत्रउवाच
स्वागतं ते द्विज श्रेष्ठ किंकरोमि प्रशाधि माम् ६१
प्रिया मे ब्राह्मणा यस्मात्तस्मात्कीर्तय माचिरन्
बृहस्पतिरुवाच
संदिग्धो विजयो युद्धे यस्माद्देवेन सत्तम ६२
तस्मात्कुरु भूतेन्द्रेण व्यवस्थांवचनान्मम

त्वं भुंन्दव भूतलं कृत्स्नं शक्रश्चापि त्रिविष्टपम् ६३
व्यवस्यथाऽनया नित्यं वर्तितव्यं परस्परम्
वृत्रउवाच
अहं तव वचो ब्रह्मन् करिष्यामि सदैव हि ६४
समयं कुरु विप्रेन्द्र सांप्रतं ममसुद्विज
ब्रह्मोवाच
अथ शक्रं समानीय बृहस्पतिरुदारधीः ६५
वृत्रेण सह संधानं चक्रे चैव परस्पराम्
एकारी मित्रतां गत्वा तावुभौ देवदैत्यपौ ६६
प्रहृष्टौ गतवंतौ तौ ततश्चैव निजं गृहम्
अथ शक्रश्छलान्वेषी सदा वृत्रस्य वर्तते ६७
न छिद्रं च समासाद्य तत्प्रदापे न दह्यते
इन्द्र उवाच
न शक्नोमि च तं दैत्यं वीक्षितुं च कथंचन ६८
तेजसा सर्वतो व्याप्तं तत्कथं सूदयाम्यहम्
तस्मात्किंचिदुपायं मे तद्वधार्थं प्रकीर्तय ६९
यया शक्नोमि तत्सोदुं तेजस्तस्य दुरात्मनः
ब्रह्मोवाच
तस्य तद्वचनं श्रुत्वा चिरं ध्यात्वा बृहस्पतिः ७०
ततः प्रोवाच तं शक्रं विनयावनतं स्थितं
बृहस्पतिरुवाच
तस्य ब्रह्मस्थितं तेजः सम्यग्गात्रे पुरंदर ७१
वीक्षितुं नैव शक्नोषि तेनत्वं त्रिदशाधिप
तथा ते कीतीयेष्यामि तस्योपायं वधोद्भवम् ७२
मारयिष्यसि येनात्र त्वं तं दानवसत्तमम्
प्राची सरस्वतीतीरे पुष्करारण्यमाश्रितः ७३
दधीचिर्नाम विप्रर्षिः शतयोजनमुच्छ्रितः
तत्र नित्यं तपः कुर्वंस्तोषयति पितामहम् ७४
स निर्विण्णो मुनिः स्वीयजरयापि समावृतः
तं प्रार्थयद्रतं गत्वा तस्यास्थीनि गुरूणि च ७५

सते दास्यत्यसंदिग्धं त्यक्त्वा प्राणानतिप्रियान्
तस्यास्थि भिः प्रहरणं वज्राख्यं तं भविष्यति ७६
अमोघं ते ततो नूनं त्वं वृत्रं सूदयिष्यसि
तस्य वज्रस्य तत्तेजो ब्रह्मतेजोपवृंहितम् ७७
तेन वृत्रोद्भवं तेजः प्रशमं समयास्यति
ब्रह्मोवाच
तच्छ्रुत्वा सत्वरं शक्रः सर्वदेवगणैः सह ७८
जगाम पुष्करारण्ये यत्र प्राची सरस्वती
त्रयस्त्रिंशत्सुरोपेता तीर्थानां कोटिभिर्युता ७९
दधीचेराश्रमं तत्र सोऽविशच्चित्रसंयुतम्
क्रीडन्ते नकुलैः सर्पा यत्र तुष्टिं गता मिथः ८०
मृगाः पंचाननैः सार्धं वृकदंशास्तथाश्वभिः
उलूकसहिताः काका भिथो द्वेषविवर्जिताः ८१
प्रभावात्तस्य तपसो दधीचेस्तु महात्मनः
दधीचिर्मुनिरालोक्य देवान् शक्रपुरोगमान् ८२
समायातान्प्रहृष्टात्मा सत्वरं सन्मुखोऽभ्यगात्
ततश्चार्घ्यं समादाय प्रणिपत्य मुहुर्मुहुः ८३
शक्रमभ्यागतं प्राह किं ते कृत्यं करोम्यहम्
गृहागतस्य देवस्य तच्छीघ्रं मे निवेदय ८४
इन्द्र उवाच
आतिथ्यं कुरु विप्रेन्द्र गृहायातस्य सन्मुने
तदस्थीनि निजान्याशु मम देह्यविकल्पितम् ८५
एतदर्थमहं प्राप्त स्त्वत्सकाशं मुनीश्वर
अस्थिभिस्ते परं कार्यं देवानां सिद्धिमेष्यति ८६
ब्रह्मोवाच
इन्द्रस्य तद्वचः श्रुत्वा दधीचिस्तोषसंयुतः
ततःप्राह सहस्राक्षं सर्वदेवैः समन्वितम् ८७
अहो नास्ति मया पुण्यः सांप्रतं भुवि कश्चन
सदशो यस्य देवेशः स्वयमर्थी गृहागतः ८८
धन्यानि च ममास्थीनि यानि देवेश ते हितम्

करिष्यन्ति सदाकार्यं रक्षार्थं त्रिदिवौकसाम् ८९
एषोऽहं संप्रदास्यामि प्रियान् प्राणान् कृते तव
गृहाण स्वेच्छयास्थीनि स्वकार्यार्थं पुरंदर ९०
एवमुक्त्वा स महर्षिर्ध्यानमाश्रित्य सत्वरम्
ब्रह्मरन्ध्रेण निःसार्य प्राणा नात्मानमत्यजत् ९१
तदात्मना परित्यक्तं तस्य गात्रं च तत्क्षणात्
पतितं मेदिनीपृष्ठे व्यसु तद्द्विजसत्तम ९२
एतस्मिन्नेव कालेतु तस्यास्थीनि शतक्रतुः
प्रगृह्य विश्वकर्माणं ततःप्रोवाच सादरम् ९३
एभिरस्थिभिरेवं मे कुरुत्वं वज्रमायुधम्
येन व्यापादयाम्याशु वृत्रं दानवसत्तमम् ९४
तस्यतद्वचनं श्रुत्वा विश्वकर्मा त्वरान्वितः
यथायुद्धं तत्रा चक्रे वज्रास्त्र्यं दारुणाकृति ९५
षट्त्रिंशत्पर्वभिर्युक्तं मध्ये क्षामं बिभीषणम्
प्रददौ च ततस्तस्मै सहस्राक्षाय धीमते ९६
अथासौ तत्समादाय द्वादशार्कसमप्रभम्
समाधिस्थं चरैर्ज्ञात्वा वृत्रं संध्यार्चनेरतम् ९७
ततश्च पृष्ठभागं स समाश्रित्य त्रिलोकपः
चिक्षेप वज्रमुद्दिश्य तद्वधार्थं समुत्सुकः ९८
स हतस्तेन वज्रेण दानवो वज्रसात्कृतः
शक्रोपि हतमज्ञाय भयात्तस्याथ दुद्रुवे ९९
मनुष्यरहिते देशे विषमे गुल्मसंमृते
लीनः शक्रस्तदा वृत्रमेतद्वृत्रमयं जगत् १००
एतस्मिन्नंतरे देवाः पश्यन्तः सर्वतोदिशम्
सिद्धचारणगंधर्वा आजग्मुश्च शतक्रतुम् १
ततः कृच्छशतैर्दृष्टः शक्रोऽसौ गहने शुभे
विलीनो भयसंत्रस्तो गुल्ममध्ये व्यवस्थितः २
देवा ऊचुः
त्वं किं भीतः सहस्राक्षवृत्रोऽयं घातितस्त्वया
परिवारेण सर्वेण वीक्षितोऽस्माभिरेव च ३

तस्मादागच्छ गच्छामो गृहंप्रति पुरंदर
कुरु त्रैलोक्यराज्यं त्वं सांप्रतं हतकंटकम्  ४
तच्छ्रुत्वाऽथ विनिष्क्रान्तो गुल्ममध्याच्छतक्रतुः
हृष्टरोमा हतं श्रुत्वा वृत्रं दानवसत्तमम्  ५
अथ पश्यन्ति यावत्तं देवाः सर्वे शतक्रतुम्
तावत्तेजोविहीनं तद्गात्रं दुर्गन्धिना युतम्  ६
दृष्ट्वा लोकगुरुर्ब्रह्मा देवान् सर्वानुवाचह
शक्रोऽयं सांप्रतं व्याप्तः पापया ब्रह्महत्यया  ७
यदनेन हतो विप्रो ब्रह्मभूतश्छलेन सः
तस्मात्त्याज्यः सुदूरेन नो चेत्पापमवाप्स्यथ  ८
---व्नेन समं स्पर्शः संभाष्याथ विनिहितः
पापाय जायते पुंसां तस्मात्तं दूरतस्त्यजेत्  ९
आस्तां संस्पर्शनं तस्य संभाषोवा विशेषतः
दर्शनं चापि तस्याहो सर्वपापप्रदं नृणाम्  १०
तच्छ्रुत्वा ब्रह्मणो वाक्यं शक्रो दृष्ट्वात्मना कृतम्
तेजसा संपरित्यक्तो दुर्गन्धेन समावृतः  ११
ततः प्रोवाच दीनेशं दीनः प्रणतकंधरः
तवाहं किंकरो देव त्वयेन्द्रत्वे नियोजितः  १२
तस्मात्कुरु प्रसादं मे ब्रह्महत्याविनाशनम्
प्रायश्चितं विभोब्रूहि येन शुद्धिः प्रजायते  १३
ब्रह्मोवाच
अष्टषष्ठिषु तीर्थेषु त्वं स्नात्वादलसूदन
आत्मानं हेमजं देहि पापपुरूषसंज्ञिते  १४
मंत्रवत्वं यथोक्तं च ब्राह्मणाय महात्मने
स्नात्वा पुरायजले तीर्थे ब्रह्मघ्नोऽहमिति ब्रुवन्  १५
स्नातमात्रस्य ते हस्तात् यत्र तत्पतितं क्षितौ
तेजः स्वंजायते गात्रे दुर्गधश्च प्रणश्यति  १६
तस्मिंस्तीर्थे त्वया तच्च स्नाय्यं शक्र कपालकम्
महेश्वरस्य नाम्ना च पूजनीयं ततः परम्  १७
पंचभिर्वक्त्रमंत्रैश्च ततो देयात्मनस्तनुः

हेमोद्भवा द्विजेन्द्राय ततः शुद्धिमवाप्स्यति १८
शक्रस्तु तद्वचः श्रुत्वा ब्राह्मणोऽव्यक्तजन्मनः
कपालं वृत्रजं नीत्वा तीर्थयात्रां ततो गतः १९
अष्टषष्ठि सुतीर्थेषु पर्पटंश्च सुरेश्वरः
गंगातीर्थे महापुण्ये समायातः क्रमेण च २०
तत्रतीर्थे ह्रदे स्नात्वा यावत्तस्माद्विनिर्गतः
कपालं पतितं तस्मात्स्वयमेव हतात्मनः २१
नंदिग्रामे ततस्तेन स्थापितं हेमजं शिवम्
ततस्तं पूजयामास मंत्रैर्वक्त्रसमुद्भवैः २२
सर्वपापहरैः पुण्यैर्यथोक्तैर्ब्रह्मणा पुरा
एतस्मिन्नेव कालेन दुर्गंधो नाशमेयिवान् २३
तच्छरीराद् द्विजश्रेष्ठ महत्तेजो व्यजायत
एतस्मिन्नंतरे ब्रह्मा सह देवः समागतः २४
ब्रह्महत्याविनिर्मुक्तं ज्ञात्वा सर्वसुराधिपम्
ब्रह्मोवाच
ब्रह्महत्याकृतोदोषो गतस्ते सुरसत्तम २५
शेषपापविशुद्ध्यर्थं स्वर्णदानं प्रयच्छभोः
कपालमत्र देशे तु यत्त्वया परिपूजितम् २६
वृत्रस्य पंचभिर्मंत्रैर्हरवक्त्रसमुद्भवैः
प्रदास्यसि ततो भक्त्या हेमजामात्मनस्तनुम् २७
विधिनामंत्रयुक्तेन तव पापं प्रयास्यति
यद्यत्पूर्वकृतं कृच्छ्रं प्रदायब्राह्मणाय भोः २८
एवमुक्तस्ततः शक्रो ब्रह्मणा सुरसंनिधौ
तथेत्युक्त्वातुतत्कालं पापपिण्डं ददौ निजम् २९
कृत्वा हेमभयं विप्र ब्राह्मणाय यतात्मने
कुंडतीर्थसमुच्छ्राय वाचाख्याय हितात्मने ३०
एतस्मिन्नंतरे विप्रोगर्हितः सोत्र नंदिजैः
धिक्धिक् पाप वृथा वेदा ये त्वया पठिताः पुरा ३१
नास्माभिः सह संपर्कं कदाचित्वं करिष्यसि
गृहीतं यत्वया दानं पापपिंडसमुद्भवम् ३२

ततः प्रोवाच विप्रः स उपमन्युकुलोद्भवः
विवर्गवदनो भूत्वानाम्ना ख्यातः स याचकः  ३३
त्वया शक्र प्रदत्तो मे पापपिराडः स्वकोपतः
मया प्रतिग्रहस्तेन दाद्मिरायेन कृतस्तव  ३४
न लोभेन सुरश्रेष्ठ पश्यतस्ते विगर्हितः
ग्रहं च ब्राह्मरौः सर्वैरेतैर्नांदीमुखैस्ततः  ३५
तस्मादहं करिष्यामि एतत्तव परिग्रहम्
भूयोऽपि तवदास्यामि नत्वं गृह्णासिचेत्पुनः  ३६
ब्रह्मशापं प्रदास्यामि दारुणं च क्षयात्मकम्
इन्द्र उवाच
वेदांगपारगो विप्रो यदिकुर्यात् प्रतिग्रहम्  ३७
न स पापेन लिप्येत पद्मपत्रमिवांभसा
तस्मात्ते पातकं नास्ति शृणुष्वात्र वचो मम  ३८
एतैस्त्वं गर्हितो यस्माद्विप्रैर्नांदीमुखोद्भवैः
एतेषां सर्वकृत्येषु प्रधानस्त्वं भविष्यसि  ३९
एतेषां पुत्रपौत्रा ये भविष्यन्ति तथा तव
सर्वे तत्राज्ञया ते च परिवर्त्स्यन्त्यसंशयम्  ४०
युष्मद्वाक्यविहीनं यत्कृत्यं स्वल्पमपि द्विजाः
ग्राचरिष्यन्ति चेद् वंध्यं यथा भस्महुतं तथा  ४१
कपालमोचनं नाम ख्यातमेतद्भविष्यति
यत्तुसंस्मृत्य मनुजाः कपालं मम सुद्विज  ४२
तत्र श्राद्धं करिष्यन्ति ते नरा मुक्तिसंयुताः
श्राद्धपक्षे विशेषेण प्रयास्यन्ति परांगतिम्  ४३
स्थानवाश्चादिजातानां कुलेदारप्रतिग्रहम्
कृत्वा तद्गोत्रसंभूता ब्राह्मणा मत्प्रसादत  ४४
व्यवहार्या भविष्यन्ति नगरे सर्वकर्मसु
एवमुक्त्वा सहस्राक्षस्ततश्चादर्शनं गतः  ४५
तत्प्राप्तेन च वित्तेन शक्रप्रतिकृतेन च
चकार तत्र प्रासादं देवदेवस्य शूलिनः  ४६
ततः प्रोवाच शक्रस्तान् विप्रान्नांदीमुखोद्भवान्

कपालमोचने स्नात्वा यो देवं ह्यर्चयिष्यति ४७
ब्रह्महत्योद्भवं पापं तस्य नश्यत्यसंशयम्
महापातकयुक्तोवा विपाप्मा स भविष्यति ४८
स तन्वेति प्रतिज्ञाय विप्रानांदीमुखोद्भवान्
तत्रैव चाश्रमं कृत्वा पूजयामास शंकरम् ४९
ततः प्रभृति यत्किंचित्तेषां कृत्यं प्रजायते
तद्वाक्येन प्रकुर्वन्ति तत्र ये ब्राह्मणाः स्थिताः ५०
एतस्मात्कारणाज्जातो देवः कापालिकेश्वरः
एतत्ते सर्वमाख्यानमाख्यातं पापनाशनम् ५१
कपालेश्वरदेवस्य शृणवतां पठतां नृणाम्
राथा देवेश्वरस्यात्र पापं नष्टं महात्मनः ५२
पुनः प्रोवाच धर्मात्मा देवदेवेश्वरः प्रभुः
अस्मिंस्तीर्थे नरःस्नात्वा यस्तु श्राद्धं करिष्यति ५३
विद्वद्भिर्ब्राह्मणैः सार्धं नांदीमुखपुरःसरैः
हिरण्यदानं विप्रेभ्यो यथाशक्त्यार्पयिष्यति ५४
मधुना पायसान्नेन साज्येन द्विजभोजनम्
कृत्वा कपालिकेशं च देवं संपूजयिष्यति ५५
अस्मिंस्तीर्थे तु यो विप्राः पुष्पैर्धूपैस्तथार्हणैः
चंदनैश्च पुंगधैश्च नैवेद्यैर्विविधैस्तथा ५६
श्रीविष्णुं पूजयित्वा च सूक्ष्मैर्वेदमयैः परैः
तथार्चयेच्च निधिवद्भवानीं पापनाशिनीम् ५७
एतत्कापालिके क्षेत्रे सार्द्धगव्यूतिसंमिते
तीर्थयात्राविधानेन यःकुर्यात्तीर्थमुत्तमम् ५८
ब्रह्महत्यादिकं पापं तस्यनश्यत्यसंशयम्
यस्तु नांदीमुखो विप्रो हित्वातत्तीर्थमुत्तमम् ५९
तीर्थान्तरे च यो गच्छेन्नतस्य फलमश्नुते
तस्मान्नांदीमुखैर्विप्रैस्तीर्थं सेम्यं विशेषतः ६०
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ कपालेश्वरोत्वधि नाम द्वादशोऽध्यायः

अध्याय १३

मरीचिरुवाच

के देशाः सुमहापुण्याः कानद्यः केचपर्वताः
सेव्या धर्मार्थिभिर्नित्यं तन्मे ब्रूहि पितामह १
ब्रह्मोवाच
अत्रैवोदाहरन्तीममितिहासं पुरातनम्
शिलोच्छवृत्तेः संवादं सिद्धस्य च महामुनेः २
कश्चित्सिद्धः परिक्रम्य समस्तां पृथिवीमिमाम्
उञ्छवृत्तेर्गृहस्थस्य गृहं प्राप्तो महामुनिः ३
स तु सम्यक्कृतातिथ्यः सुखासीनं गतक्लमम्
पृष्टवानिदमेवार्थं यन्मांत्वं परिपृच्छसि ४
शिलोञ्छवृत्तिरुवाच
के देशाः के जनपदाः केशैलाः केपि चाश्रमाः
उत्कृष्टाः पुण्यलोकाश्च ज्ञेया स्तेष्वेव चोच्यताम् ५
सिद्धउवाच
ते देशास्ते जनपदास्ते शैलास्तेपि चाश्रमाः
पुण्या त्रिपथगा येषां मध्ये भाति सरिद्वरा ६
तपसा ब्रह्मचर्येण यज्ञैस्त्यागैर्नवा पुनः
गतिं न लभते जंतुर्या गंगासेवया भवेत् ७
स्नातानां च शुभैस्तोयैर्गांगेयैर्नियतात्मनाम्
तुष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ८
अपहृत्य तमस्तीव्रं यथा भात्युदये रविः
तथापहृत्य पापानि भाति गंगाजलप्लुतः ९
अग्निं प्राप्य यथा क्षिप्रं तूलराशिर्विनश्यति
तथा गंगावगाहेन सर्वं पापं विनश्यति १०
यस्तु सूर्यांशुसंतप्तं गांगेयं सलिलं पिबेत्
स तुनीहारनिर्मुक्तात्पावकाद्धि विशिष्यते ११
चान्द्रायणसहस्त्रं तु यश्चरेत्कायशोधनम्
पिबेद्यश्चापि गंगांभः समौ ख्याताविमौ हितौ १२
तिष्ठेद्युगसहस्त्रं तु पादेनैकेन यःपुमान्
पिबेद्यथेष्टगंगांभो यो नरः सविशिष्यते १३
लंवेदर्वाक्शिरा यस्तु वर्षाणामयुतं नरः

गतिमन्विच्छतां पुंसां नास्ति गंगासमा गतिः १४
महद्भिरंशुभिर्ग्रस्ताननेकानिहमानवान्
पतितान्नरके घोरे गंगोद्धरति सेविता १५
ते संविभक्ता यतिभिर्नूनं देवैः सवासवैः
ये यान्ति नियतात्मानो गंगादेवीनिषेविताम् १६
यथोपजीवना वेदा देवादीनां विशेषतः
तथैव देहिनां गंगा सर्वकामफलाप्रदा १७
जाह्नवीतीरसंभूतां मृदं मूर्ध्ना विभर्ति यः
विभर्तिरूपं सोऽर्कस्य तमोनाशाय केवलम् १८
सप्तापरान् सप्त पूर्वान् तथा चान्यान्सुसंगिनः
स नरस्तारयेद्गंगां दृष्ट्वा स्पृष्ट्वावगाह्य च १९
दर्शनात्स्पर्शनाद्ध्याना त्तथा गंगेति कीर्तनात्
पुण्यान् पुनाति पुरुषान् शतशोऽथ सहस्रशः २०
य इच्छेत्सफलंजन्म पौरुषंश्रुतमेववा
स पितृंस्तर्पयेद्गंगा मभिगम्य सुरांस्तथा २१
श्रुताथ कीर्तिताध्याता दृष्टा पीतावगाहिता
गंगा तारयते नृणामुभौ वंशौ विशेषतः २२
जात्यन्धैरिव तुल्यास्ते मृतैः पंगुभिरेव वा
समर्था ये न पश्यन्ति गंगां पुण्यजलां शुभाम् २३
त्रिकालदर्शिभिर्नित्यं सेविता मुनिसत्तमैः
देवैः सेन्द्रैश्च को गंगां नोपसेवेत मानवः २४
वानप्रस्थैश्च यतिभिर्गृहस्थैर्ब्रह्मचारिभिः
विद्वद्भिः सेवितां गंगां पुमान् कोनाम नाश्रयेत् २५
मनोवाक्कायजैर्दोषैः पापैर्बहुविधैरपि
वीक्ष्य गंगां भवेत्पूतः पुरुषो नात्र संशयः २६
अन्तकाले च यो जीवः प्रणतः श्रद्धयान्वितः
चिंतयेन्मनसा गंगां स गच्छेत्परमां गतिम् २७
यावदस्थि मनुष्याणां गंगातोयेषु तिष्ठति
ताव द्वर्षसहस्राणि स्वर्गलोके महीयते २८
पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः

पश्चाद्गंगां निषेवन्ते ते पियान्ति परां गतिम् २९
गंगाजलोर्मिनिर्धौतः पुरुषं पवनो यथा
स्पृशते तस्यपापानि क्षयं यान्ति सदा द्विज ३०
गंगां च सुमहापुण्यां पतन्ती द्यां महेश्वरः
दधार शिरसादेवीं तां गंगां को न संश्रयेत् ३१
त्रिषुलोकेषु पुण्यत्वाद्गंगायाः प्रथितं यशः
सगरस्यात्मजान्स्वर्गं भस्मीभूतान्निनाय सा ३२
अंधाःक्लीबा जडाव्यंगाः पतिता द्रोहिणोंत्यजाः
गंगां समेत्य पुरुषैः समैर्गच्छन्तितुल्यताम् ३३
आराध्य यां तपसोग्रेण देवीं राजा भगीरथ आत्मनिष्ठः
गंगाभानयद्देवलोकात्सुपुण्यां कस्तां नरोनाश्रयेत्सिद्धिकामः ३४
तदक्षयां पृथिवीं विश्वरूपां शिवाभृतां सुरसां सुप्रसादाम्
विभावरीं प्रभूतां तत्तदिष्टां गंगांतोये त्रिदिवं गतास्ते ३५
ऋषिस्तुतामिन्द्रसुतां पुराणां पवित्रतोयाममृतां त्रिमार्गगाम्
सर्वात्मना जाह्नवीं ये प्रपन्नास्ते ब्रह्मणः सदनं संप्रयाताः ३६
हरस्यगात्रसंपर्कात् पवित्रत्वमुपागताम्
को नाम नाश्रयेद्गंगां समग्रदुरितापहाम् ३७
गंगायां मरणंचैव दृढाभक्तिश्च केशवे
ब्रह्मविद्यावबोधश्च नाल्पस्य तपसः फलम् ३८
कांक्षन्ति पितरः पुंसां सर्वेषां द्विजपुंगव
मद्वंशजोऽयं धर्मात्मा कदा गंगां गमिष्यति ३९
गंगोदकैर्यदा मर्त्याः स्वपितॄंस्तर्पयिष्यति
तदा तज्जन्म सफलं स धन्यः पुरुषोत्तमः ४०
सुदूरस्थोऽपि यो बूयात् त्रिसंध्यं श्रद्धयान्वितः
गंगा गंगेति गंगेति सोऽपिगच्छेत्परां गतिम् ४१
मरणे स्मरणं विष्णोः कथ्यतेऽत्यंतदुर्लभम्
तदप्यल्पेन कालेन गंगां संसेव्य लभ्यते ४२
गुणानामेकदेशोऽयं गंगायाः कीर्तितो मया
समस्तानिह को वक्तुं शक्तो वर्षशतैरपि ४३
यथार्णवस्य रत्नानि मेरोश्च कनकोपलाः

संख्यातुं नैव शक्यन्ते भागीरथ्या गुणास्तथा ४४
इति मतिपरमो गुणाननेकान् द्विजवररत्र समाप देवनद्याः ।
बहुविधमभिधाय तत्वभूतान् गगनतलं द्युतिमान् विवेश सिद्धः ४५
सिद्धवाक्यैश्च विविधैर्विप्रैः संतोषितस्तदा
गंगामुपास्य विधिवत्सिद्धिं प्राप्तः सुदुर्लभाम् ४६
तस्मात्वमपि विप्रेन्द्र श्रद्धया परयायुतः
गंगामेव निषेवस्व ततः सिद्धिमवाप्स्यसि ४७
इतिहासमिमं पुण्यं गंगामाहात्म्यमुत्तमम्
यः पठेच्छृणुयाद्वापि सगच्छेत्परमां गतिम् ४८
गंगाद्वारे प्रयाणे च वाराणस्यां यथा द्विज
तथा पुण्याविशेषेण कुंडे नांदीपुरोद्भवे ४९
ऋषिभिः सा समाहूता तपसः सिद्धिहेतवे
तस्मात्तत्र नरैःकार्यं स्नानं कलिमलापहम् ५०
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ गंगामाहात्म्यनाम त्रयोदशोऽध्यायः

## अध्याय १४

मरीचिरुवाच
पुनः कथय देवेश तत्र नांदीमुखोद्भवैः
तीर्थे च सुमहापुण्ये किं तीर्थं किं फलंस्मृतम् १
ब्रह्मोवाच
यत्र तीर्थे मया विप्र यज्ञमुख्यः कृतः पुरा
देव विप्रर्षिभिः सार्धं शृणुष्वैकाग्रमानसः २
मरीचिरुवाच
अत्यद्भुतमिदं ब्रह्मन् यत्त्वया समुदाहृतम्
त्ययैवं यत्कृतो यज्ञ स्तत्र क्षेत्रे महात्मना ३
अग्निष्टोमादयो यज्ञा ये वर्त्तंते धरातले
यष्टव्यस्तेषु यज्ञेषु तन्मे ब्रूहि सुरेश्वर ४
तेनैव यजता तत्र कियन्तः प्रब्रवीहिनः
ऋत्विजो मंत्रिता स्तैस्तु कृतंकर्ममखोद्भवम् ५
तत्प्रत्यक्षं कृतं सर्व मेतन्नः कौतुकंपरं

काचैव दक्षिणा दत्ता तेन तेषां द्विजन्मनाम् ६
कोऽध्वर्युर्विहितस्तत्र येन तद्यजनं कृतं
कोहोता कश्चनाग्नीध्रः को ब्रह्मा तत्र संस्थितः ७
उद्गाता कः स्थितस्तत्र ह्याचार्यो यज्ञकर्मणि
ब्रह्मोवाच
अहंते कीर्तयिष्यामि सर्वं यज्ञस्य संभवं ८
वृत्तांतं यच्च तत्रस्थ माचार्यं द्विजपुंगवाः
ये सदस्याः स्थितास्तत्रचर्त्विजोवै द्विजोत्तम ९
दक्षिणा याः प्रदत्ताश्च तेन तेषां महात्मनां
यजता देवदेवेन ब्रह्मणा मिततेजसा १०
यज्ञकामं चतुर्वक्त्रं ज्ञात्वादेवः शतक्रतुः
सर्वैः सुरगणैः सार्धं साहाय्यार्थमुपागता ११
तथा च भगवान् शंभुः सर्वदेवगणैः सह
तान्दृष्ट्वाभ्यागतान् ब्रह्मा सत्कारं कृतवान्मुदा १२
प्रोवाच विनयोपेतः कृतांजलिःपुरस्थितः
स्वागतं वःसुरश्रेष्ठः प्रसादःक्रियतां मम १३
निवेश्यतान् यथान्यायं स्थानेषुरुचिरेषुच
धन्यो स्म्यनुगृहीतोस्मि यद्यूयं स्वयमागताः १४
मंत्राहूता यथाकृच्छ्रात्सर्वसत्रेषु गच्छथ
देवा ऊचुः
येन यच्चात्र कर्तव्यं तच्छीघ्रं वद पद्मज १५
यज्ञे तव महाभाग तस्य तत्त्वं समादिश
ब्रह्मोवाच
विश्वकर्मन् द्रुतं गच्छ यज्ञमण्डपसिद्धये १६
पत्नीशाला सदृश्येव यज्ञवेदी तथैव च
पात्राणि चैव सर्वाणि ग्रहांश्चै चमसाँस्तथा १७
यूपश्च तत्प्रमाणेन कर्तव्यः स च खादीरः
शयनार्थं तथा गत्वा कर्तव्या मत्प्रमाणतः १८
इष्टिकानां सहस्राणिदश चाष्टशतानि च
कर्तव्यानि त्वया शीघ्रं चयनानीति सत्वरं १९

तथा हिरणमयश्चापि पुरुषः कार्य एव हि
तथेत्युक्त स्तत स्त्वष्टा शीघ्राच्छीघ्रतरं ययौ २०
ततस्तु पद्मजः प्राहे देवाचार्यं बृहस्पतिः
बृहस्पते त्वयानेया यज्ञार्हा ऋत्विजोऽखिलाः २१
यावत्षोडश सङ्ख्याका नान्यस्मै त द्वियुज्यते
त्वया शक्र सदा कार्या शुश्रूषा च द्विजन्मनाम् २२
हस्तपादावमर्दश्च श्रान्तानां पृष्ठमर्दनम्
धनाध्यक्ष त्वया देया दक्षिणाः कालसंभवाः २३
सुवस्त्राणिहिरण्यंचतथा न्यद्वापि वांछितं
त्वयाविष्णोसदा कार्यं कृत्वा कृत्यपरीक्षणं २४
युक्तं त्वया मघोनैव सावधानेन सर्वदा
लोकपालाश्च ये सर्वे रक्षंतु सकलादिशः २५
भूतप्रेतपिशाचानां प्रवेशं राक्षसोद्भवम्
योऽयं कामयते कामं किंचिद्वस्त्रं धनं तथा २६
विचार्य यज्ञतत्वं च तत्र यज्ञाधिपेन तु
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः २७
मरुतः परिवेष्टारो भोक्तुकामाञ्जनान्प्रति
एतस्मिन्नंतरे प्राप्ते विश्वकर्मा त्वरान्वितः २८
अब्रवीत्पंकजभवं संसिद्धो यज्ञमंडपः
सर्वमन्यत्समादिष्टं यत्त्वयोक्तं चतुर्मुख २९
ततो बृहस्पतिः प्राह समभ्येत्य पितामहम्
समानीता मया ब्रह्मन् ब्राह्मणा यज्ञकर्मणि ३०
विप्राः शोडश संख्याता ऋत्विक्कर्मणि योजय
स्वयं परीक्ष्य देवेश तत्तत् कर्मप्रसिद्धये ३१
ततो ब्रह्मा स्वयं दृष्ट्वा तां परीक्ष्य प्रयत्नतः
ऋत्विक्त्वं च नियुज्यैवं तथाचक्रे तदर्पणम् ३२
श्री ऋषय ऊचुः
ऋत्विजां चैव सर्वेषां ब्रह्मन् नामानि कीर्त्तय
येन वो विहितस्तत्र पदार्थोपिहितं वद ३३
ब्रह्मोवाच

भृगुर्होत्रे ततस्तेन वृतो ब्राह्मणसत्तमः
मैत्रावरुणसंज्ञस्तु तथैवच्च्यवनो मुनिः ३४
पुलस्त्यश्च तथाऽध्वर्युः प्रस्तोता तत्र संस्थितः
तत्रैरैभ्यो मुनिः श्रेष्ठ स्तत्रैवच सनातनः ३५
ब्रह्मा च नारदो गर्गो ब्राह्मणाच्छंसिरेव च
आग्नीध्रश्च भरद्वाजः पोतःपाराशरस्तथा ३६
तथैव तत्रक्षेत्रे च उद्गातागोभिलो मुनिः
तथैव कौशिकश्चापि प्रस्तोता यज्ञकर्मणि ३७
शांडिल्यः प्रतिहर्ता च सुब्रह्मण्यस्तथांगिराः
तस्य यज्ञस्य सिध्यर्थमित्ये ते शोडशर्त्विजः ३८
वस्त्राभरणशोभाढ्या वित्तयुक्ताःकृताश्चये
ततः कृत्वा स्वयंब्रह्मा सर्वेषा मर्हणक्रियाम् ३९
गृहोक्तेन विधानेन ततः प्रोवाच सादरम्
एषोऽहं शरणं प्राप्तो युष्माकं द्विजसत्तमाः ४०
अनुगृह्णीत मां सर्वे दीक्षायै यज्ञकर्मणि
इति श्रीवह्निपुराणे नांदीमुखमाहात्म्ये चतुर्दशोऽध्यायः

## अध्याय १५

ब्रह्मोवाच
एतस्मिन्नंतरे तत्रविप्रैर्नांदीमुखोद्भवैः १
मध्यगःप्रेषितश्चात्र गर्ता तीर्थसमुद्भवः
रे रे मध्यग गत्वा तं ब्रूहित्वं प्रपितामहम् २
विप्रवृत्तिप्रहर्तारं नीतिमार्गविवर्जितम्
एतत्क्षेत्रं प्रदत्तं नः पूर्वेषां च द्विजन्मनाम् ३
मायेश्वरेण तुष्टेन पूरिते वनजेऽखिले
तस्य दत्तस्य चाद्यैव पितामहशतं गतम् ४
पंचोत्तरमसंदिग्धं यावत्त्वं तु पितामहः
न केनापि कृतोऽस्माकं तिरस्कारस्त्वया यथाः ५
त्वं ब्रूहि पापकर्माणं न्यायमार्गविवर्जितम्
विप्रैर्नांदीमुखैर्बाह्यं योत्र यज्ञं समाचरेत् ६

श्राद्धं वा स हि वध्यः स्यात्सर्वेषां च द्विजन्मनाम्
न तस्य जायते श्रेयोऽभ्युदयश्च कथंचन ७
एतत्प्रोक्तं तथा तेन यथा स्वस्थानदो हिनः
तस्माद्यत्कुरुषे यज्ञं विप्रैर्नांदीमुखैः कुरु ८
नान्यथा लप्स्यसे कर्तुं जीवन्नांदीमुखैर्विना
एवमुक्तस्ततो गत्वा मध्यगो यत्र पद्मजः ९
यज्ञमंडपमध्यस्थो ब्राह्मणैः परिवारितः
प्रोक्तं नांदीमुखैर्यत्तु सविशेषं तदाह सः १०
तंच्छ्रुत्वा पद्मजः प्राह धैर्यपूर्वमिदं वचः
मानुषं भावप्रापन्न ऋत्विग्भिः परिवारितः ११
त्वया सत्यमिदं प्रोक्तं सर्वं मध्यगसत्तम
किं करोमि वृताः सर्वेमया ते यज्ञकर्मणि १२
ऋत्विजोऽध्वर्युपूर्वा ये प्रमादेन न काम्यया
तस्मादानय तान्सर्वानत्र स्थाने द्विजोत्तमान् १३
अनुज्ञातस्तुतैर्येन गच्छामि मखमंडपे
मध्यग उवाच
त्वं देवत्वं परित्यज्य मानुषं भावमाश्रितः १४
तत्कथं ते द्विजश्रेष्ठाः समागच्छन्ति तेंऽतिकम्
श्रेष्ठागावः पशूनां च यथा पद्मसमुद्भव १५
विप्राणामिहसर्वेषां तथा नांदीमुखाः वराः
तस्माच्चेद्वांच्छसि प्राप्तिं त्वमेतां यज्ञसंभवाम् १६
भक्त्या नांदीमुखान्सर्वान्प्रसादय पितामह
वह्निरुवाच
तच्श्रुत्वा पद्मजोभीत ऋत्विग्भिः परिवारितः १७
जगाम तत्र यत्रस्थाः क्रुद्धा नांदीमुखा द्विजाः
प्रणिपत्य ततः सर्वान् विनयेन समन्वितः १८
प्रोवाच वचनं श्रुत्वा कृतांजलिपुरःस्थितः
जानाम्यहं द्विजश्रेष्ठाः स्थाने कापालिकोद्भवे १९
युष्मद्बाह्यं वृथा श्राद्धं यज्ञकर्म तथैव च
कलिभीत्या मयानीतं स्थाने च पुष्करं निजम् २०

तीर्थं च युष्मदीयं च निक्षेपोयं समर्पितः
ऋत्विजो मां समानीता गुरुणा यज्ञसिद्धये २१
अजानता द्विजश्रेष्ठाः स्थानं नांदीमुखात्मकम्
तस्माच्च क्षम्यतां मह्यं यतस्तद्वरणं कृतम् २२
एतेषामेव विप्राणां मग्निष्टोमकृते मया
एतच्च मामकं तीर्थं युष्माकं पापनाशनम् २३
भविष्यति न संदेहः कलिकालेऽपि संस्थिते
ब्राह्मणा ऊचुः
अस्माभिर्यदि बाह्यं च यज्ञं चात्रकरिष्यसि २४
अवमन्य द्विजान्सर्वान् क्षिप्रं गच्छास्मदंतिकात्
ब्रह्मोवाच
अद्यप्रभृति यःकश्चिद्यज्ञमत्र करिष्यति २५
श्राद्धं नांदीमुखैर्बाह्यं वृथा तत्संभविष्यति
नांदीमुखोऽपि योऽन्यत्र कश्चिद्यज्ञं करिष्यति २६
एतत्क्षेत्रं परित्यज्य वृथा तत्संभविष्यति
मर्यादेयं कृता विप्रा युष्माकं च मयाधुना २७
कृत्वा प्रसादमस्माकं यज्ञार्थं दातुमर्हसि
एवमुक्त्वा तु तान् विप्रानवृणोच्च पितामहः २८
वह्निरुवाच
ततस्तैर्ब्राह्मणैस्तुष्टैरनुज्ञातः पितामहः
चकार विधिवद्यज्ञं वृता ये ब्राह्मणास्तु तैः २९
विश्वकर्मा समागत्य ततो मस्तकमुण्डनम्
चकार ब्राह्मणश्रेष्ठ नांदीमुखमते स्थितः ३०
ब्रह्मापि परमं तोषं गत्वा नारदमब्रवीत्
सावित्रीमानय क्षिप्रं येन गच्छामि मंडपे ३१
वाद्यमानेषु वाद्येषु सिद्धचारणगुह्यकैः ३२
अरणीं समुपादाय पुलस्त्यो वाक्यमब्रवीत्
यत्रपत्नीति विप्रेन्द्राः प्रोच्चैस्तत्र व्यवस्थिताः ३३
एतस्मिन्नंतरे ब्रह्मा नारदं मुनिसत्तमम्
संज्ञया प्रेषयामास पत्नीमानीयतामिति ३४

सोपिमंदं समागत्य सावित्रीं प्राह लीलया
युद्धप्रियोऽतरं वांछन् सावित्र्याः सदृशं पुनः  ३५
अहं संप्रेषितः पित्रातव पार्श्वं महेश्वरि
आगच्छ प्रस्थितः स्नातः सांप्रतं यज्ञमंडपे  ३६
परमेकाकिनी तत्र गच्छन्ती त्वं सुरेश्वरि
कीदृक्रूपा सदा यासि दृश्यसे त्वमनाथवत्  ३७
तस्मादानयतात् सर्वा याः काश्चिद्देवयोपितः
याभिः परिवृता देवि यास्यसि त्वं महामखे  ३८
एवमुक्त्वा मुनिश्रेष्ठ नारदो मुनिसत्तम
अब्रवीत्पितरं गत्वा तातांबाकारिता मया  ३९
परं तस्याः स्थिरोभावः किंचित्संलक्षितो मया
तस्य तद्वचनं श्रुत्वा ततो मन्युसमन्वितः  ४०
पुलस्त्यं प्रेषयामास सावित्र्याः संनिधौ ततः
गच्छवत्स समानीय स्थानं तां शिथिलात्मिकां  ४१
सोमभारपरिश्रान्तं पश्य त्वं मम मस्तकम्
एषकालात्ययो भावी यज्ञकर्मणि सांप्रतम्  ४२
यज्ञयानमुहूर्तोयं सविशेषो व्यवस्थितः
तस्य तद्वचनं श्रुत्वा पुलस्त्यः सत्वरं ययौ  ४३
सावित्री तिष्ठते यत्र गीतनृत्यसमाकुला
ततः प्रोवाच किं देवि त्वं तिष्ठसि निराकुला  ४४
यज्ञयानोचितः काल सोऽयं शेषस्तु तिष्ठति
तस्मादागच्छ गच्छामो धाता कृच्छ्रेण तिष्ठति  ४५
सोमभारार्दितः सोपि तस्मात्त्वं कुरु सत्वरम्
सावित्र्युवाच
सर्वदेववृतो वत्स तव तातो व्यवस्थितः  ४६
एकाकिनी कथं तत्र गच्छाम्यह मनाथवत्
तद्ब्रूहि पितरं गत्वा मुहूर्तं परिपालय  ४७
यावदभ्येति शक्राणी गौरी लक्ष्मीस्तथापराः
देवकन्यासमाजोऽयं ताभिरेष्याम्यहं द्रुतम्  ४८
सर्वासां प्रेषितो वायुर्निमन्त्रणकृते मया

आगमिष्यन्ति ताः शीघ्रमेवं वाच्यस्त्वया पिता ४९
वह्निरुवाच
सोपि गत्वा द्रुतं प्राह सोमभारार्दितं विधिम्
नैषाभ्येति जगन्नाथ प्रसक्ता गृहकर्मणि ५०
सा मां प्राह च देवानां पत्नीभिः सहिता मखे
अहं यास्यामि तासां च नैकाद्यापि प्रदृश्यते ५१
एवं ज्ञात्वा सुरश्रेष्ठ कुरु यत्ते सुरोचते
अतिक्रामति कालोऽयं यज्ञयानसमुद्भवः ५२
तिष्ठते च गृहव्यग्रा सावित्री शिथिलात्मिका
तच्छ्रुत्वा वचनं तस्य पुलस्त्यस्य पितामहः ५३
समीपस्थं तदा शक्रं प्रोवाच वचनं द्विजाः
ब्रह्मोवाच
शक्र नायाति सावित्री सापि स्त्री शिथिलात्मिका ५४
अन्यया भार्यया साकं यज्ञोऽयं क्रियतां ग्रया
पितामहवचः श्रुत्वा तदर्थं कन्यका द्विजाः ५५
शक्रेणासादिता शीघ्रं भ्रममाणा समीपतः
अथ तत्र घटव्यग्रमस्तका तेन वीक्षिता ५६
कन्यका गोपजा तन्वी चंद्रास्या पद्मलोचना
कुमारी वा सनाथा वा सुता कस्यब्रवीहिनः ५७
कन्योवाच
गोपकन्यास्मि भद्रं ते तक्रं विक्रेतुमागता
परिगृह्णासि चेन्तक्रं मूल्यं मेदेहि माचिरम् ५८
तच्छ्रुत्वा त्रिदिवेन्द्रोपि नत्वा तां गोपकन्यकाम्
जगृहे त्वरया युक्तस्तक्रंचोत्सृज्य भूतले ५९
नांदीमुखैश्च विप्रैश्च समादिष्टस्तदा हिसः
अथ तां रुदतीं शक्रः समादाय त्वरान्वितः
गोवक्त्रेण प्रवेश्याऽथ गुह्येनाकर्षयत्ततः ६०
एवं मेध्यतमां कृत्वा संस्नाप्य सलिलैः शुभैः
ज्येष्ठकुंडस्य विप्रेन्द्राः परिधाय सुवाससी ६१
ततश्च हर्षसंयुक्तः प्रोवाच चतुराननम्

द्रुतं गत्वा पुरो धृत्वा सर्वदेवसमागमे ६२
कन्येयं च सुरश्रेष्ठ समानीता मया शुभा
तवार्थाय सुरूपाङ्गी सर्वलक्षणलक्षिता ६३
गोपकन्यां विदित्वेमां गोवक्त्रेण प्रविश्य च
आकर्षिता च गुह्येन पावनार्थं चतुर्मुख ६४
वासुदेव उवाच
गवां च ब्राह्मणानां च कुलमेकं द्विधा कृतम्
एकत्र मंत्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ६५
धेनूदराद्विनिष्क्रान्ता तज्जातेयं द्विजन्मनाम्
अस्याः पाणिग्रहं देव त्वं कुरुष्व यथाविधि ६६
यावन्न चलते कालो यज्ञयानसमुद्भवः
रुद्र उवाच
प्रतिष्ठा गोमुखे यस्मादपानेन विनिर्गता ६७
गायत्री नाम ते पत्नी तस्मादेषा भविष्यति
ब्रह्मोवाच
वदन्तु ब्राह्मणाः सर्वे गोपकन्याप्यसौ यदि ६८
संभूय ब्राह्मणी श्रेष्ठा यथा पत्नी भवेन्मम
नान्दीमुखा ऊचुः
एषा स्याद्ब्राह्मणी श्रेष्ठा गोपजाति विवर्जिता ६९
अस्माद्वाक्याच्चतुर्वक्त्र कुरु पाणिग्रहं द्रुतम्
वह्निरुवाच
ततः पाणिग्रहं चक्रे तस्या देवः पितामहः ७०
कृत्वा सोमं ततो मूर्ध्नि गृह्योक्तविधिना द्विजाः
तत्रस्था च महादेवी संतिष्ठति सुपावनी ७१
अद्यापि लोके विख्याता धनसौभाग्यदायिनी
यस्तस्यां कुरुते मर्त्यः कन्यादानं समाहितः ७२
समस्तफलमाप्नोति राजसूयाश्वमेधयोः ७३
कन्या हस्तग्रहं तत्र प्राप्नोति पतिना सह
सा स्यात्पुत्रवती साध्वी सौभाग्यसुखसंयुता ७४
पिंडदानं नरस्तत्र यः करोति द्विजोत्तम

पितरस्तस्य संतुष्टास्तर्पिताः पितृतीर्थतः ७५
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ गायत्रीविवाहो नाम पंचदशोऽध्यायः

## अध्याय १६

वह्निरुवाच
एवं पत्नी समासाद्य गायत्रीं चतुराननः
संप्रहृष्टमना भूत्वा प्रस्थितो यज्ञमंडपम् १
गायत्र्यपि समादाय मूर्ध्नि तामरणिं मुदा
प्रतस्थे संपरित्यज्य गोपभावं विनिर्गतम् २
वाद्यमानेषु वाद्येषु ब्रह्मघोषे दिवं गते
गीतेषु गीयमानेषु गंधर्वेषु समंततः ३
सर्वदेवद्विजोपेतः संप्राप्तो यज्ञमंडपम्
गायत्र्या सहितो ब्रह्मा मानुषं भावमाश्रितः ४
एतस्मिन्नंतरे विप्र केशनिर्वापणं ततः
विश्वकर्मा नखानां च गायत्र्या स्तदनंतरम् ५
औदुम्बरं ततो दण्डं पुलस्त्योऽसौ समाददे
एणशृङ्गान्वितं चर्म मंत्रवद्द्विजसत्तम ६
पत्नीशालां गृहीत्वा तु गायत्रीं मौनधारिणीं
मेखलां निदधे चान्यां कट्यां मौंजीमयीं शुभाम् ७
ततश्चक्रे परं कर्म यदुक्तं यज्ञमंडपे
ऋत्विग्भिः सहितो वेधा वेदवाक्यं समादृतः ८
प्रवर्ग्य जायमाने च तत्राश्चर्यमभून्महत्
जाल्मरूपधरः कश्चिद्दिग्वासा विकृताननः ९
कपालपाणिरायातो भोजनं दीयतामिति
निषेध्यमानोऽपि च तैः प्रविष्टो याज्ञिकं सदः १०
स कृत्वाटनमन्याय्यं तर्ज्यमानोऽपि तापसैः
सदस्या ऊचुः
कस्मात्पापसमेत स्त्वं प्रविष्टो यज्ञमंडपम् ११
कपाली नग्नरूपोयं यज्ञकर्मविवर्जितः
तस्माद्गच्छ द्रुतं मूढ यावद्ब्रह्मा न कुप्यति १२

तथान्ये ब्राह्मणश्रेष्ठास्तथा देवाः सवासवाः
जाल्म उवाच
ब्रह्मयज्ञमिमं श्रुत्वा सुदूरादहमागतः १३
बुभुक्षितो द्विजश्रेष्ठास्तत्किमर्थं विगर्हथ
दिवांधकृपणैः सर्वैस्तर्पितैः क्रतुरुच्यते १४
अन्यथाऽसौ विनाशाय यदुक्तं ब्राह्मणैर्वचः
अन्नहीनो दहेद्राष्ट्रं मंत्रहीन स्तथर्त्विजम् १५
यजमानमदाक्षिण्यं नास्तियज्ञसमोरिपुः
ब्राह्मणा ऊचुः
यदि त्वं भोक्तुकामस्तु समायातो व्रज द्रुतम् १६
एतस्यां सत्रशालायां भुंजते यत्र तापसाः
दीनाधाः कृपणाश्चैव ततः क्षुत्क्षामकांठिताः १७
अथवा धनकामस्त्वं वस्त्रकामोऽथ तापसः
व्रज वित्तपतिर्यत्र दानशालां समाश्रितः १८
अनिन्द्योयं महामूर्ख यज्ञः पैतामहोयतः
अर्थिभ्यः सर्वतः पुण्यं तत्किंनिन्दसि दुर्गते १९
एवमुक्तः कपालं सः परिक्षिप्य धरातले
अन्तर्हितस्ततः सद्यो दीपवद्द्विजसत्तम २०
ऋत्विज ऊचुः
कथं यज्ञक्रिया कार्या कपाले सदसि स्थिते
तस्मिन्नपि तथा क्षिप्ते भूयोऽन्यत्समपद्यत २१
एवं शतसहस्राणि प्रयुतान्यर्बुदानि च
तत्र जातानि तैर्व्याप्तो यज्ञवाटः समंततः २२
हाहाकारस्ततो जज्ञे समस्ते यज्ञमंडपे
दृष्ट्वा कपालसंघातान् यज्ञकर्मप्रदूषकान् २३
अथ संचिंतयामास ध्यानं कृत्वा पितामहः
हरेच्छया समाज्ञाय तत्सर्वं हररूपधृक् २४
कृतांजलिपुटो भूत्वा ततः प्रोवाच सादरम्
महेश्वरं समासाद्य यज्ञवाटसमाश्रयम् २५
किमिदं युज्यते देव यज्ञेऽस्मिन् कर्मणः क्षतिः

तस्मात्संहर सर्वाणि कपालानि सुरेश्वर  २६
यज्ञकर्मविलोपोयं माभूत्त्वयिसमागते
ततः प्रोवाच संक्रुद्धो भगवान् शशिशेखरः  २७
तन्मे हीष्टतमं पात्रं भोजनाय सदास्थितम्
एतद्विधममी कस्माद्विद्विषन्ति पितामह  २८
तथा न मां समुद्दिश्य जुहुवुर्जातवेदसि
यथान्या देवतास्तद्वन्मंत्रपूतं यथाविधि  २९
तस्माद्यदि विधेकार्या समाप्तिर्यज्ञकर्मणः
तत्कपालाश्रितं हव्यं कर्तव्यंसकलं विधे  ३०
तथा मामेवमुद्दिश्य विशेषाज्ञातवेदसि
होतव्यं हविरेवात्र समाप्तिं यास्यतिक्रतुः  ३१
नान्यथा सत्यमेवोक्तं तवाग्रे चतुरानन
पितामह उवाच
रूपाणि तवदेवेश पृथग्भूतान्यनेकशः  ३२
संख्यया परिहीनानि ध्येयानि स्कलानि च
एतन्महाव्रतं रूप माख्यातं ते त्रिलोचन  ३३
नैव च मखकर्म स्यात्तत्रैवं हि न युज्यते
अद्यैतत्कर्म कर्तुं च श्रुतिवाक्यं कथंचन  ३४
तत्रवाक्यमपि त्र्यद्म नान्यथा कर्तुमुत्सहे
मृणमयेषु कपालेषु हविः श्राव्यं कथंचन  ३५
अद्यप्रभृति यज्ञेषु पुरोडाशात्मकं द्विजैः
तत्त्वोद्देशेन होतव्यं देवेश शतरुद्रियम्  ३६
विशेषात्सर्वयज्ञेषु जप्यं चैव विशेषतः
कपालानां तु द्वारेण त्वयारूपं निजंकृतम्  ३७
प्रकटं च सुरश्रेष्ठ कपालेश्वरसंज्ञितः
तस्मात्वं भविता रुद्र च्चेत्रेऽस्मिन्द्वादशोऽपरः  ३८
अत्र यज्ञं समारभ्य यस्त्वां प्राक्पूजयिष्यति
अविघ्नेन मख स्तस्य समाप्तिं प्रव्रजिष्यति  ३९
एवमुक्ते ततस्तेन कपालानि द्विजोतय
तानिसर्वाणि नष्टानि संख्यया रहितानि च  ४०

एवमुक्त्वा चतुर्वक्त्रः पूजयामास तत्क्षणात्
लिंगं माहेश्वरं तत्र कपालेश्वरसंज्ञितम् ४१
अब्रवीच्च ततो वाक्यं यश्चैतत्पूजयिष्यति
लिंगं नद्यांच संस्नाय स यास्यति परां गतिम् ४२
शुक्लपक्षे चतुर्दश्यां कार्तिके जागरन्तु यः
करिष्यति पुनश्चास्य लिंगस्य तु समाहितः ४३
आजन्मप्रभवात्पापात्स वै मुक्तिमवाप्स्यसि
एत ते कथितं यस्तु शृणुयाज्जागरे सति ४४
तस्य पुण्यप्रभावं तु न कश्चित्कथितुं क्षमः
एवमुक्तेथ विधिना प्रहृष्टस्त्रिपुरान्तकः ४५
यज्ञमंडपमास्थाय प्रस्थितो वेदिसंनिधौ
ब्राह्मणैश्च ततः कर्म प्रारब्ध यज्ञसंभवम् ४६
विस्मयोत्फुल्लनयनैर्नमस्कृत्य महेश्वरम्
वह्निरुवाच
एवं च यजतस्तस्य चतुर्वक्त्रस्य तत्र च ४७
ऋषीणां कोटिरायाता दक्षिणापथवासिनाम्
श्रुत्वापि तं महायज्ञं कौतुकेनसमन्विताः ४८
कीदृशो भविता यज्ञोदीक्षितो यत्र पद्मजः
कीदृक् क्षेत्रं च तत्पुण्यं कपालेश्वरसंज्ञितम् ४९
कीदृशास्तेन विप्रेन्द्रा ऋत्विजस्तत्र ये स्थिताः
अथ ते सुपरिश्रान्ताः मध्यं दिनगते रवौ ५०
रविवारे च संप्राप्ते नक्षत्रे चाश्विसंज्ञिते
वैवस्वत्यां तिथौ चैव संप्राप्ते धर्मपीडिताः ५१
कंचिज्जलाशयं प्राप्य प्रविष्टाः सलिलं शुभम्
शंकुकर्णा महाकर्णा वक्रनासास्तथा परे ५२
कृष्णांगा स्फुरितैः पादैर्नखैर्दीर्घैः समुच्छ्रितैः
ततो यावद्विनिष्क्रांताः पश्यन्ति च परस्परम् ५३
तद्वैरूप्याद्विनिर्मुक्ताः संजाताः कामसन्निमाः
ततो विस्मयसंपन्ना मिथः प्राचुः प्रहर्पिताः ५४
रूपव्यत्ययमालोक्य ज्ञात्वा तीर्थं तदुत्तमम्

अत्र स्नानादिदं रूपमस्माभिः प्राप्तमुत्तमम् ५५
यस्मात्तस्मादिदं तीर्थं रूपतीर्थं भविष्यति
त्रैलोक्ये सकले ख्यातं सर्वपातकनाशनम् ५६
येऽत्रस्नानं करिष्यन्ति श्रद्धया परया युताः
सुरूपास्ते भविष्यन्ति सदा जन्मनि जन्मनि ५७
पितरस्तर्पयिष्यन्ति येऽत्र श्रद्धासमन्विताः
जलेनापि गया श्राद्धा त्ते लास्यन्तेऽधिकंफलम् ५८
येऽत्र रत्नप्रदानं च प्रकरिष्यन्ति मानवाः
भविष्यन्ति न संदेहो राजानस्ते भवे भवे ५९
स्थास्यामो वयमत्रैव सांप्रतं कृतसंश्रयाः
न यास्यामो वयं तत्र यद्यपि स्यात्सुशोभनम् ६०
एवमुक्त्वाथ व्यभजं स्तत्सर्वं मुनयश्च तत्
यज्ञोपवीतमंत्राणि तानि तीर्थानि चक्रिरे ६१
वह्निरुवाच
अद्यापि च द्विजश्रेष्ठ तत्रतीर्थे जगद्गुरुः
प्रथमं स्पृशते तोयं नित्यं स्याद्दयितं शुभम् ६२
निष्कामः स पुनर्मर्त्यो यः स्नानं तत्र श्रद्धया
कुरुते स परंश्रेयः प्राप्नुया त्सिद्धलक्षणम् ६३
एवं ते मुनयः सर्वे विभज्य तन्महानदम्
सायं तनं च तत्रैव कृत्वा कर्म सुविस्तरम् ६४
ततो निशामुखे प्राप्ता यत्र देवः पितामहः
दिक्षितस्त्वथ मौनी च यज्ञमंडपसंस्थितः ६५
ते प्रणम्य स्थितास्सर्वे आगता ऋत्विजस्ततः
अभिवाद्याथ तान्सर्वा नुपविष्ट स्ततोऽग्रतः ६६
चक्रुश्चाथ कथाः सर्वा यज्ञकर्मसमुद्भवाः
सोमपानस्य संबंधे व्यत्ययं च समुद्भवम् ६७
उद्गातृप्रभवंचैव तथाऽध्वर्यं परस्परम्
प्रोचुस्ते तत्वमाश्रित्य तथान्ये दूषयन्तितत् ६८
अन्ये मीमांसका स्तत्र कोपसंरक्तलोचनाः
हन्युस्तेषां मतं वादमाश्रिता वाग्विचक्षणाः ६९

परिशिष्टविदश्चान्ये मध्यस्था द्विजसत्तमाः
प्रोचुर्वादं परित्यज्य सामिप्रायं यथोदितम् ७०
महावीरपुरोडाश वचनप्रमुखां स्तथा
विवादं चक्रुरप्यन्ये स्वं स्वं पक्षं समाश्रिताः ७१
एषा सा रजनी तेषामतिक्रान्ता द्विजन्मनाम् ७२
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ ब्रह्मयज्ञ समारंभे प्रथमोदिवसो नाम षोडशोऽध्यायः संपूर्णः

## अध्याय १७

वह्निरुवाच
द्वितीये दिवसे प्राप्ते यज्ञकर्मसमुद्भवे १
द्वादश्यामभवत्तत्र शृणुध्वं तद्द्विजोत्तमाः
वृत्तांतं सर्वदेवानां महाविस्मयकारकम् २
मखकर्मणि प्रारब्धे ऋत्विग्भिर्वेदपारगैः
जलसर्पं समादाय वटुः कश्चित्सुकर्मकृत् ३
प्रविश्य च सदस्तत्र सर्पं तं ब्राह्मणान्तिकम्
चिक्षेप प्रहसंश्चैव स वटुर्वै भयंकरम् ४
ततस्तु दुंदुभिस्तूर्णं भ्रममाण इतस्ततः
विप्राणां सदसिस्थानां सक्तानां यज्ञकर्मणि ५
होतर्युपस्थिते प्रैषे दीर्घसत्रसमुद्भवे
स सर्पो वेष्टयामास तस्य कायं समंततः ६
न चचाल निजस्थानात्प्रायश्चित्त विमीषया
नोवाच वचनं सोऽत्र चयनन्यस्तलोचनः ७
हाहाकारो महानासीत्तं दृष्ट्वा सर्पवेष्टितम्
तस्य पुत्रो विनीतात्मा मैत्रावारुणकर्मणि ८
संस्थितस्तेन संदृष्टः पिता सर्पाभिवेष्टितः
ज्ञात्वातु वेष्टितं तस्यभये सर्पसमुद्भवे ९
शशाप क्रोधसंयुक्तस्ततस्तं स वटुं मुनिः
यस्मात्पापत्वया सर्पः क्षिप्तः सदसि दुर्मते १०
तस्माद्भव द्रुतं सर्पो मम वाक्यादसंशयम्

वटुरुवाच
हास्येन जलसर्पोऽयं मया मुक्तोऽत्र लीलया ११
न ते तातं समुद्दिश्य तत्किं मां शपसे द्विज
एतस्मिन्नंतरे मुक्त्वा तस्य गात्रं स पन्नगः १२
जगामान्यत्र तस्यापि सर्पत्वं समपद्यत
सोपि सर्पत्वमापन्नः सनातनसुतो वटुः १३
दुःखशोकसमापन्नो ब्राह्मणैः परिवेष्टितः
अथ गत्वा भृगुं सोऽपि वाष्पव्याकुललोचनः १४
प्रोवाच गद्गदं वाक्यं प्रणिपातपुरः सरम्
सनातनसुतश्चापि पौत्रस्तु परमेष्ठिनः १५
शप्तस्तवसुतेनास्मि च्यवनेन महात्मना
निर्दोषो ब्राह्मणश्रेष्ठ तस्माच्छापाच्च रक्ष माम् १६
तच्छ्रुत्वा वचनं प्राह कृपाविष्टो भृगुः स्वयम्
अयुक्तं विहितं तात यच्छप्तोऽयं वटुस्त्वया १७
न मां धर्षयितुं शक्तो विषाक्तोपि भुजंगमः
किं पुनर्जलसर्पोयं निर्विषो रज्जुसंन्निभः १८
न मामुद्दिश्य निर्मुक्तः सर्पोऽनेन द्विजन्मना
शापमोक्षं कुरुष्वास्य तस्माच्छीघ्रं द्विजन्मनः १९
च्यवन उवाच
यदि त्यजति मर्यादामब्धिः शैत्यंव्रजेद्रविः
ऊष्णत्वं च क्षपानाथस्तन्मेस्यादनृतं वचः २०
तच्छ्रुत्वा वचनं तस्य स्वयमेव पितामहः
ततःशीघ्रं तत्रयातः सपौत्रः सर्परूपधृक् २१
प्रोवाच न विषादस्ते पुत्र कार्यः कथंचन
यत्सर्पत्वमनुप्राप्तः शृणुष्वात्र वचो मम २२
पुरा संसृष्टुकामोहं नागानां नवमं कुलम्
तद्भविष्यति त्वत्पार्श्वात्समर्यादं धरातले २३
मंत्रौषधियुजां पुंसां न पीडामाचरिष्यति
संप्राप्स्यसि परां पूजां समस्ते जगतीतले २४
अत्रास्ति सुशुभं तोयं क्षेत्रे कापालिके शुभे

तत्रस्थित्वा समावासः पुत्र कार्यस्त्वया सदा २५
तत्रस्थस्य तपःस्थस्य नागः ककोटको महान्
तव दास्यति तत्कन्यां ततःसृष्टिर्भविष्यति २६
नवमस्य कुलस्यात्र समर्यादस्य भूतले
श्रावणे कृष्णपक्षे तु संप्राप्ते पंचमीदिने २७
संप्राप्स्यति परां पूजां पृथिव्यां नवमं कुलम्
अद्यप्रभृति तत्तोयं नागतीर्थमिति स्मृतम् २८
ख्यातिं यास्यति भूपृष्ठे सर्वपातकनाशनम्
येऽत्र स्नानं करिष्यन्ति संप्राप्ते पंचमीदिने २९
न तेषां वत्सरं यावद्भविष्य त्यहितं भयम्
विषार्दितस्तु यो मर्त्यस्तत्रस्नानं करिष्यति ३०
तत्क्षणेनिर्विषो भूत्वा संप्राप्स्यति परं सुखम्
पुत्रकामा तु या नारी पचम्यां भासकरोदये ३१
करिष्यति तथा स्नानं फलहस्ता प्रभक्तितः
भविष्यति च शीघ्रं सा वन्ध्यापि च सपुत्रिणी ३२
वह्निरुवाच
एवं प्रवदतस्तस्य ब्रह्मणोऽव्यक्तजन्मनः
अन्येनागाः समायातास्तत्र यज्ञे निमंत्रिताः ३३
वासुकिस्तक्षकश्चैवपुंडरीकः कृशोदरः
कंबलाश्वतरौ नागौ शेषः कालीय एव च ३४
ते प्रणम्य वचः प्रोचुःप्रोच्चैर्देव मृषन्प्रति
नागा ऊचुः
यज्ञोद्देशाद्वयं प्राप्ता यज्ञेऽत्र प्रपितामह ३५
येन कुर्मो वदं शीघ्रं नागराज्येऽधितिष्ठतः
ब्रह्मोवाच
नागतीर्थे सदा स्थेयं सर्वैस्तत्र समाहितैः ३६
यः कश्चिन्मम यज्ञेऽत्र दुष्टभावं समाश्रितः
समागच्छति विज्ञाय रक्षणीयः स सत्वरम् ३७
राक्षसो वा पिशाचो वा भूतो वा मानुषोपि वा
एतत्कृत्यं तु वो नागा मम यज्ञस्य रक्षणम् ३८

तथा यूयमपि प्राप्ते मासि भाद्रपदे तथा
पंचम्यां कृष्णपक्षस्य तत्र पूजामवाप्स्यथ  ३९
वह्निरुवाच
बाढमित्येव ते प्रोच्य प्रणिपत्य पितामहम्
सनातनसुतोपेता नागास्तीर्थं समाश्रिताः  ४०
कामप्रदं च भक्तानां नराणां स्नानकारिणाम्
यस्तत्र कुरुते स्नानं सकृद्भक्त्या समन्वितः  ४१
नान्वयेपि भयं तस्य जायते सर्पसंभवम्
तत्र यच्छतिमिष्टान्नं द्विजेभ्यः सज्जनैः सह  ४२
पूजयित्वा तु नागेन्द्रान् सनातनपुरःसरान्
सप्तजन्मान्तरं यावन्न स दुःख मवाप्नुयात्  ४३
भूतप्रेतपिशाचानां शाकिनीनां विशेषतः
न छिद्रं न च रोगाश्च नाधिर्न च रिपोर्भयम्  ४४
यश्चेदं शृणुयाद्भक्त्या वाच्यमानं द्विजोत्तम
सोपिसंवत्सरं यावत्पन्नगैर्न च पीड्यते  ४५
सर्पदष्टस्य यस्यैतत् पुरतः पाठ्यते भृशम्
एतत्तीर्थस्य माहात्म्यं कालदष्टोपि जीवति  ४६
पुस्तके लिखितं यत्र एतत्तीर्थसमुद्भवम्
माहात्म्यं तिष्ठति यत्र कलिस्तत्र न तिष्ठति  ४७
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ द्वितीयदिवसकृत्यं नाम सप्तदशोऽध्यायः संपुर्णः

## अध्याय  १८

वह्निरुवाच
तृतीये दिवसे प्राप्ते त्रयोदश्यां द्विजोत्तम
प्रातःसवनमादाय ऋत्विजः सर्व एव ते  १
स्वे स्वे कर्मणि संलग्ना यज्ञकर्मसमुद्भवे
ततः प्रववृते यज्ञस्तदा पैतामहो महान्  २
सर्वकामसमृद्धस्तु सर्वैः समुदितो गुणैः
दीयतां दीयतां तत्र भुज्यतां भुज्यतामिति  ३

एकः संश्रूयते शब्दो तथर्त्विक्सम्भवोऽपरः
नान्यस्तत्र तृतीयस्तु यज्ञे पैतामहे शुभे ४
योयं कामयते कामं हेमरत्नसमुद्भवम्
स तत् प्राप्नोत्यसंदिग्धं वांछिताच्च चतुर्गुणम् ५
पक्वान्नस्य कृतास्तत्र दृश्यन्ते पर्वताः शुभाः
घृतक्षीरमहानद्यो दानार्थं वित्तराशयः ६
एतस्मिन्नंतरे कश्चिज्ज्ञानी प्राप्तो द्विजोत्तमः
अतीतानागतं वेत्ति वर्तमानं च यः सदा ७
स ब्राह्मणान्नमस्कृत्य निविष्टश्च तदग्रतः
जन्मान्तरेषु विप्राणां सर्वेषां च द्विजोत्तमः ८
कथयामास यद्वृत्तं वाल्यात्प्रभृति कृत्स्नशः
ततस्त ऋत्विजः सर्वे कौतुकाविष्टचेतसः ९
पप्रच्छुर्ज्ञानिनं तं च विस्मयोत्फुल्ललोचनाः
विस्मृतानि स्मरंतश्च निजकृत्यानि वै ततः १०
प्रोक्तानि गर्हणीयानि ह्यसंख्यातानि सर्वशः
ततस्ते पुनरेवाथ पप्रच्छुर्ज्ञानिनं च तम् ११
लोकोत्तरमिदं ज्ञानं कथं ते संस्थितं द्विज
को गुरुस्ते समाचक्ष्व परं कौतुहलं हि नः १२
अहोज्ञानमहोज्ञानं नैतत् दृष्टं श्रुतं न च
यादृशं ते द्विजश्रेष्ठ दृश्यते पार्श्वसंस्थितम् १३
किं ब्रह्मणा स्वयं विप्र त्वमेवं प्रतिबोधितः
किंवा हरेण तुष्टेन किंवा देवन चक्रिणा १४
नान्यप्रबोधितस्यैवं ज्ञानं संजायते स्फुटम्
अतिथिरुवाच
पिंगला कुररःपक्षी सर्पः सारंग एव च १५
इषुकारः कुमारी च षडेते गुरवो मम
एतेषां चेष्टितं दृष्ट्वा ज्ञानं मे समुपस्थितम् १६
ब्राह्मणा ऊचुः
कथयस्व प्रसादेन कथं ते गुरवः स्थिताः
कीदृशं च त्वया दृष्टं तेषां चैव विचेष्टितम् १७

कस्मिन् देशे समुत्पन्नः कस्मिन्स्थाने ब्रवीहिनः
कीदृशं हि त्वयादृष्टं तेषां चैव विचेष्टितम् १८
नाम ते किं नु गोत्रं च सर्वं विस्तरतो वद
अतिथिरुवाच
चंद्रादित्यकुलेऽत्रापि चत्वारो ये व्यवस्थिताः १९
शुनः शेपोऽथ शाक्रेयो बुद्धो दांत इति स्मृतः
तेषां मध्ये तु यो बुद्धः शांतो दान्त इति स्मृतः २०
चंद्रादित्ये च गोत्रे च विख्यातो वेदपारगः
नांदीमुखः समुत्पन्नः पश्चिमे वयसि स्थिते २१
तस्याहं प्रथमः पुत्रः प्राणेभ्योऽपि सुहृत् प्रियः
ततोऽहं यौवनं प्राप्तो यदा द्विजवरोत्तमाः २२
तदामे दयितस्तातः पंचत्वं समुपागतः
एतस्मिन्नंतरे राजा ह्यस्मद्देशाधिपो द्विजाः २३
सुतपास्तेन निर्दिष्टो ह्यहं किन्तु विकर्मणि
शांतं दांतं समालोक्य विश्वस्तेन महात्मना २४
तस्य चान्तः पुरे ह्यासीत् पिंगला नाम नायिका
दौर्भाग्येन समोपेता रूपेणापि समन्विता २५
अथान्याः शतशस्तस्य भार्याश्चांतः पुरे स्थिताः
ताः सर्वा रजनीवक्त्र व्याकुलत्वं प्रयान्ति च २६
आहरन्ति परान् गंधान् धूपांश्च कुसुमानि च
पुष्पाणि च विचित्राणि ह्यन्याः सूक्ष्मांवराणि च २७
तावद्यावत्स्थितः कालः स्वामिसंयोगसंभवः
मन्मथोत्सवसंयुक्ताः पुलकेन समन्विताः २८
एकाजानाति मां सुप्तां नूनमाकारयिष्यति
अन्या जानाति मां चैव परस्पर मयुध्यताम् २९
स्पर्धयन्ति प्रयुध्यन्ति विरूपाणि वदन्ति च
तासां मध्यात्ततश्चैका प्रयाति नृपसंनिधौ ३०
शेषा वैलक्ष्यमासाद्य निःश्वस्य प्रस्वपन्ति च
दुःखार्ता न लभन्ते च ताश्च निद्रां पराभवात् ३१
कामेन पीडितांग्यश्च बाष्पपूर्णेक्षणाः स्थिताः

आशा हि परमं दुःखं निराशा परमं सुखम्  ३२
आशं निराशां कृत्वा च सुखं स्वपिति पिंगला
ततो मयापि तद्दृष्टं तस्याश्चेष्टितमुत्तमम्  ३३
न करोति च शृंगारं न स्पर्धां च कथंचन
न व्याकुलत्वमापेदे सुखं स्वपिति पिंगला  ३४
आशाः सर्वाः परित्यज्य स्वपिमीह सुखं ततः
ये स्वपंति सुखं रात्रौ तेषां कायाग्नि रिध्यते  ३५
आहारं प्रतिगृह्णन्ति ततः पुष्टिकरं परम्
तदेतत् कारणं जातं मम तेजोभिवृद्धये  ३६
गुरुत्वे पिंगला जाता तेन मेसा द्विजोत्तमाः
आशापाशैः परीतांगा ये भवन्ति नरार्दिताः  ३७
ते रात्रौ शेरते नैव तदा प्राप्तिविचिन्तया
नैवाग्निर्दीप्यते तेषां जागरश्च ततः परम्  ३८
आहारं वांछते नैव ततस्तेजोभिवर्धनम्
सर्वत्र विद्यते जंतुर्नवांच्छति कदाचन  ३९
यथा यथा भवेल्लाभो वांच्छितस्य नृणामिह
हविषा कृष्णवर्त्मेव वृद्धिं याति तथा तथा  ४०
यथा शृंगं करोः काये वर्धमानस्य वर्धते
एवं तृष्णापि वित्तेन वर्धमानेन वर्धते  ४१
एवं ज्ञात्वा महाभागा पुरुषेण विजानता
दिवा तत्कर्म कर्तव्यं येनरात्रौ सुखं भवेत्  ४२

इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ पिंगलोपाख्यान नामाष्टादशोऽध्यायः संपूर्णः

## अध्याय १९

अतिथिरुवाच
एतद्वः सर्वमाख्यातं यथा मे पिंगला गुरुः
संजाता कुररो जातो यथावत्प्रवदाम्यहम्  १
ममासीद्द्रविणं भूरि पितृपैतामहं महत्
यथा पुत्राश्च पौत्राश्च दायादा बान्धवा अपि  २

ते मां सर्वे प्रबाधन्ते द्रव्यसस्यकृते सदा
यस्यार्थं न प्रयच्छाभि सोपि चैवंप्रबाधते ३
सीदमानस्तु सुभृशं दर्शयन् प्राणसंक्षयम्
एके साम्ना प्रयाचन्ते वित्त भेदेन चापरे ४
उपप्रदानैश्चान्येऽपि केचिद्दण्डेन च द्विजाः
एवं नाहं क्वचित्सौख्यं तेषां पार्श्वान्नलब्धवान् ५
विचिन्तयन् दिवारात्रं क्लेशस्य परिसंक्षयम्
उपायं न च पश्यामि येन सौख्यं प्रजायते ६
अन्यस्मिन्दिवसे दृष्टः कृतमांसपरिग्रहः
कुररश्चांचुको व्योम्नि डयमानस्त्वरान्वितः ७
हन्यमानः समंताच्च मांसार्थे विविधैः खगैः
अथ तेन परिक्षिप्तं तन्मांसं पक्षिजाद्भयात् ८
यावत्तावत्सुखी जातस्तेऽपि सर्वे समुद्गताः
मया च क्लिश्यमानेन तद्वच्च निजजांधवैः ९
सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः
आमिषस्यपरित्यागात्कुररः सुखमेधते १०
एवं निश्चित्य मनसा सर्वानानीय बान्धवान्
पुत्र पौत्रान् पुनः सर्वान् धनं तेभ्यो निवेदितम् ११
त्रिःसत्यं शपथं कृत्वा नान्यदस्तीति मे गृहे
विभागार्थं यथान्यायं ममैतच्च यथाविधि १२
ततः प्रभृति तैर्मुक्तः सुखं तिष्ठाम्यहं द्विजाः
एतस्मात्कारणाज्जातो ममासौ कुररो गुरुः १३
अर्थसंपद्विमोहाय विमोहो नरकाय च
तस्मादर्थमनर्थं च मोक्षार्थी दूरतस्त्यजेत् १४
यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि
आकाशे पक्षिमिश्चैव तथा सर्वत्र वित्तवान् १५
दोषहीनोपि धनवान् भूपाद्यैः परितप्यते
दरिद्रः कृतदोषोपि सर्वत्र निरुपद्रवः १६
आलंबिताः परैर्यांति प्रस्खलन्ति पदे पदे
अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव १७

भक्तद्वेषो न च बहिरुचितं गुरुलघ्वपि
मुखे च कटुता नित्यं धनिनां ज्वरिणामिव १८
अर्थार्थी जीवलोकोयं स्मशानमपि सेवते
जनितारमपि त्यक्त्वा निःस्वं यान्ति सुता अपि १९
सुतस्य वल्लभस्तावत्पितापुत्रोऽपि वै पितुः
यावन्नार्थस्य संबंधस्ताभ्यां भावि परस्परम् २०
संबन्धे वित्तजे जाते वैरं संजायते मिथः
एतस्मात्कारणाद्वित्तं मया त्यक्तं तपोधनाः २१
तेन सौख्येन तिष्ठामि कुररस्य प्रसादतः
शृणुध्वं च महाभागा यथा मेऽहिर्गुरुः स्थितः २२
यथा मयागृहं त्यक्तं दृष्ट्वा सर्वं विचेष्टितम्
गृहारंभः सुदुःखाय सुखाय न कदाचन २३
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते
उषित्वा तत्र सौख्येन भूयो गत्वादिशं व्रजेत् २४
ममत्वं कुरुते नैव ममेदं गृहमित्यसौ
नगृहं जायते तस्य न स्वयं हि कृतंयतः २५
यः पुनः कुरुते हर्म्यं स्वयं क्लेशैः पृथग्विधैः
न तस्य याति तन्माया मृत्युकालेऽपि संस्थिते २६
गृहात्संजायते भार्या ततः पुत्राश्च कन्यकाः
तेषामर्थे करोतिस्म कृत्या कृत्यं ततः परम् २७
कोष्टवारमि वात्मानं वेष्टय न्नावबुध्यते
पुत्रदारगृहक्षेत्रसक्ताः सीदन्ति जन्तवः २८
लोभपंकार्णवे मग्ना नष्टा वनगजाइव
एकः पापानि कुरुते फलं भुङ्क्तेमहाजनः २९
भोक्तारस्तु विमुच्यन्ते कर्ता दोषेण लिप्यते
एतस्मात्कारणाद्धर्म्यं मयात्यक्तं द्विजोत्तमाः ३०
मोक्षमार्गार्गलाभूतं दृष्ट्वा सर्पविचेष्टितम्
एकरात्रं वसेद्ग्रामे त्रिरात्रं पत्तने वसेत् ३१
यो यतिः स यतिः प्रोक्तो योऽन्यो योगविडम्बकः
विधूमवत्प्रशांताग्नौ यस्तु माधुकरीं चरेत् ३२

गृहे च विप्रमुख्यानां स यतिर्नैतरः स्मृतः
एवं ज्ञात्वा मया विप्रा दृष्ट्वा सर्पविचेष्टितम्  ३३
सर्वसंगपरित्यागो मोक्षार्थं परिकल्पितः
एवं ममाहिः संजातो गुरुर्ब्राह्मणसत्तमाः  ३४
तत्प्रभावान्महातेजः संजातं विग्रहे मम
यथा मे भ्रमरो जातो गुरुस्तच्च वदाम्यहम्  ३५
कस्मिन्वृक्षे मया दृष्टो भ्रमरः कोपि संगतः
शाखाग्रचं तु समाश्रित्य कृतपूर्वनिबन्धनः  ३६
वसंतसमये प्राप्ते पुष्पवंतश्च ये द्रुमाः
सुगंधफलपुष्पाश्च सुगंधदलसंयुताः  ३७
तेषां सूक्ष्मं समादाय सर्वश्रेष्ठं रमान्तरं
नियोजयति शाखाग्रे तरोरस्य सदैव हि  ३८
अनिर्विण्णतया हृष्टस्तदा सम्यङ्गिनरीक्षितः
मधुजालं ततो जातं कालेन महता महत्  ३९
येनान्ये मधुना तृप्तिं प्राप्ताः शतसहस्रशः
ततस्तेषां समादाय सारभूतं पृथक् पृथक्  ४०
कृतानि भूरि शास्त्राणि वेदान्ताश्च पृथग्विधाः
उपजीवन्ति यान्यन्ये यथा भृंगास्तथा द्विजाः  ४१
एवं मे मधुपो जाता गुरुत्वेन द्विजोत्तमाः
तेनाहं तेजसा युक्तो नान्यदस्तीह कारणम्  ४२
वेदान्तवादिनो येऽत्र प्रभवन्ति व्रतान्विताः
निर्लोभा गततृष्णाश्च ते भवन्ति सुतेजसः  ४३
वेदान्तास्तु पृथग्रूपा मया दृष्टा विचारिताः
समसूपास्तथा ग्रन्था मर्त्यलोके हतार्थिनः  ४४
एवं मे गुरुतां प्राप्तो मधुपो गुरुसत्तमः
इषुकारस्तथा जातस्तच्चैवं प्रब्रवीमि वः  ४५
आत्माबलोकनार्थाय मया दृष्टाःसहस्रशः
योगिना ज्ञानसंपन्नास्तैःप्रोक्तं यत्स्वशक्तितः  ४६
आत्माबलोकनं भावि सुशिष्याय यथा तथा
समाधि योगरूपैश्च चतुरशीति सङ्ख्यकैः  ४७

आसनैस्तत्प्रमाणैश्च पद्मासनसुपूर्वकैः
असंख्यैः कारणैश्चैव मध्यात्मपठनैस्तथा ४८
ततस्तु लक्षितो नैव मया कुत्र कथंचन
ततो वैराग्यमापन्नः प्रभ्रमामि धरातले ४९
गुरुत्वेन च लेभेऽहं गुरुमात्माबलोकने
अन्यस्मिन्नहनि प्राप्ते राजमार्गेण गच्छता ५०
मया दृष्टो महीपालः सैन्येन महता वृतः
ततोऽहं माग मृत्सृज्य सन्मुखस्यमहीपतेः ५१
उटजद्वारमागत्य किंचिदूर्ध्वोपसंस्थितः
तत्रापि च स्थितः कश्चित्पुरुषो बाणकारकः ५२
ऋजुकर्मणि संसक्तः शराणां नतपर्त्रणाम्
तस्मिन्दूरगते भूपे तथान्यः सेवकोऽभ्यगात् ५३
सपृष्टस्त्वरया तेन शृणवतोऽपि ममद्विजाः
कांडकर्मणि संसक्तं स्वकृतौ दत्तमानसं
कियती वर्तते वेला गतस्य पृथिवीपतेः ५४
न मया वीक्षितः कश्चिद्राजमार्गेण भूपतिः ५५
तदन्यं प्रच्छ चेत्कार्यं मत्या वश्यकता यदि
शरकर्मणि संसक्तस्त्वहमत्र व्यवस्थितः ५६
तच्छ्रुत्वा वचनं तस्य स्वचित्ते चिंतितं मया
एकचित्ते समायोगो ब्रह्महानसमुद्भवः ५७
नान्यथा भविता मे स ततश्चित्तनिरोधनम्
करोमिब्रह्मसंसिध्यै ततो मेऽसौ भविष्यति ५८
ततः प्रभृति चित्तं स्वे धारयामि सदैव तु
विश्वरूपं ततः सूर्यं हृत्पंकजनिवासिनम् ५९
ततो दिक्षु दिगन्तेषु गगने धरणीतले
मेकं चैव पश्यामि नान्यत्किंचिद्द्विजोत्तमाः ६०
अहं च तेजसा युक्तस्तत्प्रभावेण संस्थितः
एवं मे स गुरुर्जातः शरकारो द्विजोत्तमाः ६१
शृणुध्वं कन्यका जाता गुरुत्वे मे यथा पुरा
सर्वसंगपरित्यागी यदाहं निर्गतो गृहात् ६२

ममानुगच्छतः पृष्ठे ततो भार्या विनिर्गता
शिशुं पुत्रं समादाय कन्यामेकां सुशोभनाम्  ६३
ततोऽहं भार्यया प्रोक्तो वानप्रस्थाश्रमस्थितः
कुरुष्वात्र स्थितो मुक्तिरत्रैव हि भविष्यति  ६४
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः
यदिस्यात्संयतात्मा च नूनं मुक्तिमवाप्नुयात्  ६५
अथवा मां परित्यज्य यदियास्यन्यतो विभो
तदाहं च मरिष्यामि सत्यमेतदसंशयम्  ६६
मृतायां मयि ते बालावेतावनुमरिष्यतः
कुमारी च कुमारश्च तस्मान्नाथ दयां कुरु  ६७
मा व्रजत्वं परं तीर्थं परिजानन्नपि स्वयम्
कपालेश्वरजंक्षेत्रमेतत्पुष्य तमं स्मृतम्  ६८
सवेषामेव तीर्थानां श्रुतमेतन्मया विभो
वदतां ब्राह्मणेन्द्राणां तथाऽन्येषां तपस्विनाम्  ६९
श्लोकोऽयं बहुधा नाथ कीर्त्यमानो मया विभो
विश्वामित्रस्य वक्त्रेण सन्मुनेः सत्यवादिनः  ७०
पुनंति सर्वतीर्थानि स्नानदाना दसंशयम्
कपालेश्वरजं क्षेत्रं स्मरणादेव पावनम्  ७१
ततः कृच्छ्रात्परिज्ञाय मयाश्रमनिषेवणम्
वानप्रस्थोद्भवं वृत्तं ततोहं तत्र संस्थितः  ७२
तत्रस्थस्य हि मे कन्या क्रीडते पुरतः स्थिता
बलयापूरिताभ्यां च प्रकोष्ठाभ्यां ततस्ततः  ७३
यथा सा कुरुते विप्राः कंदमूलफलाशनम्
तनुत्वं याति कायेन तथा चैव दिने दिने  ७४
ततो मे जायते दुःखं तेषां पतनसंभवम्
कस्यचित्त्वथ कालस्य गतस्य वलयद्वयम्  ७५
तस्याहस्ते ततस्ताभ्यां शब्दः संजायते मिथः
ततः कालेन महता ताभ्यामेकं व्यवस्थितम्  ७६
न संघर्षो न शब्दश्च तत्रस्थस्य न जायते
तद्विचिंत्य मया सोऽपि ह्याश्रमः परिवर्जितः  ७७

चिंतितं च मया चित्ते कृत्वाचैव सुनिश्चयम्
बहुभिः कलहो नित्यं द्वाभ्यां संघर्षणं तथा ७८
एकाकी विचरिष्यामि कुमारीवलयं तथा
ततः सुप्तां परित्यज्य तां भार्यां शिशुसंयुताम् ७९
गतोऽहं दूरमध्वानं यत्र नो वेत्ति सा च माम्
मह्यां क्वापि शये नित्यं यल्लब्धकृतभोजनः ८०
भ्रमामि मेदिनीपृष्ठे त्यक्त्वा संसारबंधनम्
ततो मे ज्ञानं संपन्नमेवं विप्राः शनैः शनैः ८१
अतीतानागतं चैव वर्तमानं विवेशतः
एवं मे कन्यका जाता गुरुत्वे द्विजसत्तमाः ८२
एतद्वः सर्वमाख्यातं यत्पृष्टोऽस्मि गुरोः कृते
न युष्माकं गुरोर्मिथ्या कीर्तयामि कथंचन ८३
एवं मे ज्ञानमुत्पन्नं प्रकारैः षड्भिरेव च
एतल्कोकोत्तरं ज्ञानं युष्मत्प्रत्ययकारकम् ८४
अग्निरुवाच
ततस्ते ब्राह्मणाः सर्वे पप्रच्छुस्तं द्विजोत्तमम्
वानप्रस्थाश्रमं त्यक्त्वा भार्यां शिशुसमन्विताम् ८५
क्वगतस्त्वं तदाचक्ष्व कियत्कालं च संस्थितः
अतिथिरुवाच
अहं भ्रान्तः सहस्राणि ग्रामाणां च शतानि च ८६
यत्रास्तमितशायी सन्ननेकानि द्विजोत्तमाः
संख्यया रहितान्येव वर्षाणां च शतानि च ८७
दृष्टानि मुख्यतीर्थानि तथैवायतनानि च
दृष्टाश्च पर्वताः श्रेष्ठाः नद्यश्च विमलोदकाः ८८
स्वयमेव भया ज्ञातो वाराणस्यां स्थितेन च
यज्ञः पैतामहो भावी स्थानेऽस्मिन्मामके यतः ८९
ततोऽहं सत्वरं प्राप्तः कौतुकेन द्विजोत्तमाः
कीदृशः स मखो भावी यत्र यज्वा पितामहः ९०
एतस्मिन्नंतरे प्राप्ताः सर्वे देवाः सवासवाः
वासुदेवं पुरस्कृत्य तथा चैव महेश्वरम् ९१

कर्मान्तरं समासाद्य पौलस्त्याद्यास्तथर्त्विजः
ब्रह्मापि स्वयमायातो मृगचर्मधरस्तथा  ९२
ततस्ते तुष्टिमापन्नास्तस्य ज्ञानेन तेन च
प्रोचुश्च वरदास्तुभ्यं सर्व एव दिवौकसः  ९३
तस्माद्वरय भद्रं ते प्रार्थयस्व यथेप्सितम्
अवश्यं तव दास्यामो यद्यपि स्यात्सुदुर्लभम्  ९४
अतिथिरुवाच
यदि तुष्टाः सुरा मह्यं प्रयच्छन्ति वरं मम
अनेनैव शरीरेण देवत्वं प्रार्थयाम्यहम्  ९५
यज्ञभागसमोपेतं यथान्येषां दिवौकसाम्
विशेषेण सुरश्रेष्ठाः स्नानं चोपरिसंस्थितम्  ९६
देवा ऊचुः
नूनं त्वं विबुधो भूत्वा देवलोकं निवत्स्यसि
अनेनैव शरीरेण यज्ञभागविवर्जितः  ९७
यच्छामो यदि ते विप्र यज्ञांगं मानुषाय भोः
अप्रामाण्यं श्रुतेर्भावि तव दत्तेन तेन च  ९८
अतिथिरुवाच
देवत्वेन न मे कार्यं यज्ञांशरहितेन च
तदहं साभयिष्यामि यथा मुक्तिर्भविष्यति  ९९
तच्छ्रुत्वा पद्मजः प्राह सर्वान् देवान् कृतांजलिः
शृण्वन्तु देवताः सर्वाः प्रब्रवीमि हितं वचः  १००
ब्रह्मोवाच
ममायं ब्रह्मणो यज्ञे दूरादेव समागतः
नांदीमुखो विशेषेण पात्रं ज्ञानसमुद्भवे  १०१
प्रतिज्ञातस्तथा सर्वैर्वरोऽस्य विबुधैर्यतः
तस्मात्प्रदीयतामस्मै यदभीष्टं सुरोत्तमा  १०२
माहेश्वर उवाच
यथास्य जायते तृप्तिर्यज्ञभागाधिका सदा
तथाहं कथयिष्यामि शृण्वन्तु विबुधोत्तमाः  १०३
य एष क्रियते यज्ञस्तस्य नाथो हरिः स्मृतः

एतस्मात्कारणाद्विप्र स देवो यज्ञपुरुषः १०४
सकीर्त्यं भोजनं देयं ब्राह्मणस्य द्विजोत्तमाः
तेनास्य भविता तृप्तिर्यज्ञांगाभ्यधिका सदा १०५
अदत्वाऽस्मै कृतं श्राद्धं यत्किंचित्प्रभविष्यति
तद्यास्यत्यखिलं व्यर्थं तथा भस्महुतं यथा १०६
वैश्वदेवान्त मासाद्य यश्चैनं पूजयिष्यति
विष्णुनामसमोपेतं भविष्यति तदक्षयम् १०७
दत्तं स्वल्पमपि प्रायः श्रद्धापूतेन चेतसा
श्राद्धे वा वैश्वदेवे वा यश्चैनं नार्चयिष्यति १०८
तत्प्राप्तं व्यर्थतां तस्य तच्च सर्वं भविष्यति
अस्मिंस्तुष्टिगते सर्वे सुरा यास्यन्ति संमुदम् १०९
पितरश्च तमायान्ति विमुखाः सन्मुखाः सदा
तच्छ्रुत्वा विबुधाः सर्वे महेश्वरवचस्तथा ११०
तथेति मुदिताः प्रोचुर्ब्रह्मविष्णुपुरःसराः
ततः प्रभृति संजाता पूजा चातिथिसंभवा १११
तस्मात्सर्वप्रयत्नेन पूजा कार्यातिथेः सदा
यज्ञपुंसश्च यज्ञस्य न संदेहः कथंचन ११२
अतिथिरुवाच
अत्रास्ति मामकं तीर्थं मया यत्र तपः कृतम्
कपालेश्वरजे क्षेत्रे पुराकाले द्विजोत्तमाः ११३
अंगारकेण संयुक्ता चतुर्थी स्याद्यदा तिथिः
सान्निध्यं तत्र कार्यं च सर्वैर्देवैश्च तद्दिने ११४
कुर्यात्तत्रैव यः स्नानं तस्मिन्नहनि संस्थिते
सर्वतीर्थफलं तस्य जायतां वः प्रसादतः ११५
पुलस्त्यउवाच
ऋत्विजः सकला देवाः संस्थिताः कौतुकान्विताः
उत्तिष्ठन्तु च यच्छीघ्रं यज्ञकर्मप्रसिद्धये ११६
एतस्मिन्नंतरे सर्वे तस्य वाक्यप्रणोदिताः
कुर्वन्ति यज्ञकर्माणि होमपूर्वाणि यानि च ११७
इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ अतिथेरुत्पत्तिनाम तृतीयदिवसकृत्यम्

नाम एकोनविंशोऽध्यायः

अध्याय २०

मरीचिरुवाच
भूय एव महाबाहो वद माहात्म्यमुत्तमम् १
अतिथेः कृत्स्नमस्माकं विस्तरेण च पद्मज
ब्रह्मोवाच
श्रूयता मृषिशार्दूल माहात्म्यमिदमुत्तमम् २
येन संश्रुतमात्रेण नश्येत्पापं दिनोद्भवम्
यन्मया कथितं पूर्वं नारदाय महात्मने ३
गृहस्थानं परोधर्मो नान्योस्त्यतिथिपूजनात्
अतिथेर्न च देवोस्ति तस्यातिक्रमणेन च ४
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ५
सत्यं शौचं तपोऽधीतं दत्तमिष्टं शतं समाः
तस्य सर्वमिदं नष्टमतिथिं यो न पूजयेत् ६
दूरादतिथयो यस्य गृहमायान्ति निर्वृताः
स गृहस्य इति प्रोक्तः शेषाश्च गृहरक्षिणः ७
न पुरा कृतपुण्यानां नराणामिह भूतले
त्रीणिन प्रतिपद्यन्ते श्रद्धादानं शुभागिरः ८
तुष्टेऽतिथौ गृहस्थस्य तुष्टाः स्युः सर्वदेवताः
विमुखे विमुखाः सर्वे भवन्ति न च संशयः ९
तस्मात्तोषयितव्यश्च गृहस्थेन समाहितः
अथात्मनः प्रदानेन यदीच्छेच्छुममात्मनः १०
त्रिविधस्त्वतिथिः प्रोक्तो गृहस्थानां द्विजोत्तम
तस्याहं वच्मि ते कालं शृणुष्व सुसमाहितः ११
श्राद्धीयो वैश्वदेवीयो सूर्याढ्यश्च तृतीयकः
ये चान्ये भोजनार्थीयास्ते सामान्याः प्रकीर्तिताः १२
सांकल्पे विहिते श्राद्धे पितृणां भोजनोद्भवे
समागच्छति यः काले तस्मिन् श्राद्धीयएवसः १३

दूराध्वानं पथि श्रान्तं वैश्वदेवान्तमागतम्
अतिथिं तं विजानीयात् नागतः पूर्वमागतः १४
प्रियो वा यदि वा द्वेष्यो मूर्खः पंडितएव वा
वैश्वदेवे तु संप्राप्ते सोऽतिथिः स्वर्गसंक्रमः १५
न पृच्छेद्गोत्रवरणं न स्थानं वेदमेव च
दृष्ट्वा यज्ञोपवीतं च भोजयेत्तं प्रभक्तितः १६
श्राद्धे वा वैश्वदेवे वा यद्यागच्छति नाऽतिथिः
घृताहुतिं ततो दद्यात्तन्ना म्ना च हविर्भुजि १७
अशक्त्या भोज्यदानस्य देयं शक्त्या ततः परम्
तस्यान्नमपि च स्तोकं येन तुष्टिं प्रगच्छति १८
तस्याशक्त्या प्रदातव्यं सस्यं च गृहमेधिना
सूर्योदये तु संप्राप्तो गृहात्पूजां विना व्रजेत् १९
निराशः पातकं तस्य निजं दत्वा प्रयाति सः
तृणानि भूमि रुदकं वाक्चतुर्थी च मुनृता २०
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन
स्वागतेनाग्नय स्तृप्तिं गृहस्थस्य प्रयान्ति च २१
आसनेन व्रजेत्तुष्टिं स्वयंभूः प्रपितामहः
अर्घ्येण शंभुः पाद्येन सर्वे देवाः सवासवाः २२
भोज्यदानेन विष्णुः स्यात्सर्वदेवमयोऽतिथिः
तस्मात्पूज्यः सदा विप्रा भोजनीयो विशेषतः
नामाप्युच्चार्य भोज्योन्यो ब्राह्मणा गृहमेधिना २३
इति श्रीवह्निपुराणे नांदीमुखोत्पत्ता अतिथिमाहात्म्यं नाम विंशोऽध्यायः

## अध्याय २१

ब्रह्मोवाच
चतुर्थे दिवसे प्राप्ते ततो यज्ञसमुद्भवे १
ऋत्विग्भिर्याज्ञिकं कर्म प्रारब्धं तदनन्तरम्
सोमपानादिकं कर्म पशोर्हिंसादिकं तथा २
पशोर्गुदं समादाय प्रस्थाताचाप्यधारयत्
एकांते सदसोर्मध्ये होमार्थं द्विजसत्तम ३

तस्मिन् व्याकुलतां याते ब्राह्मणः कश्चिदागतः
युवा तत्र प्रविष्टस्तु मांसभक्षणलालसः ४
ततो गुदं पशोर्दृष्ट्वा भक्षयामास चोत्सुकः
एतस्मिन्नंतरे प्राप्तः प्रस्थाता तस्य संनिधौ ५
भक्ष्यमाणं समालोक्य तं शशाप ततः परम्
धिक् धिक् पापसमाचार होमार्थं यद्गुदं धृतम् ६
तत्त्वया दूषितं लौल्याद् यज्ञविघ्नकृरं परम्
उच्छिष्टेन मया होमः कर्तव्यो नैव सांप्रतम् ७
राक्षसाना मिदं कर्म यत्त्वया समनुष्ठितम्
तस्मात्त्वं मम वाक्येन राक्षसो भव मा चिरम् ८
एतस्मिन्नंतरे काल ऊर्ध्वकेशोऽभवद्द्विसः
रक्ताक्षः शंकुकर्णश्च कृष्णदंतोऽतिभैरवः
गतास्थिः स्नायुशेषश्च चामुंडाकृतिरेव च ९
स च विश्वावसुर्नाम पुलहस्यसुतो मुनिः
मंत्रपूतस्य मांसस्य भक्षणार्थं समागतः १०
वेदवेदांगतत्वज्ञः पौत्रस्तु परमेष्ठिनः
तं दृष्ट्वा राक्षसाकारं वित्रेसुः सर्वतो द्विजाः ११
केचिच्छरणमापन्ना विष्णो रुद्रस्य चापरे
पितामहस्य चान्येतु गायत्र्याः शरणं गताः १२
रक्ष रक्षेति क्रन्दन्तो भयसंत्रस्तमानसाः
सोऽपि दृष्ट्वा तदात्मानं गतं राक्षसतां द्विजः १३
बाष्पपूर्णेक्षणो दीनः पितामहमुपाद्रवत्
स प्रणम्य ततोवाक्यं कृतांजलिरुवाच तम् १४
पौत्रोहं तव देवेश पुलहस्य सुतो द्विजः
नीतो राक्षसतामद्य प्रस्थात्रा कोपितेन च १५
जिह्वालौल्येन देवेश पशोर्गुदमजानता
भक्षितं तन्मया देव होमार्थं यत्प्रकल्पितम् १६
तस्मान्मानुषतां देव मम देहि दयां कुरु
राक्षसत्वं यथा याति तथा नीतिर्विधीयताम् १७
तच्छ्रुत्वा जल्पितं तस्य दयां कृत्वा पितामहः

प्रतिप्रस्थातरं चैव वाक्यमेतदुवाचह १८
बालोऽयं मम पौत्रोऽस्ति कृत्याकृत्यं न वेत्ति च
तस्मात्तं राक्षसं भावं हरस्वास्य द्विजोत्तम १९
तच्छ्रुत्वा स मुनिः प्राह प्रायश्चित्तं मखे तव
अनेन जनितं देव गुदं दूषयता विभो २०
तस्मादेष मया शप्तो यज्ञे विघ्नकरो मम
नाहमस्य हरिष्यामि राक्षसत्वं कथंचन २१
नर्मणापि मया प्रोक्तं कदाचिन्नानृतं वचः
ब्रह्मोवाच
प्रायश्चित्तं करिष्येऽहं यज्ञस्यास्य प्रसिद्धये २२
दक्षिणाग्नौ यथोक्तेन होमं कृत्वा विधानतः
त्वमस्य राक्षसं भावं हरस्व वचनान्मम २३
सोऽब्रवीच्छीतलो वह्निर्यदि स्यादुष्णगुः शशी
तन्मेस्यादन्यथा वाक्यं व्याहृतं प्रपितामह २४
तस्य तद्वचनं श्रुत्वा ज्ञात्वा चैव च निश्चयम्
विश्वावसुं विधिः प्राह ततो राक्षसरूपिणम् २५
त्वं वसानेन रूपेण तिष्ठताद्वचनं मम
कुरुष्वैतत् प्रयच्छामि येनस्थानमनुत्तमम् २६
श्रीमन्नांदीपुरस्यास्य पश्चिमं स्थानमाश्रिताः
राक्षसा बहवः सन्ति कूष्मांडाश्च पिशाचकाः २७
तत्र गच्छन्ति ये सर्व निगृह्णन्ति च तत्क्षणात्
भूताः प्रेताः पिशाचाश्च कूष्मांडाश्च विशेषतः २८
नगरानुपुरो दृष्ट्वा तद्भयाद्यान्ति दूरतः
तद्गच्छ पुत्र तत्र त्वं सर्वेषामधिपो भव २९
राक्षसानां मया दत्तं तव राज्यं च सांप्रतम्
राक्षस उवाच
आधिपत्ये स्थितेनैवं राक्षसानां पितामह ३०
किं मया तत्र भोक्तव्यं तेभ्यो देयं च किं वद
राज्ञा चैव यतो देयं भृत्यानां भोजनं विभो ३१
तन्ममाचक्ष्व देवेश दयां कृत्वा गरीयसीम्

नकरोति च यो राजा भृत्यवर्गस्य पोषणम्  ३२
रौरवं नरकं याति श्रुतमेतन्मया पुरा
ब्रह्मोवाच
यच्छ्राद्धं दक्षिणाहीनं तिलैर्दर्भैर्विवर्जितम्  ३३
तत्सर्वं ते मया दत्तं यद्यपि स्यात्सुतीर्थकम्
यच्छ्राद्धं शूकरः पश्येन्नारीवाथ रजस्वला  ३४
श्वभिश्च गर्दभैर्दृष्टं तत्सर्वं ते भविष्यति
विधिहीनं तु यच्छ्राद्धं दर्भैर्वामूलवर्जितैः  ३५
वित्तैस्तुचाधिकैर्वापि तत्सर्वं ते भविष्यति
यद्वा माहिषिको भुङ्क्ते शुनी वा कुनखी तु वा  ३६
कुष्ठी वाथ द्विजो भुङ्क्ते तत्ते श्राद्धं भविष्यति
अस्नातैर्यत्कृतं श्राद्धं यच्चाधौतांम्बरैः कृतम्  ३७
तैलाभ्यंगयुतैश्चापि तत्ते श्राद्धं भविष्यति
श्यामदंतस्तु यद्भुंक्ते तद्भुंक्ते वृषलीपतिः  ३८
द्विजघ्नो वाथ यद्भुंक्ते तत्ते श्राद्धं भविष्यति
यो यज्ञो दक्षिणाहीनो यच्चाशौचयुतैः कृतम्  ३९
ब्रह्मचर्यविहीनं तु तत्फलं ते भविष्यति
प्रत्यक्षं लवणं यच्च यच्चाधौताम्बरं भवेत्  ४०
जातीपुष्पप्रदानं च तत्ते सर्व भविष्यति
यजमानो द्विजो वापि ब्रह्मचर्यविवर्जितः  ४१
तच्छ्राद्धं ते मया दत्तं तथान्यदपि हीनतः
मंत्रक्रियाभ्यां यत्किंचिद्रात्रौ दत्तं हुतं तथा  ४२
संक्रान्तिसोमपर्वाभ्यां व्यतिरिक्तं तु कुत्सितम्
इत्युक्त्वा विररामाशु ब्रह्मा लोकपितामहः
राक्षसः सोऽपि तत्रैव लभ्यस्थानं तु राक्षसम्  ४३

इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ राक्षसश्राद्ध कथनं नाम
एकविंशोऽध्यायः

## अध्याय २२

श्रीब्रह्मोवाच

ततस्तु पंचमे चाह्नि संजाते द्विजसत्तम
श्वेताम्बरधराःसर्वे सुस्नाता शुचयः स्थिताः १
चक्रुः सर्वाणि कर्माणि विष्णुना प्रतिबोधिताः
सदोमध्यगताश्चैव मृत्विग्वरणपूर्वकम् २
अध्वर्युणा समादिष्टात्प्रैषात्प्रोचुर्यथाक्रमम्
होमार्थं दीप्तवह्नौ वा ऋत्विग्भिः सुसमाहितैः ३
एतस्मिन्नंतरे काल उद्गात्रा कर्मयोजितम्
शंकुभिः क्रियते यच्च सामगीतिप्रसूतिजम् ४
सप्तावर्तं द्विजश्रेष्ठाः सदोमध्यगतेन च
यत्रागच्छन्ति ते सर्वे देवदेवांशलालसाः ५
सोमपानकृते चैव विशेषेण मुदान्विताः
प्रारब्धे सोमभक्षे च गीते चोद्गातृनिर्मिते ६
आगता कन्यका चैका सामगीतिसमुत्सुका
शंकुवर्णनजं चित्रं वांछमाना विचक्षणा ७
ब्रह्मणश्च सुताश्रेष्ठा देवदेवस्य सा द्विज
वक्रांगी ति च नाम्ना सा सामश्रवण लालसा ८
उद्गातारं च सदसि वचनं व्याजहार सा
यथा तथा प्रवर्तन्ते शंकवः सामपूजिताः ९
दक्षिणाग्नौ द्रुतं गत्वा कुरु होमं यथोदितम्
येन त्वं मुच्यसे पापान्न चेद्व्यर्थो भविष्यति १०
तस्यास्तद्वचनं श्रुत्वा साभिप्रायं द्विजोत्तम
ततः स चिंतयामास यावत्तद्व्याहृतं वचः ११
ततः पपृच्छ तां कन्या मुद्गाता विस्मयान्वितः
कुतस्त्वमभियाता च सुता कस्य वदस्व मे १२
श्रीवक्रांगी उवाच
ब्रह्मणश्च सुता चास्मि विख्याता सर्वतः स्थिता
जातिस्मरा महाभाग प्राप्ता गंधर्वलोकतः १३
शृणुध्वं वचनं विप्रा शप्ताहं नारदेन हि
विपंचीं वादयश्चैव दृष्टः स मुनिसत्तमः १४
अजानश्चैव तानानां विशेषं मूर्छनोद्भवम्

मया स हसितोतीव तानभंगतया गतः १५
ततः सकुपितो मह्यं ददौ शापं द्विजोत्तम
मिथ्योपहसितो यस्मादहं शापमतोऽर्हसि १६
मानुषाणामयं धर्मस्तस्मात्त्वं मानुषी भव
मया प्रसादितः सोऽपि पित्रा सार्द्धं मुनीश्वरः १७
शापान्तं कुरु मे नाथ बालिशाया द्विजोत्तम
मानुषत्वं च मे भूयात्सुस्थाने सुकुले विभो १८
सुस्थाने चांतकालश्च ब्राह्मणस्य निवेशने
ततोहं तेन संप्रोक्ता नांदीमुखपुरे शुभे १९
देवशर्मा तु विप्रेन्द्रः कुलीनः सर्वशास्त्रवित्
सुब्राह्मणी तस्य जाया सत्यभामेति विश्रुता २०
तस्या गर्भं समासाद्य मानुषत्वं समाचर
यदा पैतामहो यज्ञस्तस्मिन् क्षेत्रे भविष्यति २१
उद्गातुः समये तस्य शंकोश्चैव विपर्यये
यदा तु स त्वया वाच्यो ह्यस्थाने शंकुराहतः २२
सर्वदेव सभामध्ये तदा मोक्षो भविष्यति
वक्रांग्युवाच
इमां मे विस्फुरत्कान्तिं तनुं पश्य द्विजोत्तम २३
विमानं पश्य चायातं पित्रा संप्रेषितं मम
उद्गातोवाच
तुष्टोहं ते विशालाक्षि यज्ञस्याविघ्नकारके २४
न वृथा दर्शनं मे स्याद्विशेषाद्देवसंगमे
दिव्यरूपेण व कार्येण तव पूजा भविष्यति २५
देवा ऊचुः
युक्तं त्वया द्विजश्रेष्ठ सत्यमेतदुदाहृतम्
अस्माकमपि वाक्येन सत्यमेतद्भविष्यति २६
ब्रह्मोवाच
उद्गात्रा सैवमुक्ता च तिष्ठतिष्ठेति चाब्रवीत्
देवी वरविमानेन गृहीतेना म्बरस्थिता २७
वक्रांग्युवाच

यदि मे यच्छसि वरं तुष्टोऽसि ब्राह्मणोत्तम
सर्वेषामेव देवानां पुरस्तश्च ददस्व तम् २८
अद्यप्रभृति यः कश्चिदत्र यज्ञं समाचरेत्
तन्मध्येमां स्थापयित्वा मूर्तिः कार्या हिरण्मयी २९
ततो मत्पुरतश्चैव कार्यं शंकुप्रचारणम्
स्वर्गस्थाया भवेत्तुष्टिर्मम तेन कृतेन च ३०
ब्रह्मोवाच
तस्यास्तद्वचनं श्रुत्वा ह्युद्गाता चैवमब्रवीत्
अद्यप्रभृति यः कश्चिद्यज्ञमत्र करिष्यति ३१
सदो मध्ये तु संस्थाप्य पूजयित्वा विलेपनैः
वस्त्रैराभरणैश्चैव गंधपुष्पविलेपनैः ३२
ततः शंकुप्रचारं च करिष्यति त्वदग्रतः
यस्तु नांदीमुखो विप्रो विवाहादिषु कर्मसु ३३
तवपूजां विना येऽन्यत् कुर्वन्ति च विमोहिताः
तेषां मद्वचनाद्देवि प्रभविष्यति विघ्नकम् ३४
एतन्नांदीमुखं स्नानं मया दत्तं तवेश्वरि
विघ्नेभ्यो रक्षणीयं ते ह्यधिष्ठानं च तावकम् ३५
एतद्वाक्यं मया प्रोक्तं नांदीमुखसमागमे
नान्यथा भावि भद्रं ते त्वं संतोषं परिव्रज ३६
त्वयाविरहितं नांदीमुखः कर्म करिष्यति
वृथा भावि च तत्सर्वं यथा भस्महुतं तथा ३७
या नारी सदसो मध्ये फलैस्त्वां पूजयिष्यति
फले फले कोटिगुणं तस्याः श्रेयो भविष्यति ३८
सफलाश्च दिशः सर्वा भविष्यन्ति न संशयः
वस्त्रमाभरणं या च पुष्पधूपादिकं तथा ३९
तुभ्यं दास्यति तत्सर्वं तस्याः कोटिगुणं फलम्
पुरं तावत् परीक्षस्व माविमानं समारुह ४०
एतस्मिन्नेव काले तु देवशर्मसुताऽभवत्
देवी नगरमध्यस्था सर्वा नार्यो द्विजोत्तमाः ४१
कुतुहलात्समायाता तस्यादर्श नलालसाः

काचित्फलानि चादाय काचिद्वस्त्राणि भक्तितः ४२
यथार्हं पूजिता ताभिः सर्वाभिरित्यलम् द्विजाः
सपत्नीकस्तदा प्रोक्तो निषिद्धस्तु तथा तया ४३
तात तात नमस्कारं मा मे कुरु सहाम्बया
प्राप्तास्मि स्वर्गतिं ब्रह्मन् मामे नाशं वितर्कय ४४
तिष्ठात्रैव सपत्नीको यावदद्य दिनं विभो
त्वामादाय सपत्नीकं यास्यामि त्रिदिवालयम् ४५
अनेनैव शरीरेण याचयित्वा सुरोत्तमान्
ततस्तौ हर्षितौ तत्र पितरौचैव सुस्थिरौ ४६
वेक्षमाणौ सुतायास्तां पूजां जनविनिर्मिताम्
मन्यमानौ तदात्मानमधिकं सर्वदेहिनाम् ४७
तस्य ये स्वजनाः के चित् सर्वेऽपिते द्विजोत्तमाः
शंसमानाः सुता तां च तत्समीपं व्यवस्थिताः ४८
एतस्मिन्नंतरे प्राप्तो भृगुवर्यः पितामहः
निष्क्रम्य सवनात्तस्मात्कृतांजलिरुवाचतम् ४९
उद्भ्रात्रा देव चात्मीयो मार्गःश्रुतिविवर्जितः
विहितः कन्यकां धृत्वा सदोमध्ये सुरेश्वरः ५०
देवत्वं जल्पितं तस्याः कुमार्याः सुरसंनिधौ
सोमपानं तथा कुर्मः वयं तत्र तथा सह ५१
ततो विधिः समायातो पप्रच्छ द्विजसत्तम
कासौ कन्या किमर्थं च सदोमध्ये धृता त्वया ५२
सोब्रवीच्छापभ्रष्टेयं देवीयं ब्रह्मसद्मनि
अवतीर्णा विधेर्यज्ञे मुक्तिरस्याः प्रकीर्तिता ५३
नारदेन पुरा देव कोपेन च तथा मुदा
तस्यै देववरो दत्तो मया तुष्टेन वै पुनः ५४
शंकुप्रचारो नोवाह्यस्तव संदृश्यते क्वचित्
देवैः सर्वैः समानीता प्रतिष्ठां प्रपितामह ५५
अनेन सहिताः सर्वे कामिनीलालसेन च
एतस्मिन्नंतरे प्राप्ताः कैलासाश्च द्विजोत्तमाः ५६
हृष्टामातृगणा मे च ह्यष्टषष्ठीप्रमाणतः

पूज्यंते ये च गंधर्वैः सिद्धैः साध्यैर्मरुद्गणैः ५७
पृथक्पृथग्विधैरूपैर्लोकविस्मयकारकैः
प्रनृत्यन्त्यो हमन्त्यश्च गायन्त्यश्च तथा पराः ५८
तासां कोलाहलं श्रुत्वा ब्रह्मविष्णुपुरः सराः
विस्मयं परमं प्राप्ताः सर्वेदेवाः सवासवाः ५९
किमेतदिति जल्पन्तः प्रोत्थिता यज्ञमंडपे
एतस्मिन्नंतरे प्राप्ताः सर्वास्ता यत्र पद्मजः ६०
प्रणम्य शिरसा सर्वास्ततः प्रोचुश्च सादरम्
वयमेव स्मायाताः श्रुत्वा ते यज्ञमंडपम् ६१
आमंत्रिताश्च देवेश वायुना तव वाक्यतः
यज्ञभागो न चास्माकं विद्यते यज्ञकर्मणि ६२
एतान्येव दिनानीह नायातास्तेन पद्मज
वक्रांगीं च वयं श्रुत्वा ह्यपूर्वांगेन संगता ६३
सा दृष्टा पूजितास्माभिः प्रणिपातपुरः सरम्
ब्रह्मणस्ते सुता ब्रह्मन् सर्वावयवसुंदरी ६४
सर्वकामप्रदा स्त्रीणां सर्वदेवप्रतिष्ठिता
स्थानं दर्शय चात्मानं त्वं देव प्रपितामह ६५
अष्टषष्ठिप्रमाणोऽयं गणोऽस्माकं व्यवस्थितः
तच्छ्रुत्वा पद्मजो ज्ञात्वा संकीर्णं यज्ञमंडपम् ६६
व्याप्तं देवगणैः सर्वैस्त्रयस्त्रिंशत्प्रमाणकैः
ततो मध्यगमाहूय तदा नांदीमुखोद्भवम् ६७
श्रुताध्ययनसंपन्नं बृहस्पति मिवापरम्
अब्रवीच्छलक्ष्णया वाचा त्यक्त्वा मौनं पितामहः ६८
त्वं गत्वा ममवाक्येन विप्रान्नांदीमुखोद्भवान्
एतासां ब्रूहि च शुभं स्थानं यत्र सुखी भवेत् ६९
एवं दत्वा शुभं स्थानं यज्ञकर्म समाचरत्
यज्ञान्ते च ततः प्राप्ते ततो मातृगणः शुभः ७०
गच्छन्ति स्म यदा प्राप्य ह्याज्ञां ब्रह्मसमुद्भवाम्
तासां प्रध्ये श्रेष्ठतमाश्चतुर्विंशप्रमाणतः ७१
पद्मजस्तास्तु संरक्ष्य ब्राह्मणं पुनरब्रवीत्

ब्रूहि त्वं मम वाक्येन विप्रान्नांदीमुखोद्भवान्  ७२
एते मातृगणाः प्रोक्ताश्चतुर्विंशत्प्रमाणतः
एकैकमत्र मुख्या च ह्येकैकस्य प्रमाणतः  ७३
स्वे स्वे भूमि विभागे च स्थानं गच्छन्तु सांप्रतम्
एतत्माहाय्यकं कार्यं मम नांदीमुखैश्च तैः  ७४
प्रसादं प्रचुरं कृत्वा येन तुष्टिं प्रथान्ति च
ततः स सत्वरं गत्वा तान्समाहूय भूसुरान्  ७५
प्रोवाच विनयोपेतः प्रणिपत्य ततः परम्
श्रुत्वा नांदीमुखाः सर्वे संतोषं परमं मुदा  ७६
एकैकस्य गणस्यैव ददुः स्थातं निजं तदा
ततस्ता मातरः सर्वाः प्रणिपत्य पितामहम्  ७७
तथानंतरमेवाथ गायत्रीं भक्तिपूर्वकम्
विप्रसंसूचिते स्थाने सर्वाश्चैव व्यवस्थिताः  ७८
पूजितास्तर्पिताश्चैव बलिभिर्विविधैरपि
ततो गायन्ति ता दृष्टा नृत्यन्ति च हसन्ति च  ७९
तर्पिता ब्राह्मणेन्द्रैश्च प्रोचुस्तास्तदनन्तरम्
न यास्यापोऽपरं स्थानं स्थास्यामोऽत्रैव सर्वदा  ८०
ईदृशा यत्र विप्रेन्द्राः सर्वे भक्तिसमन्विताः
ईदृशं च महाक्षेत्रं कपालेश्वरसंज्ञितम्  ८१
एतस्मिन्नेव काले तु सावित्रीं तत्र संस्थितां
प्रणिपत्य द्विजैः सर्वैर्गच्छन्ती च निचारिता  ८२
मादेवयजनं गच्छ सावित्रि पतिदक्लभे
ब्रह्मणा परिणीतास्ति गायत्रीति वरांगना  ८३
तच्छ्रुत्वा वचनं तेषां सावित्री भ्रांतचेतसा
दुःखशोकसमोपेता बापव्याकुसलोचना  ८४
दृष्ट्वा ता नृत्ययुक्ताश्च गानपूर्णास्ततः परम्
प्लवमाना धरापृष्ठे संतोषं परमं मताः  ८५
शशापाथ च सावित्री बाष्पगद्गदया गिरा
न प्रणामः कृतोयश्चं मम दुःखान्न दुःखिताः  ८६
तस्मान्नैवापरं स्थानं गमिष्यथ कथंचन

पूजा नांदीमुखानां च कदाचित्संभविष्यति ८७
तद्गतो नैव युष्माकं कदाचित् संभविष्यति
शीतकालेन शीतेन शुष्णकाले च रश्मिभिः ८८
दर्पाकाले च तोयेन क्लेशं यास्यथ भूरिशः
एवमुक्त्वा ततो देवी सा तत्रैव व्यवस्थिता ८९
नांदीमुखवरस्त्रीभिः सर्वाभिः परिवारिता
संबोध्यमाना सततं सुर स्त्रीचेष्टितेन च ९०
एतस्मिन्नेव काले तु भगवांस्तीव्रणदीधितिः
अस्तं गतो महाञ्छब्दः प्रोत्थितो यज्ञमंडपे ९१
याज्ञिकानां च विप्राणां सुमहाञ्छास्त्रसंभवः ९२
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ मात्राममतनामा द्वाविंशोध्यायः

## अध्याय २३

श्रीब्रह्मोवाच
भर वाचश्च शप्तास्ता प्रातरो द्विजत्तम
हरिव्या तास्तु वक्रांगीं प्राप्ता सा यत्र तिष्ठति १
ततः प्रणम्य ता ऊचुः सर्वा दीनतरं वचः
वयं समागता देवि सर्वास्तव मखे यतः २
सप्स्यामहे यज्ञभागं वक्रांग्याश्च प्रसादतः
तत्कुर्वाँणास्तथारेभे शप्ता देवि सुरेश्वरी ३
स्त्रीणां दुःखेन दुःखार्ता जायन्ते सर्वयोषितः
सूयमानन्दिताः सवर्ण सपत्नया मम चोत्सवे ४
तां प्रणम्य प्रपूजार्हा नाहं संभाषिताऽपि च
स विशेषं नृत्मगीतं प्रारब्धं च मयाग्रतः ५
तस्माद्व्योमगतिर्नैव भवतीनां भविष्यति
अस्मिन् स्थाने सदास्थेयं तथाऽश्रमविवर्जिताः ६
संतिष्ठध्वं न वः पूजां द्वकरिष्यन्ति मानवाः
दीनाना मसमर्थानां यत्र कृत्येषु सर्वदा ७
तस्यास्तद्वचनं देवि नान्यथा संभविष्यति
वक्रांग्याः पूजनार्थाय ध्रुवं साहि प्रकामदा ८

तेनात्र सुरसा शप्ता यावन्नष्वमनोरथाः
तस्माद्विरुष्व कल्याणि यथास्माकं गतिर्भवेत् ९
माहराभ्यं तव वर्धेत त्रैसोक्ये सचराचरे
श्रीवक्रांगी उवाच
का शक्तिर्विद्यतेऽस्माकं शापं सावित्रीसंभवम् १०
अन्यथाकर्तुमेवाद्य सर्वैरपि सुरासुरैः
तथापि शक्तितः सर्वं यतिष्येऽहं हिताय वः ११
चतुर्विंशतिगोत्रेषु भवत्यः संनियोजिताः
पितामहेन तुष्टेन तत्रपूजामवाप्स्यत १२
नयं रात्रौ च संज्ञाभिर्हास्यपूर्वाभिरेव च
अद्यप्रभृति यस्यात्र नांदीमुखस्य सद्गृहे १३
वृद्धिः संदृश्यते काश्चिद्विशेषान्मंडपोद्भवा
तथैव योषितः काश्चित्पुरद्वारं समेत्य च १४
अदृष्टहास्यमाधाय प्रक्षिपन्ति बलिं ततः
तेन यो भविता तृप्तिर्देवानां च यथामखैः १५
याःपुनर्न करिष्यन्ति पूजामेकां मयोदिताम्
युष्माकं नगरे तासां कुमुत्रो नाशमाप्स्यति १६
युष्माकमपमानेन सदा रोगी भविष्यति
तस्मात्तिष्ठत चात्रैव रक्षार्थं नगरस्य च १७
गंधर्वः पर्वतो जातः सपत्न्या सहितस्तदा
वक्रांगीयं यदा शप्ता नारदेन महर्षिणा १८
मानुषी भव क्रुद्धेन तदा संप्रार्थितम्वृथा
मदर्थं मानुषो भूत्वा तात त्वं चांबया तव १९
यज मां मानुषीं चैव येन गच्छामि नो विभो
विरामूत्रसंयुते गर्थे सर्वदोषसमन्विते २०
ततः स कृपया तस्याः सपत्न्या देवशर्मणः
अवतीर्णो धरापृष्ठे वानप्रस्थाश्रमे पुनः २१
एवं सा पंचमी रात्रिस्तस्य यज्ञस्य सत्तम
उत्सवेन मनोज्ञेन वक्रांग्याश्च व्यतिक्रमात् २२
प्रत्यूषे च ततो जाते यदा तेन विवर्जिते

वक्रांगी च ततः प्राह ब्रह्माणं जनकं निजम्
कल्पेऽत्रावभृथे भावी विधिर्यज्ञसमुद्भवः २३
सर्वतीर्थमयस्तस्मिन् स्नानं नः स्यात्ततः परम्
यास्यामः स्वगृहं भूयः सर्वैर्देवैः समन्विताः २४
अनेनैव विमानेन त्रयो वापि यथा सुखम्
ममापि च वरो जातस्तच्छापान्नारदोद्भवात् २५
यज्ञभागो मयाप्राप्तो देवानामपि दुर्लभः
पूर्णमासीदिने प्राप्ते विशेषात् स्त्रीजनैः कृतः २६
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ वक्रांग्युत्पत्तिनाम त्रयोविंशोऽध्यायः

## अध्याय २४

ब्रह्मोवाच
एवं क्रतुः स संजातः पंचरात्रं द्विजोत्तमाः
कपालेश्वरजे क्षेत्रे सर्वकामसमृद्धिवान् १
दीनांधकृपणैस्तुष्टैरंधसा विविधेन च
समाप्तौ तस्य यज्ञस्य संतर्प्य सकलांस्ततः २
ऋत्विजो दक्षिणाभिश्च यथोक्तान् द्विजसत्तमान्
ततश्चैवानयामास विप्रान्नांदीमुखोद्भवान् ३
चातुश्चरणसंपन्नान् श्रुतिस्मृतिसमन्वितान्
कृतांजलिपुटो भूत्वा ततस्तान् प्राह सादरात् ४
यद्भूमौ तु मया तीर्थं पुष्करं संनिवेष्टितम्
कलिकालस्य भीतेन द्वितीयं ब्राह्मणोत्तमाः ५
येन नो नाशमभ्येतिम्लेच्छैरपि समाश्रितम्
कपालेश्वरदेवस्य प्रभावेण महात्मनः ६
कलिकालेऽपि संप्राप्ते तीर्थान्यायतनानि च
म्लेच्छैः स्पृष्टान्यसंदिग्धं प्रयागादीनि कृत्स्नतः ७
यज्ञस्तु विहितस्तेन मयाऽयं तत्कृतेन च
तस्माद्वदथ किं दानं युष्मद्भूमेश्च निष्क्रये ८
प्रयच्छामि च यज्ञस्य येन मे स्यात्फलं द्विजाः
ब्राह्मणा ऊचुः

यदि यच्छसि चास्माकं दक्षिणां यज्ञसंभवाम् ९
तदस्माकं स्ववासेन स्थानं नय पवित्रताम्
यदेतद्भवता चात्र पुष्करं तीर्थमुत्तमम्
स्थापितं तस्य नो ब्रूहि माहात्म्यं सुरसत्तम १०
यत्स्नानादि क्रियाभिश्च फलं विस्तारतो वद
ब्रह्मोवाच
एतत्तीर्थं मयासृष्टमंतरीक्षस्थितं सदा ११
किं न श्रुतं पुराणेषु भवद्भिर्द्विजसत्तमाः
पृथिव्यां नैमिषं तीर्थमंतरीक्षे च पुष्करम् १२
त्रैलोक्येऽपि कुरुक्षेत्रं विशेषेण व्यवस्थितम्
तद्युष्माकं हितार्थाय पंचरात्रं धरातले १३
आगम्य संदिग्धं सर्वैस्तीर्थैः सर्वैः सुरैः सह
कार्तिक्यां शुक्लपक्षे तु ह्येकादश्या दिने स्थिते
यावत्पंचदशी तावत्तिथिः पापप्रणाशिनी
पंचरात्रस्य मध्ये तु हः स्नानं प्रकरिष्यति १५
श्राद्धं वा श्रद्धया युक्तं सोऽनंतफलभाग्भवेत्
अहं वै पंचरात्रं च ब्रह्मलोकादुपेत्य च १६
संश्रयं च करिष्यामि तीर्थेऽस्मिन् द्विजसत्तमाः
ब्राह्मणा ऊचुः
तव मूर्तिं करिष्यामो स्थानेऽस्मिन्प्रपितामह १७
तस्यां संक्रमणं नित्यं तस्मात्कार्यं त्वया विभो
तीर्थं चैव सदाप्यत्र समागच्छतु चाम्बरात् १८
लोकानां पापनाशाय तथा त्वं कर्तुमर्हसि
एषा नो दक्षिणा देया यज्ञस्यैव समुद्भवा १९
एवं कृते सुरश्रेष्ठ सफलः स्यात्क्रतुस्तव
प्रतिज्ञा या तथा सत्या यस्माद्दानकृते कृता २०
ब्रह्मोवाच
मंत्राहूतं ततः श्रेष्ठं नभोमार्गाद्द्विजोत्तमाः
तस्मिन्नांदीपुरे क्षेत्रे पुष्करं चागमिष्यति २१
रविदीधितिमार्गेण तस्मात्तीर्थं रवेरिदम्

अघमर्षं जपं चैव यः करिष्यति तोयगः २२
मम मूर्तेः पुरः स्थित्वा श्रुतिमंत्रप्रपूर्वकम्
जपिष्यति द्विजः स्नात्वा सवनानां त्रयेऽपि च २३
ब्रह्मलोकादि लोकस्य फलमश्नाति सोऽव्ययम्
सूत उवाच
अथ नांदीमुखाः सर्वे पुष्पदानप्रपूर्वकम् २४
अनुज्ञां प्रददुस्तुष्टाः सांगयज्ञफलाप्तये
एतस्मिन्नंतरे प्राप्तः पुलस्त्यो द्विजसत्तमः २५
यत्रस्थाने स्थितो ब्रह्मा ब्राह्मणैः परिवारितः
प्राब्रवीच्च समाप्तस्ते यज्ञः संपूर्णदक्षिणः २६
प्रायश्चित्तैर्विरहितो यथा नान्यस्य कस्यचित्
अतः परं कर्मशेषं किंचिदस्ति पितामह २७
वारुणेष्टिं जपं चैव तत्करिष्यामि सांप्रतम्
तथा चावभृथस्नानं प्रकर्तव्यं त्वया सह २८
तस्मादुत्तिष्ठ गच्छावो यत्र तोयं व्यवस्थितम्
येनेष्टिं वारुणीं तत्र कुर्मो विप्रैर्यथोचितैः २९
चतुर्भिर्ब्रह्मपूर्वैश्च मया चाग्नीध्रहोतृभिः
यथा वह्नौ तथा तोये मंत्रवत्तद्धविः शुभम् ३०
हूयते संविधानेन यज्ञपात्रैः समन्वितम्
वरुणस्य प्रतुष्टयर्थं स्नानं कार्यं त्वयैव च ३१
ऋत्विग्भिः सहितेनैव सर्वानिष्टप्रशांतये
यस्तत्र समये स्नानं करिष्यति त्वया सह ३२
अन्योऽपि मानवः कश्चित् विपाप्मा स भविष्यति
यत्रेह संति तीर्थानि त्रैलोक्ये सचराचरे ३३
वारुणीमिष्टिमासाद्य तानि यांति च संनिधौ
तस्मात्सर्वप्रयत्नेन दीक्षितेन समन्वितम् ३४
तत्र स्नानं प्रकर्तव्यं जलमध्ये तु सार्थिभिः
ब्राह्मणैः क्षत्रियैर्वैश्यैः सर्वैरवभृथोत्सवे ३५
तस्माद्विसर्जयेच्चैतान् ब्राह्मणान् तावदेव तु
एतेऽपि च करिष्यन्ति स्नानं तत्र त्वया सह ३६

ब्रह्मोवाच
तच्छ्रुत्वा प्रस्थितो ब्रह्माज्येष्ठं कुंडतमं स्मृतम्
गायत्र्या सहितो हृष्टः कृतकृत्यत्वमागतः ३७
अथ दद्वचनं श्रुत्वा सुराः सर्वे तथा द्विजाः
पुलस्त्येन हितार्थाय स्नानार्थं प्रस्थितास्तथा ३८
ब्रह्मणा सहिता हृष्टाः पुत्रदारसमन्विताः
अथ संकीर्णता जाता समंताज्ज्येष्ठपुष्करे ३९
स्नानार्थमाश्रितैर्लोकैरूर्ध्वबाहुभिरेव च
न तत्र लक्ष्यते ब्रह्मा न तत्कर्म चवारुणम् ४०
क्रियमाणे द्विजैस्तत्र व्याप्ते भूमितलेऽखिलैः
अथान्ते कर्मणस्तस्य ब्रह्मा प्राह शतक्रतुम् ४१
हितार्थं सर्वलोकानां विनयावनतं स्थितम्
न मां ज्ञास्यन्ति दूरस्था जनाः स्नानार्थमागताः ४२
मज्जमानं जलेपुण्ये संमर्देऽस्मिन् जलोद्भवे
तस्मान्नागं समारुह्य धृत्वावंशं करे निजे ४३
मृगचर्माग्रसंयुक्तं तोयमध्ये व्यवस्थितः
एतत् कर्मावसाने तु स्नातुकामे पितामहे ४४
तच्चर्म प्राक्षिपत्तोये स्वयमेव शतक्रतुः
एतस्मिन्नंतरे धाता शक्रं प्रोवाच सादरम् ४५
सर्वे देवाः सगंधर्वा मानुषा गुह्यकास्तथा
हृष्टपुष्टजनाः सर्वे स्नातास्तत्र समाहिताः ४६
कृतं स्नानं सुरैः सार्धं विनयावनतं स्थितम्
सहस्राक्ष त्वया कष्टं मन्मखे विपुलं कृतम् ४७
आनीता च तथा पत्नी गायत्री च सुमध्यमा
तस्माद्वरय भद्रं ते वरं यन्मनसेप्सितम् ४८
इन्द्र उवाच
यदितुष्टोऽसि देवेश यदि देयो वरो मम
यदित्वां प्रार्थयाम्यद्य तद्भवाशु पितामह ४९
वर्षे वर्षे तु यः कुर्यात् संप्राप्तेऽस्मिन्दिने शुभे
मुगचर्म समाधाय वंशाग्रेयो महीपतिः ५०

नागप्रवरमारुह्य स्वथमेव पितामहः
यथाह प्रक्षिपेत्तोये स स्यात्पापविवर्जितः ५१
अजेयः सर्वशत्रूणां सर्वव्यसनवर्जितः
यः करिष्यति च स्नानं मंत्रश्राद्धं विशेषतः ५२
तदान्येऽपि च ये लोका अपि पापसमन्विताः
तेषां वर्षकृतं पापं त्वत्प्रसादाद्विनश्यतु ५३
ब्रह्मोवाच
एतत्सर्वं सहस्राक्ष तव वाक्यमसंशयम्
भविष्यति न संदेहः सत्यमेत त्त्वयोदितम् ५४
यो राजा श्रद्धया युक्तो देशस्यास्य समन्वितः
मत्कृते च गजारूढो मृगचर्म विनिक्षिपेत् ५५
अत्रकुंडे मदीये च त्वां मां संपूज्य भक्तितः
सर्वलोकहितार्थाय संप्राप्ते प्रतिपद्दिने ५६
संप्राप्ते क्रतुये काले विजयी स भविष्यति
कार्तिक्यां च व्यतीतायां द्वितीयेऽन्हि व्यवस्थिते ५७
तथा तत्कालमासाद्य ये करिष्यन्ति मानवाः
आधिव्याधि विमुक्तास्ते भविष्यन्ती त्यसंशयम् ५८
ब्रह्मोवाच
एतस्मिन्नंतरे प्राप्तो यक्ष्माख्यो दारुणो गदः
अचिकित्स्यो पि देवानां तथा धन्वंतरेरपि ५९
नीलांवरधरः क्षायी दीनो दंडं समाश्रितः
क्षुत्कुर्वन् श्लेष्मणा तावत्कृछ्रात्संधारयन् पदम् ६०
ततश्च प्रणतो भूत्वा वाक्यमेत दुवाचह
यक्ष्मोवाच
तवयज्ञमहं श्रुत्वा दूरादेव पितामह ६१
क्षुत्क्षामकंठ आयातः समाप्तावद्य कृच्छ्रतः
दक्षेणाहं पुरा सृष्टश्चन्द्रस्यो परि कोपतः ६२
रोहिणीं सेवमानस्य त्यक्तज्ञातिसुतस्य च
ततो माहेश्वरादेशात्तेन तुष्टेन तस्य च ६३
पक्षमेकं कृतं मह्यं तस्यास्वादनकर्मणि

अन्यपक्षे न किंचिच्च येन वृत्तिः प्रजायते ६४
यज्ञस्यैव तु सर्वस्य तर्पयित्वा द्विजोत्तमम्
ततस्तद्वचनं ग्राह्यं तर्पितो हमसंशयम् ६५
पौर्णमास्यां ततो देव यस्य यज्ञस्य कृत्स्नशः
ब्राह्मणोऽपि यदन्नेन यज्ञस्यान्ते प्रतर्पितः ६६
न तृप्तोऽस्मीति तत्तस्य वृथास्या द्यज्ञजं फलम्
यदि कोटिगुणं दत्तमपि श्रद्धासमन्वितम् ६७
एतच्छ्रुत्वा ततो देव पठ्यमानं श्रुतावपि
तस्मात्सम्यक्स्थिते यज्ञे ब्राह्मणं तर्पयेत वै ६८
प्रत्यक्षं मे यथा तृप्तिर्जायते तद्विचारय
त्वत्प्रसादात्सुरश्रेष्ठ तथा नीतिर्विधीयताम् ६९
ब्रह्मोवाच
तच्छ्रुत्वा पद्मजस्तस्य पथ्यं पथ्यं वचोऽखिलम्
श्रुतिप्रमाणतां नीत्वा ततो वचनमब्रवीत् ७०
अद्यप्रभृति ये विप्रा सामयाः स्युर्धरातले
तै सर्वैर्वैश्वदेवान्ते बलिर्देयस्तथाऽखिलः ७१
दत्तोऽन्येभ्योथ देवेभ्य स्तवतृप्तिर्भविष्यति
तव पक्षे द्वितीये तु सत्यमेतन्मयोदितम् ७२
विप्रास्तव बलिंदद्युर्वैश्वदेवान्त आगते
न तेषामन्वये वापि त्वया सेव्योऽत्र कश्चन ७३
यक्ष्मोवाच
यद्येवं कुरु चान्यत्र त्वमाश्रमपदं निजम्
संप्राप्य भूमिदेशं च कंचिद्यदभिरोचते ७४
अर्थयित्वा द्विजानेतान् यथा यज्ञकृते मया
सूत उवाच
तच्छ्रुत्वा प्रार्थयामास नांदीमुखपुरोद्भवान्
तेभ्यः प्राप्य ततो भूमिं चकारा श्रमकं निजम्
तत्र यः कुरुते स्नानं प्रतिपद्दिवसे स्थिते ७६
सूर्यवारेण मुच्येत यक्ष्मणा सेवितोऽपि च
अद्यापि दृश्यते चात्र प्रत्ययस्तत्रसंभवः ७७

सर्वेषामाहिताग्नीनां ब्राह्मणानां विशेषतः
कलिकालेऽपि संप्राप्ते न यक्ष्मा संप्रजायते ७८
तथा चतुष्पदानां च तेषां गृहनिवासिनाम्
न तस्य भेषजानि स्युर्नमंत्रा न चिकित्सकाः ७९
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ यज्ञावभृथोनाम चतुर्विंशोऽध्यायः २४

## अध्याय २५

मरीचिरुवाच
पितामह त्वया प्रोक्तं सावित्री नागता च यत्
कौटिल्येन समायुक्तै राहूता वचनैस्तथा १
पुलस्त्येन पुनश्चैव प्रसक्ता गृहकर्मणि
ततस्तु ब्राह्मणैः कोपाद्गायत्री च समाहृता २
देवैर्विश्वैश्च सातीव शंसिता भार्यतां गता
सावित्री च कथं जाता तां ज्ञात्वा यज्ञमंडपे ३
पत्नीशालां प्रविष्टांच सर्वं विस्तरतो वद
ब्रह्मोवाच
सावित्रीवशगं कान्तं ज्ञात्वा देव्यः समागताः ४
स्थिरा भूत्वा तदा सर्वा देवपत्न्यः समन्विताः
घृताची मेनका रंभा ह्युर्वशी च तिलोत्तमा ५
अप्सरसां गणाः सर्वे समाजग्मुर्मुदान्विताः
सा ताभिः सहिता देवी पूर्णहस्ताभिरेव च ६
संप्रहृष्टमनोभिश्च प्रस्थिता मंडपं प्रति
वाद्यमानेषु वाद्येषु गीतध्वनियुतेषु च ७
गंधर्वाणां प्रमुख्यानां किंनराणां तथैव च
प्रस्थिता सा महाभागा यावत्तं यज्ञमंडपम् ८
तावत्तस्यास्तदा पाणिः प्रास्फुरद्दक्षिणो मुहुः
अपसव्यं मृगाश्चक्रस्तथान्येऽपि खगादयः ९
विपर्ययास्तेसंयानि शब्दान् कुर्वन्ति वाऽसकृत्
दक्षिणानि तथांगानि स्पन्दमानानि वै मुहुः १०
तस्या मनसि संक्षोभं जनयन्ति निरर्गलम्

ताश्चदेवस्त्रियः सर्वाः नृत्यन्ति च हसन्ति च  ११
गायन्ति च यथोत्साहंतस्याः पार्श्वे व्यवस्थिताः
न जानन्ति च संक्षोभं तथा शकुनजं हृदि  १२
अन्योन्य स्पर्धया सर्वा गीतनृत्यपरायणाः
अहं म्पूर्वमहं पूर्वं प्रविशामि महामखे  १३
इत्यौत्सुक्यसमोपेतास्ता गच्छन्ति सदा पथि  १४
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ सावित्रीयज्ञमंडपगमनं नाम पंचविंशोऽध्यायः

## अध्याय  २६

वह्निरुवाच
इति श्रुत्वा महानादं वाद्यानां समुपस्थितम्
नारदः सन्मुखः प्रायात् ज्ञात्वा च जननीं निजाम्  १
प्रणिपत्य  मुदीनात्मा भूत्वा योऽश्रुपरिप्लुतः
प्राह गद्गदया वाचा कंठे वाष्पसमाकुले  २
आत्मनः शापरक्षार्थं तस्याः कोपविवृद्धये
कलिप्रियस्तदा विप्रो देवस्त्रीणां पुरस्थितः  ३
मेघगंभीरया वाचा प्रस्खलन्त्या पदेपदे
मया त्वं देवि चाहूता पुलस्त्येन ततःपरम्  ४
स्त्रीस्वभावं समाश्रित्य दीक्षाकालेऽपि नागता
ततो विधेः समादेशात् शक्रेणान्या समाहृता  ५
काचिद्गोपसमुद्भूता कुमारी देवरूपिणी
गोवक्त्रेण प्रविश्याथ गुह्यमार्गेण तत्क्षणात्  ६
आकर्षिता महाभागे समानीता च तत्क्षणात्
सा विष्णुना विवाहार्थं ततश्चैवानुमोदिता  ७
ईश्वरेण कृतं नाम सावित्रीति तवानुजम्
ब्राह्मणैः सकलैः प्रोक्तं ब्रह्माणी च भवत्वियम्  ८
अस्माकं वचनाद् ब्रह्मन् कुरु परिग्रहं विभो
देवैः सर्वैः सुसंप्रोक्तं ततस्तां च वराननाम्  ९
तां च पत्नयुक्तधर्मेण योजयामास सत्वरम्

किंवा ते बहुनोक्तेन पत्नीशालां समागता १०
रसना योजिता तस्यास्तत्र कट्यां सुरेश्वरि
तद्दृष्ट्वा गर्हितं कर्म निष्क्रान्तो यज्ञमंडपात् ११
अनर्थवशमापन्नो न शक्तो वीक्षितुं च ताम्
एतज्ज्ञात्वा महाभागे यत्क्षमं तत्समाचर १२
गच्छ वा तिष्ठ वा तत्र मंडपे धर्मवर्जिते
तच्छ्रुत्वा सा तदा देवी सावित्री द्विजसत्तम १३
प्रम्लानवदना जाता पद्मिनीव हिमागमे
लतेव छिन्नमूला सा चक्रीव प्रियविच्युता १४
शुचिशुक्रोदये काले सरसीव गतोदका
प्रक्षीणचन्द्रलेखेव मृगीव मृगवर्जिता १५
सेनेव हतभूपाला सतीव गतभर्तृका
संशुष्कपुष्पमालेव मृतवत्सेव सौरभिः १६
वैमनस्यं परं गत्वा निश्चलत्वमुपस्थिता
तां दृष्ट्वा देवपत्न्यस्ताः प्रजगुर्नारदं तदा १७
धिग् धिक् कलिप्रियत्वं च रागे वैराग्यकारकः
त्वया कृतं सर्वमेतत् विधेस्तस्या स्तथांतरम् १८
गौर्युवाच
अयं कलिप्रियो ब्रूते मुनिः सत्यानृतं वचः
अनेन कर्मणा प्राणान् बिभर्त्येष सदा मुनिः १९
अत्र त्र्यक्षेण सावित्री पुरा प्रोक्ता मुहुर्मुहुः
नारदस्यमुनेर्वाक्यं न श्रद्धेयं त्वया प्रिये २०
यदि वांच्छसि सौख्यानि मम जातानि पार्वति
ततः प्रभृति नैवाहं श्रद्दधेऽस्य वचः क्वचित् २१
तस्माद्गच्छेम तत्रैव यत्र तिष्ठति ते पतिः
स्वयं दृष्टे च वृतान्तं कर्तव्यं यत्क्षमं ततः २२
नात्रास्य वचनादद्य स्थातव्यं तत्र गम्यताम्
सूत उवाच
गौर्यास्तद्वचनं श्रुत्वा सावित्री हर्षवर्जिता २३
मखमंडपमुद्दिश्य प्रस्खलन्ती पदे पदे

प्रजगाम द्विजश्रेष्ठाः शून्येन मनसा तदा २४
प्रतिभाव्यं तदा गीतं तस्या मधुरमप्यहो
कर्णशूलं व्यजायेत ह्यसक्तं द्विजसत्तमाः २५
वंध्यदाद्यं यथा वाद्यं मृदंगानकपूर्वकम्
प्रेतसंस्पर्शनं यद्वन्नृत्यगीते महासती २६
वीक्षितुं न च शक्नोति गच्छंतीसा महामखे
शृंगारं च यथा भारं मन्यते सा तनुस्थितम् २७
बाष्पपूर्णेक्षणा दीना प्रजगाम महासती
ततः कृच्छात्समासाद्य सेवमानं च मराडपे २८
कृच्छ्रात्कारागृह तद्वत् दुष्प्रेक्ष्यं दृक्पथस्थितम्
अथ दृष्ट्वा तु संप्राप्तां सावित्रीं यज्ञमंडपे २९
तत्क्षणाच्च चतुर्वक्त्रः संस्थितो हिमहामखे
तथा शंभुश्च शक्रश्च वासुदेवस्तथैव च ३०
येचान्ये विबुधास्तत्र संस्थिता यज्ञमंडपे
ते च ब्राह्मणशार्दूला स्त्यक्त्वा वेदध्वनिं ततः ३१
मूकीभावं गताः सर्वे भयसंत्रस्तमानसाः
अथ संवीक्ष्य सावित्री सपत्न्या सहितं प्रभुम् ३२
कोपसंरक्तनयना स्वपतिं वाक्यमब्रवीत्
सावित्र्युवाच
किमेतद्युज्यते कर्तुं तव वृद्धस्य च प्रभो ३३
ऊढवानसि यत्पत्नीमेतां गोपसमुद्भवाम्
उभयोः पक्षयोर्यास्युः शुद्धास्ता हि स्त्रियः सताम् ३४
शौचाचारपरित्यक्ता धर्मकृत्यपराङ्मुखाः
यस्यान्वये जनाः सर्वे पशुधर्मरतोत्सवाः ३५
सदयं भगिनीं त्यक्त्वा जननीं च तथा परम्
यस्याः कुले प्रसेवन्ते सर्वां नारीं द्विजोत्तमाः ३६
यथाहि पशवोऽश्नंति तृणानि जलपानगाः
विरामूत्रं केवलं चक्रुर्भारोद्वाहनमेव च ३७
तद्वदस्याः कुलं सर्वं तक्रमश्नाति केवलम्
कृत्वा मूत्रपुरीषं च जन्मभोगविवर्जितम् ३८

नान्यज्ञानाति कर्तव्यं धर्मः स्वोदरपूरणात्
अन्त्यजा अपि नो कर्म ये कुर्वन्ति विगर्हितम् ३९
आभीरा स्तच्च कुर्वन्ति तत् किमेतत्त्वया कृतम्
अवश्यं यदि ते कार्यं भार्यया परया मखे ४०
तत्त्वया ब्राह्मणी कापि ह्यन्वीक्ष्या भुवनत्रये
महाविधे वृथा मुंडं नूनं कर्तासि मे मतिः
यत्त्वया शौचसंत्यक्ता कन्याभायप्रदूषका ४१
याभुक्ता बहुभिः पूर्वमियं गोपकुमारिका
एषा प्राप्ता सुपापाद्या वेश्याजनसमाधिका ४२
अंत्यजातिसमा कन्या कथमर्हा मखे शुभे
तथा गोपकुमारी च काचित्तादृक् प्रजायते ४३
मातृकं पैतृकं वंशं श्वशुरं च प्रतापयेत्
तस्मादेतेन कृत्येन गर्हितेन धरातले ४४
न त्वं प्राप्स्यसि तां पूजां यथान्ये विबुधोत्तमाः
अनेन कर्मणा चैव यदि मेऽस्ति हुतं क्वचित् ४५
पूजां ये च करिष्यन्ति भविष्यन्ति च निर्धनाः
कथं न लज्जितोऽसित्वमेतत्कर्म विगर्हितम् ४६
पुत्राणामथ पौत्राणामन्येषां च दिवौकसाम्
अयोग्यं चैव विप्राणां यदेतत् कृतवानसि ४७
अथवा नैव दोषस्ते नकामवशगा नराः
लज्जन्ते च विजानन्ति कृत्याकृत्यं शुभाशुभम् ४८
अकृत्यं मन्यते कृत्यं मित्रं शत्रुं च मन्यते
शत्रुं च मन्यते मित्रं जनः कामवशं यतः ४९
द्युतकारे यथा सत्यं तथा चौरे च सौहृदम्
यथा नृपस्य नो मित्रं तथा मज्ञा न कामिलाम् ५०
अपि स्याच्छीतलो वह्निश्चंद्रमा दहनात्मकः
क्षारोऽब्धिर्यदि मिष्टः स्यान्न कामी सज्ञते ध्रुवम् ५१
न मेऽस्य दुःखमेतद्धि यत्सापत्न्यमुपस्थितम्
सहस्रमपि नारीणां पुरुषाणां यथा भवेत् ५२
कुलीनानां च शुद्धानां खजात्यानां विशेषतः

त्वं कुरुष्वापराणां च यदि कामवशंगतः ५३
एतत्पुनर्महादुःखं यदाभीरा विगर्दिता
वंशे वनचराणां च स्ववोडा बहुभर्तृका ५४
तस्मादहं प्रयास्यामि यत्र नाम न ते विधं
श्रूयते कामलुब्धस्य ह्रिया परिहृतस्य च ५५
अहं विडम्बिता यस्मादत्रानीव वया विभो
पुरतो देवपत्नीनां देवानां च द्विजन्मनाम् ५६
तस्मात्पूजां न ते कश्चित्सांप्रतं प्रकरिष्यति
अद्यप्रभुति यः शूनां मंत्रयूतां करिष्यति ५७
तव मर्त्यो धरापृष्ठे त्तथान्येऽपि दिवौकसः
भविष्यति च तद्वंशो दरिद्रो दुःखसंयुतः ५८
ब्राह्मणः क्षत्रियो वापि वैश्यः शूद्रोऽपि चालये
एषा भीरसुतां यस्मान्मयस्वाने च यार्चयेत् ५९
सा भविष्यति दुःखार्ता वंध्या दौर्भाग्यसंयुता
पापिष्ठा नष्टचारित्रा यथैषा पंचभर्तृका ६०
विख्यातिं यास्यते लोके यथा चासौ तथैव स्म
एतस्या अन्वये पापा भविष्यन्ति न संशयः ६१
एव शप्त्वा विधिं साध्वी गायत्रीं च ततः परम्
भविष्यति न संतानं मम वाक्यान्न संशयः ६२
न पूजां लप्स्यते लोके यथान्या देवयोजितः
पूजां तव करिष्यन्ति योषितो न सतां क्वचित् ६३
भो भो नान्दीमुखाः सर्वे शृणवन्तु वचनं मम
यस्मादियं तु युष्माभिः स्थापिता च महामखे ६४
तपोविद्यामदेनैव नैव जानन्ति मां सदा
तस्माद्विद्याविहीनात्र तपोहीना भवन्तु भोः ६५
कलौ संमर्ध्यमाने च वाणिज्यनिरताः सदः
ततो देवगणान् सर्वाञ्शिशाय च तता सती ६६
भो भोः शुक्र त्वया नीता यदेषां पंचभर्तृका
तदाप्नुहि फलं सम्यक् शुभं कृत्वा मुरोरिदम् ६७
त्वं शत्रुभिर्जितो युद्धे बंधनं समवाप्स्यसि

कारागारं चिरं कालं वै गमिष्यस्यशंसयम्  ६८
वासुदेव त्वया यस्मादेषा वै पंचभर्तृका
अनुमोदिताविधेः पूर्वं तस्माच्छाप्स्याम्यसंशयम्  ६९
त्वं द्वापरे च भृत्यत्वं संप्राप्स्यसि सुदुर्मते
समीपस्थोऽपि रुद्रत्वं कर्मैतद्यदुपेक्षसे  ७०
निषेधयति नो मूढ तस्माच्छृणु वचो मम
जीवमानस्य कान्तस्य मया ते विरहोद्भवम्  ७१
ससेवितं मृतायां ते दयितायां भविष्यति
अत्र यज्ञे प्रतिष्ठेयं गर्हिता पंचभर्तृका  ७२
भवानपि विधेयत्वं यस्तु मृज्ञासि लौल्यतः
तथान्येषु च यज्ञेषु सम्यक्श काविवर्जितः  ७३
तस्माद्वह्ने दुराचार सर्वभक्ष्यो भविष्यति
स्वधया स्वाहया सार्वं सदा दुःखसमन्वितः  ७४
नैराप्स्यसि परं सौरभ्यं सर्वकालं यथा पुरा
एते च ब्राह्मणाः सर्वे लोभोपहतचेतसः  ७५
होमं प्रकुर्वते य च मखे चापि विगर्हिते
वित्तलोभेन मम्रैषा निविष्टा पंचभर्तृका  ७६
तथा च वचनं प्रोक्तं ब्राह्मणीयं भविष्यति
दरिद्रो पहतास्तस्माद्वृषलीपतयस्तथा  ७७
वेदविक्रयकर्तारो भविष्यन्ति न संशयः
भो भो वित्तपते चित्तं ददासि मखविप्लवे  ७८
तस्मात्तवाखिलं वित्त अभोग्यं संभविष्यति
सदा देवगणाः सर्वे साहाय्ये ये समागताः  ७९
कृत्वा कुर्वन्ति दोषाद्वये यज्ञे यत्पंचभर्तृका
ह्यंतातेन परित्यक्तास्ते भविष्यन्ति सांप्रतम्  ८०
दानवैश्च पदाभूता दुःखं प्राप्स्यंति ते परम्
एतस्याः पार्श्वतश्चान्याश्चतस्त्रो या व्यवस्थिताः  ८१
भाभीरीति सपत्नीति प्रोक्तवंत्यः हर्षिताः
मम द्वेपपरा नित्यं शिवदूतीपुरःसराः  ८२
तासां परस्परं संगः कदाचिन्न भविष्यति

नाम्येनापि परेणापि दृष्टिमात्रमपि क्षितौ ८३
पर्वताग्रेषु सर्वेषु अगम्येषु च देहिनाम्
वासः संपत्स्वते नित्यं सर्वयोगैर्विवर्जितः ८४
सूत उवाच
एवमुक्त्वाप सावित्री कोपोपहतचेतसा
विसृज्य देवपत्न्यस्ताः सर्वा याः पार्श्वगाः स्थिताः ८५
उदङ्मुखी प्रतस्थे तु वार्यमाणापि सर्वतः
सर्वाभिर्देवपत्नीभिर्लक्ष्मीपूर्वाभिरेव च ८६
तत्र यास्यामि नो यत्र नामापि किल नो यतः
श्रूयते च विधेरस्य तत्र यास्याम्यहं द्रुतम् ८७
पादः पुष्पकुतोयस्य वामः पर्वतरोधसि
अपि पापसमाचारो यस्तां संपूजयेन्नरः ८८
सर्वपापहरं पुण्यं स याति परमं पदम्
यं यं काममभिव्यायेत्तंतमाप्नोति मानवः ८९
अवश्यं भावमाप्नोति यद्यपि स्यात्सुदुर्लभम्
वह्निरुवाच
एवं तत्रस्थिता देवी सावित्री पर्वताश्रया ९०
अपभान महत्प्राप्य ब्रह्मणः परमेष्ठिनः
यस्तामर्चयते सम्यक् पूर्णमास्यां विशेषतः ९१
सर्वान्कामानवाप्नोति सयाति परमं पदम्
दिधेरनुभयादेव देवानां च विशेषतः ९२
स्थिता तत्र विशालाक्षी हित्वातद्ब्रह्मणोंतिकम्
या नारी कुरुते भक्त्या दीपदानं च तत्कृते ९३
रक्ततंतुभिराज्येन श्रूयतां तस्य यत्कलम्
यावंतस्तंतवस्तस्य दह्यन्ते दीपसंभवाः ९४
मुहूर्तानि च यावन्ति घृतदीपश्च तिष्ठति
तावज्जन्मसहस्त्राणि सा स्यात्सौभाग्य भागिनी ९५
पुत्रपौत्रसमोपेता धनिनी शी--मंडिता
न दुर्भगा न वंध्या च न काणा न विरूपिका ९६
या नारी कुरुते नृत्यं विधवापि तदग्रतः

गीतं वा कुरुते तत्र शृणु तस्यापि तत्फलम्  ९७
यथा च नृत्यमग्नावै स्वं गात्रं विधुनोति च
तथा तथा धुनोत्येव यत्पापं प्राकृतं भवेत्  ९८
यावन्तो जंतवो गीतं तस्याः शृणवन्ति तत्र च
तावन्ति दिवि चर्षाणि सहस्राणि वसेच्चसा  ९९
सावित्रीं या समुद्दिश्य फलदानं करोति या
फलसंख्याप्रमाणानि युगानि दिवि मोदते  १००
मिष्टान्नं यच्छते या च नारीणां च विशेषतः
तस्याः दाक्षिण्यमूर्तिश्च स्त्रीणां मध्ये विशिष्यते  १०१
सस्यकणप्रमाणानि युगाणि दिवि मोदते
यः श्राद्धं कुरुते सम्यक् तत्र श्रद्धासमन्वितः  १०२
रसेनैकेन सस्येन तथा नेकैर्द्विजोत्तमैः
तस्यापि जायते पुण्यं गयाश्राद्धेन यद्भवेत्  १०३
यःकरोति द्विजस्तस्या उत्तरां दिशमाश्रितः
संध्योपासनमेकं तु स्वपत्नयाक्षिपितैर्जलैः  १०४
सायंतने तु संप्राप्ते काले ब्राह्मणसत्तमाः
तेन स्याद्वंदिता संध्या सम्यक् द्वादश वार्षिकी  १०५
यो जपेद्ब्राह्मणस्तत्र सावित्रीं च त्रिकालिकीम्
तस्ययत्स्यात्फलं विप्र श्रूयतांतद्वदामि ते  १०६
दश जन्मकृतं यच्च शतेन च पुरा कृतम्
त्रियुगं तु सहस्रेण सावित्री हन्ति किल्बिषम्  १०७
तस्मात्सर्वप्रयत्नेन सावित्रीं कुंडके जपेत्
तत्र तां पूजयेद्देवीं स्तोतव्यां च विशेषतः  १०८
सावित्र्या इदमाख्यानं यः पठेच्छृणुयाच्च वा
सर्वपापविनिर्मुक्तः सुखभाग्यत्र जायते  १०९
एतद्वः सर्वमाख्यातं यत्पृष्टोहं द्विजोत्तमाः
सावित्र्याः कृत्स्नं माहात्म्यं किं भूयः प्रवदामि वः  ११०
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तो सावित्रीमाहात्म्यं नाम षड्विंशोऽध्यायः

## अध्याय २७

मरीचिरुवाच
एवं गतायां सावित्र्यां कुपितायां पितामह
किं कृतं तत्र गायत्र्या ब्रह्माद्यैश्चापि किं सुरैः १
एतत्सर्वं समाचक्ष्व परं कौतुहलं हि मे
कथं शापान्विता देवाः संस्थिता यज्ञमंडपे २
ब्रह्मोवाच
गतायामपि सावित्र्यां शापं दत्वा द्विजोत्तम
गायत्री सहसोत्थाय वाक्यमेतदुदैरयत् ३
सावित्र्या यद्वचः प्रोक्तं तन्न शक्यं कथंचन
अन्यथा कर्तुमेवाथ सर्वैरपि सुरासुरैः ४
महासती महाभागा सावित्री सा पतिव्रता
पूज्या च सर्वदेवानां श्रैष्ठ्याच्छ्रेष्ठा च सद्गुणैः ५
परं स्त्रीणां स्वभावोयं सर्वासां सुरसत्तमाः
अपि सह्यो वज्रपातः कष्टं सापत्न्यजं ननु ६
मत्कृते येऽत्र शपिताः सावित्र्या ब्राह्मणाः सुराः
तेषामहं करिष्यामि शक्त्या साधारणं शुभम् ७
अपूजोऽयं विधिः प्रोक्तस्तया मंत्रपुरःसरम्
सर्वेषामेव वर्णातं विप्रादीनां सुरोत्तमाः ८
ब्रह्मस्थानेषु सर्वेषु समग्रधरणीतले
न ब्रह्मणा विना किंचित् कृत्यं सिद्धिमुपैष्यति ९
कृष्णार्चनेन यत्पुण्यं यत्पुण्यं लिङ्गपूजने
तत्फलं कोटिगुणितं सदा स्याद्ब्रह्मदर्शनात् १०
भविष्यति न संदेहो विशेषात्सर्वकर्मसु
त्वं च भृत्यतया प्रोक्तो विष्णोर्जन्म यदाप्स्यसि ११
तत्रापि परभृत्यत्वं परेषां ते भविष्यति
एकः कृष्णाभिधानस्तु द्वितीयोऽर्जुनसंमितः १२
तस्यात्मनोऽर्जुनाख्यस्य सारथ्यं त्वं करिष्यसि
तेन कृत्येन रक्तास्ते गोपा यास्यन्ति श्लाघ्यताम् १३
सर्वेषामेव लोकानां देवानां च विशेषतः
यत्र यत्र वसिष्यन्ति भ्रमन्तेऽपि वने नराः १४

तत्र तत्राश्रये वासे वने च रक्षयिष्यति
ततः प्रविश्य संग्रामे न पराजयमाप्स्यसि १५
त्वं वह्ने सर्वभक्ष्यश्च यत्पृष्टो रुष्टया तया
तदमेध्यमपि प्रायः स्पष्टं तेऽर्चिभिरग्रतः १६
मेध्यतां यास्यसि क्षिप्रं ततः पूजामवाप्स्यसि
स्वाहा नाम्नी च या भार्या देवान् संतर्पयिष्यति १७
स्वधा या च पितॄन् सर्वान् ममवाक्यादसंशयम्
यद्रुद्रप्रियया सार्धं वियोगः कथितस्तया १८
ततः प्रेष्ठतमा चान्या तव पत्नी भविष्यति
गौरीनाम्नेति विख्याता हिमाचलसुता शुभा १९
भो भो नान्दीमुखा विप्रा शृणुतेदं वचो मम
विद्यामानेन चोन्मत्ताः कुरुताकृत्यमेवच २०
तेन वश्च कुलाद्यातु विद्या चाभ्यसिता ह्यपि
एवं दत्ते तयाशापे सावित्र्या यज्ञवर्तिनः २१
तानुवाचाथ गायत्री सर्वैर्देवैः सुपूजिता
भो भो विप्रा वचोऽस्माकं शृणुतेदं समाहिताः २२
सावित्र्या दत्तशापा वै तस्यानुग्रहकारणम्
लक्ष्मीवंतो भविष्यन्ति कलौ भूसुरतर्पकाः २३
वेदाचाररता नित्यं विष्णुभक्तिपरायणाः
एवं कलौ व्यतीते तु स्वां विद्यामप्यवाप्स्यय २४
वह्निरुवाच
एवं सा तान् वरान् दत्वा सर्वेषां शापभागिनाम्
मौनव्रतपरा भूत्वा प्रविवेश धरातले २५
ततो देवगणाः सर्वे ते च सर्वे महर्षयः
साधु साध्विति तां प्रोचुरिदं वाक्यमुदैरयन् २६
एतां देवप्रसादेन ब्राह्मणानां विशेषतः
पूजयिष्यन्ति मर्त्येऽत्र सर्वे लोकाः समाहिताः २७
ब्रह्माणं पूजयित्वा तु पश्चादेनां सुरेश्वरीम्
पूजयिष्यन्ति ये मर्त्या स्ते तु यान्ति परांगतिम् २८
या कन्या पतिसंयोगं संप्राप्यात्र समाहिता

ततः पादप्रमाणं च गायत्र्याश्च करिष्यति २९
पतिं प्रजापतिं प्राप्य सा भविष्य त्यसंशयम्
सर्वकामसुखोपेता धनधान्य समन्विता ३०
सा नारी दुर्भगा वंध्या न भविष्यति सर्वदा ३१
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ सावित्रीशापानुग्रहो नाम सप्तविंशोऽध्यायः

## अध्याय २८

मरीचिरुवाच
ततो नांदीमुखास्ते च किंचक्रुस्तत्र संस्थिताः
तन्मे कथय देवेश विस्तरेण दयां कुरु १
ब्रह्मोवाच
चक्रुस्ते ब्राह्मणाः सर्वे काम्ययज्ञान् ह्यनेकशः २
एतस्मिन्नेव सग्रये मासः प्रौष्ठपदः शुभः
तस्य चापरपक्षे तु कौशिको मुनिसत्तमः ३
नांदीमुखानुवाचाथ शृणुतैव समाहिताः
त्रयोदश्यां कृते श्राद्धे सर्वान् कामा नवाप्स्यथ
एषा मेध्यतमा विप्रा युगादिकलिसंभवा
स्नाने दाने जपे होमे श्राद्धे ज्ञेया तथा क्षमा ५
अस्यां चेत्तु गजच्छाया यदि विप्राः प्रजायते
तदक्षयं मघायोगे श्राद्धं संजायते ध्रुवम् ६
यः क्षीरं मधुना युक्तं तस्मिन्नहनि यच्छति
पितृनुद्दिश्य वा मांसं दद्याद्वाध्रीणमेवच ७
वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी
त्रिः पिबन्निंद्रियाक्षीणं श्वेतं वृद्धमजापतिम् ८
तं तु वाध्रीणसं विद्यात् सर्वयूथाधिपं तथा
खड्गमांसं तु संदद्यात्तृप्तिर्द्वादशवार्षिकी ९
संजायते न संदेहो वाक्यमेतन्नमे मृषा
आसीद्रव्यन्तरे कल्पे पूर्वं पार्थिवसत्तमः १०
सिताश्वोनाम पांचालदेशीयः पितृभक्तिमान्

मधुना कालशाकेन खड्गमासेन केवलम् ११
सहि श्राद्धं त्रयोदश्यां कुरुते पायसेन च
कदाचिद्ब्राह्मणैर्भूपः स पृष्टः पृथिवीपतिः १२
कस्मिंश्चित्वथ काले स पृष्टो भुक्त्वा यथेच्छया
श्राद्धदानांतरं वत्स दृष्ट्वा तं श्रद्धयान्वितम् १३
पादावमर्दनपरं प्रणिपातपुरःसरम्
ब्राह्मणा ऊचुः
कृत्वा श्राद्धं महाराज प्रदातव्याथ दक्षिणा १४
ब्राह्मणेभ्यस्ततः श्राद्धं पितॄणां चोपतिष्ठते
सा त्वया कल्पितास्माकं वितीर्णाऽद्यापि नो नृप १५
कुप्याकुप्यं परित्यज्य देहिनां द्रुतमा चिरम्
ब्रह्मोवाच
तच्छ्रुत्वा स नृपः प्राह प्रहृष्टेनांतरात्मना १६
धन्योऽस्म्यनुगृहीतोऽस्मि विदैरद्य न संशयः
ये वांच्छन्ति ममाभीष्टं श्राद्धे भुक्त्वाथ पैतृके १७
तस्माद्ब्रूत महाभागा युष्मभ्यं किं ददाम्यहम्
वरान्नागान्मदोन्मत्तान् भद्रजातिसमुद्भवान् १८
किं वा ह्यश्वान् बृहद्रूपान् मनोमारुतरंहसः
किंवा स्थानानि चित्राणि ग्रामांश्च नगराणि च १९
पितॄनुद्दिश्य यत्किंचित् तादेयं विद्यते ततः
ब्राह्मणा ऊचुः
नास्माकं वाजिभिः कार्यं न रत्नैर्न च हस्तिभिः २०
न देशैर्ग्राममुख्यैर्वा नान्येनापि च केनचित्
यदर्थेन महाराज पृष्टोऽस्माभिर्यतो भवेत् २१
तस्मान्नो दक्षिणा देया संदेहघ्ना नृपोत्तम
यत् पृच्छामो वयं सर्वे कौतूहलसमाहिताः २२
राजोवाच
उपदेशो न युष्मभ्यं सर्वज्ञेभ्यो विचक्षणाः
ब्राह्मणा ऊचुः
गुरुशिष्यसमुच्छ्रायमुपदेशो महीयते २३

प्रार्थयामो वयं किंचित् मा भयं त्वं समाविश
वयं च प्रश्नमेकं हि पृच्छामो यदि भूपते २४
ब्रूवे कौतुकयुक्तानां सर्वेषां च द्विजन्मनाम्
तस्माद्वयं महाभाग यदि जानासि तत्वतः २५
न चेद्गुह्यतमं किंचित् पृच्छामस्त्वां कुतूहलात्
राजोवाच
यदि वा संशयो विप्राः युष्मत्प्रश्नमसंशयम् २६
कथयिष्यामि चेद्गुह्यं तद्वदेत गतज्वराः
ब्राह्मणा ऊचुः
अन्नेषु च विचित्रेषु लेह्येषु विविधेषु च २७
अमृतेष्वेव सर्वेषु तथा पेयेषु पार्थिव
कस्मादद्य दिने ब्रूहि मधु यच्छसि गर्हितम् २८
वर्तते च तथाऽभक्ष्यं ब्राह्मणानां विशेषतः
तथा विचित्रमांसेषु संस्थितेषु नराधिप २९
खङ्गमांसं निरास्वादं कस्माद्यच्छसि गर्हितम्
संति शाकानि राजेन्द्र पावनीयानि सर्वतः ३०
सुष्ठु स्वादुकराण्यत्र व्यंजनाथं महीपते
कालशाकं संकटुकं मुखाधिजननं महत् ३१
कस्माद्यच्छसि चास्माकं भक्त्या च परया युतः
न श्राद्धे प्रतिषेधश्च प्रकतव्यः कथंचन ३२
न त्याज्यं च समुद्दिष्टं तस्माद्भुंजामहे वयम्
तदत्र कारणेनैव गुरुणा भाव्यमेवहि ३३
येन यच्छसि नः प्राथ एतत्सिद्धिर्भविष्यति
तस्माद्वदतु तत्सर्वं परं कौतुहलं हि नः ३४
निःस्वादितं यथाचाद्य हीदृग्श्राद्धे विगर्हितम्
यथा त्वं नृप शार्दूल श्रद्धया संप्रयच्छसि ३५
तच्छ्रुत्वा वचनं तेषाम् ब्राह्मणानां महात्मनाम्
संविलक्ष्यस्मितं प्राह सलज्जं पृथिवीपतिः ३६
गुह्यमेतन्महाभागा अस्माकं यदि संस्थितम्
अवाच्यमपि वक्ष्यामि शृणुध्वं सुसमाहिताः ३७

अहर्णास सुराः पापो लुब्धकश्चान्यजन्मनि
निहन्ता सर्वजंतूनां तथा भक्षयिता पुनः ३८
पर्य्रटश्च सदारगये धनुषा मृगयारतः
सिंहो व्याघ्रा गजेन्द्रो वा सरभो वा द्विजोत्तमाः ३९
मद्बाणगोचरं प्राप्तो न जीवत्यपि कर्हिचित्
कस्यचित्त्वथ कालस्य भ्रममाणो महीतले ४०
संप्राप्तोहं महाभागा अग्निवेश्यस्य सन्मुनेः
आश्रमे समनुप्राप्ते निशीषे क्षुत्पिपासितः ४१
तावत्तत्र सशिष्येभ्यः श्राद्धकर्मविधिं वदन्
संस्थितो वेष्टितः शिष्यैः सगंताद्द्विजसत्तमाः ४२
अग्निवेश्य उवाच
पक्षे पित्र्ये यदा चंद्रो हंसश्चापि करेव्रजेत्
त्रयोदशी तु सा पैत्र्या विज्ञेया कुंजरोद्भवा ४३
पित्र्ये यदा स्थितश्चन्द्रो हंसश्चापि करेस्थितः
तिथिर्वैश्रवणी प्रोक्ता सा च्छाया कुंजरस्य च ४४
सैहिकेशे यदा चन्द्रं व्रसते पर्वसंधिषु
हस्तिच्छाया तु सा ज्ञेया तप्स्यां श्राद्धं समाचरेत् ४५
तस्यां यः कुरुते श्राद्धं जलैरपि प्रभक्तितः
तावद्वर्षसहस्राणि पितरस्तस्य तर्पिताः ४६
वनस्पतिगते सोमे या छाया पूर्वदिम्मुखी
गजच्छाया तु सा ज्ञेया पितॄणां दत्त मक्षयम् ४७
सा भवेच्च न सन्देहः पुगयदापैतृकी तिथिः
तस्यां श्राद्धं प्रकर्तव्यं संभारान् विभ्रते च ये ४८
प्रभाते तु न संदेहः पितॄणां पितृतृप्तये
शाकैस्तथेंगुदैर्बिल्वैर्बदरैश्चिर्भटैरपि ४९
यदन्नं पुरुषोऽश्नाति तदीयास्ताश्च देवताः
वाढमित्येव चैवोक्त्वा गतः स्वं स्वं निकेतनम् ५०
सर्वशिष्याश्च विप्रेन्द्राः सदाचारपरायणाः
अग्निवेश्योऽपि सुष्वाप समामंत्र्य द्विजोत्तमान् ५१
तेन संकथ्यमानं च रात्रौ तच्च श्रुतं मया

अहं चापि करिष्यामि प्रातःश्राद्धमसंशयम्  ५२
निहत्य खड्गमादाय तस्यमांसं सुषुष्करम्
तथा मधु समादाय कालशाकं विशेषतः  ५३
स्वजातीयेभ्य आदाय तान् पितॄँस्तर्पयाम्यहम्
एवं निश्चित्य मनसा प्रसुप्तोहं द्विजोत्तमाः  ५४
एवं मया पुरा दत्त पितॄनुद्दिश्य  तान्निजान्
नान्यत्किंचित् क्वचिद्दत्तं कदाचित्कस्यचिन्मया  ५५
ततः कालेन महता मृत्युं प्राप्तोऽस्म्यहं द्विजाः
तद्दानस्य प्रभावेण पार्थिवीं योनिमाश्रितः  ५६
एवं जातिस्मरत्वं च संजातं मे द्विजोत्तमाः
ते मया तर्पितास्तेन खड्गमांसेन माद्विकैः  ५७
संप्राप्ताः परमां प्रीतिं ततो द्वादशवार्षिकीम्
एतस्मात्कारणाच्छ्राद्धं तस्यैतत्फलमागतम्  ५८
सांप्रतं विधिना सम्यग्ब्राह्मणैर्वेदपारगैः
उपविष्टैः करोम्येव यच्छ्राद्धं श्रद्धयान्वितः  ५९
दर्भैस्तलैः समोपेतं मंत्रवच्च द्विजोत्तमाः
नो जानामि फलं किंवा सांप्रतं च भविष्यति  ६०
तस्मादेवं परिज्ञाय यूयं चैव द्विजोत्तमाः
संतर्पयध्वं पितॄंश्च निजान् गजदिने स्थिते  ६१
छायायां चैव जातायां कुंजरस्य द्विजोत्तमाः
येन संजायते तृप्तिः पितॄणां द्वादशाद्विकी  ६२
युष्माकं च गतिः श्रेष्ठा यथा जाता ममाधुना
ब्रह्मोवाच
तस्य तद्वचनं श्रुत्वा सर्वे ते ब्राह्मणोत्तमाः  ६३
ते तथा तर्पिताः शीघ्रं ददुस्तस्मै महाफलम्
ततः प्रभृति चक्रुस्ते श्राद्धानि द्विजसत्तमाः  ६४
त्रयोदश्यां नभस्यस्य कृष्णायां भक्तितत्पराः
मधुना कालशाकेन खड्गमांसेन तर्पिताः  ६५
प्राप्नुवन्ति परां सिद्धिं विमानवर मास्थिताः
स्पर्धन्ते तर्पिता देवैर्विमानेन विशेषतः  ६६

वंशजेन प्रदत्तस्य प्रभावं सुरसत्तमाः
श्राद्धार्थं संपरिज्ञाय मंत्रं चक्रुस्ततः परम् ६७
आदित्या वसवो रुद्रा नासत्यावपि पार्थिव
यथा न भवति श्राद्धं तस्मिन्नहनि भूतले ६८
यत्प्रभावाद्वयं सर्वे मनुष्यैः श्राद्धमाश्रितैः
नयामोऽभिभवस्थानं तस्मात्प्राप्नुमहे च तान् ६९
अद्यप्रभृति यः श्राद्धं त्रयोदश्यां करिष्यति
कन्यासंस्थे सहस्रांशौ तस्य स्याद्वंशसंक्षयः ७०
इति शापेन देवानां निर्दग्धेयं महातिथिः
ततः प्रभृति नैतस्यां क्रियते श्राद्धमुत्तमम् ७१
यः प्रमादेन कुरुते तस्यस्याद्वंशसंक्षयः ७२
ये च भीता न कुर्वन्ति छायायां कुंजरस्य च
विशेषेण गजच्छाये तेषां पिंडो मया हृतः ७३
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ गजच्छाया
माहात्म्यं नाम अष्टविंशोऽध्यायः २८

## अध्याय २९

मरीचिरुवाच
छायायां कुंजरस्यैव श्राद्धं कार्यं कथं विभो
एतत्कथय देवेश परं कौतूहलं हि मे १
ब्रह्मोवाच
पितरः पूजनीया हि विश्वेदेवास्तथैव च
तर्पितैः स्तैः सदा भूयादिप्सीतं मनसः सदा २
विप्रा ऊचुः
कथं कार्यं महाभाग श्राद्धं कीलककं विना
कीलके चाप्यसंतुष्टे श्राद्धकर्मप्रदूषके ३
मरीचिरुवाच
कोऽसौ कीलककोनामद्वेष्टा जातो द्विजन्मनाम्
कथं ग्रामाद्विहर्जातो धर्मकर्मप्रदूषतः ४
ब्रह्मोवाच

संख्ययैकाठकाः प्रोक्ता विश्वेदेवाः सदा शुभाः
श्राद्धकर्ममात्कारः सदासद्भिः प्रपूजिताः ५
तेषां मध्ये कीलकस्तु दुष्टः सर्वैर्बहिष्कृतः ६
कृतघ्नो दूपकोऽसत्यः पापात्मा धर्मवर्जितः
वेदकर्मप्रहर्ता च दुष्टः सर्वमखोज्झितः ७
ग्रामानांदीपुरात्सोऽपि गतो देशान्तरं बली
नांदीमुखानां विप्राणामन्तः शल्य इवाऽभवत् ८
तत्रस्थो सौ च नगरे दायत्येव तान्द्विजान्
श्राद्धकर्मणि यज्ञे च पापात्मा दैत्यतां गतः ९
मूत्रोच्छिष्टं विसृजते धर्मकर्मणि च पापकृत्
सर्वत्र नगरे चैव हाहाकारो महानभूत् १०
न यज्ञाश्च प्रवर्तन्ते न श्राद्धानि कथंचन
कदाचिदपि ते कुर्युरेकान्ते गृहमध्यतः ११
एवं चिंताकुलाजाता विप्रा नांदीमुखोद्यः
किंकर्तव्यं मिथः प्रोचुर्विस्मयान्वितचेतसः १२
दूरीकुर्वन्ति मंत्रेण तं तथापि महीयते
सदासंत्रस्तमनसः किं कार्यमितिचाब्रुवन् १३
ब्रह्मोवाच
एवं कालेन महता जगदानंदकारकः
इन्दीवरेक्षणश्चैव सर्वशत्रुनिषूदनः १४
रावणो राक्षसो नाथो हतो येन निशाचरः
कीलकस्तेन रामेण सान्त्वितः प्रभुणा तदा १५
आनीतो नगरे रम्ये विस्तरेण शृणुष्व तत्
दत्वा क्रिया विभागं च दुष्टाय च महात्मना १६
नाभेन जगतां तेन रामेणामिततेजसा
रावणं सगणं हत्वा सीतामादाय भूपतिः १७
प्लवगैः सममायातः सुवेलस्य तटे यदा
मरीचिरुवाच
रामेणप्लवगैः साकं कथं युद्धमकारि च १८
के के विनिहताः संख्ये कीलकः किं च सांत्वितः

मैत्री बिभीषणेनापि जाता तस्य कथं विभो १९
एतत्कथय देवेश विस्तरेण दयां कुरु
ब्रह्मोवाच
तिथौ प्रशस्ते नक्षत्रे मुहूर्ते चापि पूजिते २०
तेन व्यूढेन सैन्येन लोकानुद्वर्तयन्निव
प्रययौ राघवः श्रीमान् सुग्रीवसहितस्तथा २१
मुखमासीत्तु सैन्यस्य हनुमान् मारुतात्मजः
जघनं पालयामास सौमित्रि कुतोभयः २२
बद्धगोधाङ्गुलित्राणौ राघवौ तत्र रेजतुः
वृत्तौ हरिमहामात्रैः चंद्रसूर्यौ ग्रहैरिव २३
प्रबभौ हरिसैन्यं तच्छालतालशि लायुधम्
सुमहाशालि भवनं यथा सूर्योदये सदा २४
नलनीलांगद क्रौंचमैंद द्विविदपालिता
ययौ सुमहती सेना राघवस्यार्थसिद्धये २५
विविधेषु प्रशस्तेषु बहुमूल फलेषु च
प्रभूतमधुमांसेषु वारिमत्सु शिवेषु च २६
निवसन्ती निरावाधा तथैव गिरिसानुषु
उपायाद्धरिसेना ता क्षारोदभयसागरम् २७
द्वितीयसागरनिभं तद्बलं बहुलध्वजम्
वेलावनंसमासाद्य निवासमकरोत्तदा २८
मरीचिरुवाच
के के प्लवगशार्दूला कति यूथस्य यूथपाः
समागता स्तत्र सैन्ये सुग्रीवेण पचोदिताः २९
ब्रह्मोवाच
ततस्तत्रैव रामस्य समासीनस्य तैः सह
समा--- कपि श्रेष्ठाः सुग्रीववचनैस्तदा ३०
वृतः कोटीसहस्रेण वानराणां तरस्विनाम्
मदुरोबालिनः श्रीमान् मुखं रामंसमभ्यगात् ३१
कोटीशताष्टगोवापि गजोगवय एव च
वानरेन्द्रैर्महावीर्यैः पृथक् साकमदृश्यत ३२

षष्ठीकोटी सहस्त्राणि प्रवर्षम् प्रत्यदृश्यत
लांगुलोपि च विप्रेन्द्र गवासो भीमविक्रमः ३३
गंधमादनसंस्थौ च ग्रथितौ गंधमादनौ
कोटीसहस्त्रमग्राणां हरीणा धर्पयत्तया ३४
एनसो नाम मेधावी नानरः सुमहाबलः
कोटिर्दशद्वादश च पञ्चत्रिंशच्चकर्षति ३५
श्रीमान् दधिमुखोनाम हरिवृद्धोऽति वीर्यवान्
प्रचकर्ष महासैन्यं हरीणां भीमचेतसाम् ३६
कृष्णानां मुखपाण्डुत्स मृद्धाणां भीमकर्षणाम्
कोटीशतसहस्त्रेण जांबुवान् प्रत्यदृश्यत ३७
एते चान्ये च बहवो हरियूथपयूयपाः
ग्रसंख्येया महाराज समेयू रामकारणात् ३८
शिरीषकुसुमाभानां सिंहानामिव नर्दताम्
श्रूयते तुमुलः शब्दस्तत्र तत्र प्रधावताम् ३९
गिरिकूटनिभाः केचिद् केचित् महिषसंनिभाः
शरदभ्रमतीकाशा पिष्टद्विगुलकाननाः ४०
उत्पत्तितः पतंतश्च प्लवमाना वनेचराः
उदन्यतोऽपरे रेणुं समाजग्मुः समं ततः ४१
स वानरमहालोकाः पूर्णसागरसंनिभः
निवेशमकरोत्तत्र सुग्रीवानुमते तदा ४२
ततस्तेषु हरीन्द्रेषु समाष्टत्तेषु सर्वतः
शुशुभे रथुनाथस्तैः सुवेलतटमाश्रितः ४३
मरीचिरुवाच
कथं स हातवान् रामः सीतां रावणरक्षिताम्
लंकौपपनमध्यस्यां केन दष्टा महात्मना ४४
एतदाश्चर्यमाचक्ष्व तीर्त्वा सागरमुत्तमम्
दुस्तरं मनुजैर्नश्च गतवान् को दुरासदः ४५
ब्रह्मोवाच
राघवस्तु ससौमित्रिः सुग्रीवेणाभिपालितः
वसन्माल्यवतः पृष्टे ददर्श विमलं नभः ४६

सदृष्ट्वादिमले व्योम्नि विगसं शशिलांछितम्
ग्रहनक्षत्रताराभिरनुयातममित्रहा ४७
कुसुदोत्पलपद्मानां गंधानादाय वायुना
महीधरस्थः शीतेन वायुणा प्रतिबोधितः ४८
प्रभाते लक्ष्मणं वीस्मभ्यभाषत संकुलः
सीता संस्मृत्य धर्मात्मा रुद्धां राक्षस वेश्मनि ४९
गच्छ लक्ष्मण जानीहि किष्किन्धायां कपीश्वरं
प्रसक्तं गृहकृत्येषु कृतघ्नं स्वार्थणेदुतम् ५०
योऽसौ कुलाधमो मूढो मयाराज्येऽभिषेचितः
सर्वे वानरमुख्याश्च यभृसाश्चापि भेजिरे ५१
यदर्थान्निहतोधीमान् नया वानरपुंगवः
त्वया सह महाबाहो किष्किन्धोपवने तदा ५२
कृतघ्नं तपहं मन्ये वानरस्पसदं भुवि
यो मामेवं गतं मूढो न जानीतेऽद्य लक्ष्मण ५३
व्यतिरिक्तं न जानीते समयप्रतिपादनम्
कृतोपकारं मे नूनमवमत्याल्पया धिया ५४
यदि तावदनव्यक्तः स चेत्कामवशात्मकः
तेनायं पाकिमार्गेण किं गमिष्यति लक्ष्मण ५५
गच्छ मद्धश्चनं ब्रूहि भ्रातस्तं वानराधमम् ५६
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ श्रीरामपराक्रम नामैकोनत्रिंशोऽध्यायः

## अध्याय ३०

ब्रह्मोवाच
इत्युक्तो लक्ष्मणो भ्रात्रा गुरुवाक्यहिते रतः
प्रतस्थे रुचिरं नीत्वा समार्गणगणं धनुः १
किष्किन्धाद्वारयासाद्य प्रविवेशानिवारितः
संक्रुद्धं तं स विज्ञाय राजा प्रत्युद्ययौ हरिः २
तं सदारो विनीतात्मा सुग्रीवः प्लवगाधिपः
पूजया प्रतिजग्राह गीयमाणः सदर्हया ३
तमब्रवीद्रामवचः सौमित्रिस्कुतो भयः

एतत्सर्वमशेषेण सुत्वा प्राह कृतांजलिः ४
समृत्यदारो राजेन्द्रतावकोऽहं नराधिपम्
इदमाह वचः प्रीतो लक्ष्मणं नरकुंजरम् ५
नास्मि लक्ष्मण दुर्मेधा च कृतघ्नो न निर्घृणः
श्रूयतामत्र यद्योगे सौतान्पेषणतत्पराः ६
द्वीपान् प्रस्थापिताः सर्वे विनीता हरयो मया
सर्वेषामवनीपाल मासेनागमनावधिः ७
गैरयं समयः साद्रिः सपुरा सागराम्बरा
विचेतव्या मही सर्वा समग्रनगराकरा ८
स मासः पंचरात्रेण पूर्णो भवितुनर्हति
ततः श्रोष्यसि रामेण सहितः सुमहत्प्रियम् ९
इत्युक्तो वानरेन्द्रेण लक्ष्मणस्तेन धीमता
त्यक्त्वा दोषमदीनात्मा सुग्रीवं प्रत्युपूजयत् १०
स समं सहसुग्रीवो माल्यवत्पृष्ठवासिनम्
अभिगम्योदयं तस्य कार्यस्य प्रत्यवेदयत् ११
अत्रान्तरे वानरेन्द्राः समाजग्मुः सहस्रशः
दिशस्तिस्रो विचिन्व्याथ न तु ये दक्षिणां गताः १२
आचख्युस्तेऽथ रामाय महीसागरमेखला
विचिता न च वैदेह्या दर्शनं रावणस्य च १३
गतास्तु दक्षिणामाशां ये वै वानरपुंगवाः
आशावांस्तेन काकुत्स्थो पाणानार्तो व्यधारयत् १४
द्विमासे परमे काले व्यतीते प्लवगास्ततः
सुग्रीवमंत्रिमभ्येदं चरितो वादयमब्रवीत् १५
रक्षितं बलिना यत्तत् स्फीतं मधुवनं महत्
त्वया च प्लवगश्रेष्ठ तद्युक्तं पवनात्मजः १६
बालिपुत्रोंऽगदश्चैव ये चान्ये प्लवगर्षभाः
विचेतुं दक्षिणामाशां राजन् प्रस्थापितास्त्वया १७
तेषां सप्रणयं श्रुत्वा मन्ये सत्कृतकृत्यताम्
कृतार्थानां हि भृत्याना मेतद्भवति चेष्टितम् १८
स तद्रामाय मेधावी शशंस प्लवगर्षभः

रामश्चाप्यनुमानेन मेने दृष्टास्ति मैथिली १९
हनुमत्प्रमुखास्तेतु वानराः पूर्णमानसाः
प्रणेमुर्विधिवद्रामं सुग्रीवं लक्ष्मणं तथा २०
तानुवाच ततो रामः प्रगृह्य सशरं धनुः
अयिमां सान्त्वयिष्यन्ति भवन्तः कर्मसाधकाः २१
अपि राज्यमयोध्यायां पालयिष्याम्यहं पुनः
निहत्य समरे शत्रू नाहृत्य जनकात्मजाम् २२
न सम्प्राप्यैव वैदेही महत्वा च रिपू व्रणे
हृतदारोऽवधूतश्च नाहं जीवितुसुत्सहे २३
इत्युक्तवचनं रामं प्रत्युवाचनिलात्मजः
प्रिययाख्यामि ते राम दष्टा सा जानकी मया २४
विचिन्त्य दक्षिणामाशां सपर्वतवनाकराम्
श्रांताः काले व्यतीते तु दष्टवंतो महागुहाम् २५
प्रविष्टास्तु वयं तां तु बहुयोजनमायताम्
अंधकारां सुविपिनां गहनां सिद्धनिषेविताम् २६
गत्वा सुमहदध्वान मादित्यस्य प्रभां ततः
दृष्टवन्तश्च तत्रैव भवनं दिव्यमन्तरा २७
मयस्य किल दैत्यस्य तदासीद्विश्य राघव
तत्र प्रभावती नाम तपोऽताप्यत तापसी २८
तथा दत्तानि भोज्यानि पानानि विविधानि च
भुक्त्वा लब्धबलाः संतस्तयोक्तेन यथा ततः २९
पर्याय तस्मादुद्देशात्पश्यामो लवणाम्भसः
समीपे सह्यमलयौ दुर्दुरं च महागिरिम् ३०
ततो मलयमारुह्य पश्यन्तो वरुणालयम्
विषन्त व्यथिता भीता निराशा जीविते भृशम् ३१
अनेकशस्तं विस्तीर्णं योजनानां महोदधिम्
तिमिनक्ररुषावासं चिन्तयन्तः सुदुःखिताः ३२
तत्रानशनसंकल्पं कृत्वासीनास्तदा वयम्
ततः कथान्ते गृध्रस्य जटायो रभवत्कथा ३३
ततः पर्वतशृंगाभं वोररूपं भयावहम्

पक्षिणं दष्टवन्तश्च वैनतेयमिवा परम् ३४
सोऽस्मानतर्कयद्भोक्तुमथोपेत्य पचोऽब्रवीत्
भोः क एष मम भ्रातुर्जटायोः कुरुते कथाम् ३५
संपातिर्नाम तस्याहं ज्येष्ठो भ्राता खगाधिपः ३६
अन्योन्यस्पर्धया रूढावावामादित्यमंडलम्
ततो दग्धाविमौ पक्षौ न तु दग्धौ जटायुषः ३७
तदा मया सुखं दृष्टो भ्राता गृध्रपतिः प्रियः
निर्दग्वपक्षः पतितो ह्यहमत्र महागिरौ ३८
तस्यैवं वदतोऽस्माभिर्हतो भ्राता निवेदितः
व्यसनं भवतश्चेदं संक्षेपाद्वै निवेदितम् ३९
स संपातिस्तदा राजञ्श्रुत्वा सुमहदप्रियम्
विषण्णचेताः पप्रच्छ पुनरस्मानरिंदम ४०
कश्च रामश्च का सीता जटायुश्च कथं हतः
इच्छामि सर्वमेवैतच्छ्रोतुं प्लवगसत्तमाः ४१
तस्याहं सर्वमेवेदं भवतो व्यसनागमम्
प्रायोपवेशनं चैव वृत्तमुक्तं सविस्तरम् ४२
सोऽस्माँस्तु सान्त्य यामास वाक्येनानेन पक्षिराट्
रावणो विदितो मेद्य लंका यस्य महापुरी ४३
दृष्टा पारे समुद्रस्य त्रिकूटगिरिकंदरे
भवित्री तत्र वैदेही न मेऽत्रास्ति विचारणा ४४
ततस्तस्य वचः श्रुत्वा वयमुच्छ्रायसत्वराः
सागराक्रमणे मंत्र मकार्ष्म मुदिता वयम् ४५
नाध्यगच्छत्तदा कश्चित्सागरस्य विलंघनम्
तथापि तं समाविश्य पुप्लुवे मकरालयम् ४६
शतयोजनविस्तीर्णां निहत्य जलराक्षसीम्
तत्र सीता मया दृष्टा रावणान्तःपुरे सती ४७
उवास च तपःक्षामा भर्तृदर्शनलालसा
जटिला मलदग्धांगी दृष्टा दीना तपस्विनी ४८
निमित्तैस्तामहं सीतामुपालभ्य तपस्विनीम्
उपसृत्याब्रुवं वाक्यमहंवाशु रहोगतम् ४९

सीते रामस्य दूतोऽहंवानरो मारुतात्मजः
त्वद्दर्शनमभिप्रेप्सुरिह प्राप्तो वियद्दिशा ५०
राजपुत्रौ कुशलिनौ भ्रातरौ रामलक्ष्मणौ
सर्वशाखामृगेन्द्रेण सुग्रीवेण प्र पा लितौ ५१
कुशलं चाब्रवीद्रामः सीते सौमित्रिणा सह
सखिभावाच्च सुग्रीवः कुशलं चानुपृच्छति ५२
आगमिष्यति ते भर्ता सर्वशाखामृगैः सह
प्रत्ययं कुरु मे देवि वानरोऽस्मि न राक्षसः ५३
मुहूर्तमिव तु ध्यात्वा सीता मां प्रत्युवाच हि
अवैमि त्वां हनूमंतमवंध्यवचनादहम् ५४
अवन्ध्यो हि महाभागो राक्षसो बुद्धिसंमतः
कथितस्तेन सुग्रीवस्त्वद्विधैः सचिवैर्वृतः ५५
गम्यतामिति चोक्त्वा मां सीता प्रादादिमं मणिम्
धारिता येन वैदेही कालमेतमनिंदिता ५६
प्रत्ययार्थं मणिं चेमं कथयामास जानकीम्
क्षिप्तामिषीका काकस्य चित्रकूटे महागिरौ ५७
भवतः पुरुषव्याघ्र प्रत्यभिज्ञानकारणात्
अथात्मानं ग्राहयित्वा दग्धां तां च पुरीं ततः ५८
हत्वा क्षयं सुतं वीरं राक्षसानामनेकशः
भवत्संदेशजैर्वाक्यैः सीतामाश्वास्य भूपते ५९
संप्राप्त इति तं रामः प्रियवादिनमर्चयत्
तद्वाक्येन महाराजः पीयूषेणेव सिंचितः ६०
एतत्ते सर्वमाख्यातं सीताभि ज्ञानकारणम्
पुनः पप्रच्छ तमृषिं श्रीरामचरिताद्भुतम् ६१
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ श्रीरामचरितनाम त्रिंशोऽध्यायः

## अध्याय ३१

वह्निरुवाच
एतां पुण्यकथां श्रुत्वा महर्षिर्हृष्टमानसः
ब्रह्माणं च पुनः प्राह देवदेवं पितामहम् १

मरीचिरुवाच
कथं वीरौ समायातौ राघवौ तत्र तापसौ
सुग्रीवेण कथं मैत्री तयोर्जाता महात्मनोः २
कथं च निहतः संख्ये बाली परपुरंजयः
एतदाचक्ष्व भगवन् न तृप्यामि कथां पिबन् ३
ब्रह्मोवाच
पित्रादेशाद्वनं याते रामे सौमित्रिणा सह
तस्यभार्याऽभवत्साध्वी विदेह नृपतेः सुता ४
स हृता वनमध्यस्था रावणेनातिपाप्मना
एकाकिनी वने घोरे छलमाधाय रक्षसा ५
तदा तौ विपिने वीरौ शोकसंतापविक्लवौ
विचरतुस्तु गहने हा सीतेति विचुक्रुशुः ६
दुःखशोकसमाविष्टौ वैदेहीहरणार्दितौ
जग्मतुर्दंडकारण्या द्दक्षिणेन परंतप ७
ददृशाते मुहूर्ताच्च कबंधं घोरदर्शनम्
मेघपर्वतसंकाशं शालस्कंधं महाभुजम् ८
विशालवक्षसं पापं विशालाक्षं महोदरं
यदृच्छयाथ तद्रक्षः करे जग्राह लक्ष्मणम् ९
विषादमगमत्सद्यः सौमित्रिरकृतोभयः
सराममभिसंप्रेक्ष्य सशोकमिति विह्वलम् १०
विषादात्सोऽब्रवीद्राम पश्य मां रक्षसां हृतम्
हरणं चापि वैदेह्या ममैता मागतां दशाम् ११
राज्यभ्रंशश्च भवतस्तातस्य मरणं तथा
नाहं द्रक्ष्यामि वैदेह्या समेतं त्वां पुरीं गतम् १२
प्राप्स्यामि पृथिवीराज्यं पितृपैतामहस्थितम्
द्रक्ष्यंत्यार्यस्य कुलजा सुभगा जलपल्लवैः १३
अभिषिक्तस्य वदनं कदा दक्ष्ये परंतप
एवं बहुविधं धीमान् विललाप स लक्ष्मणः १४
तमुवाचाथ काकुत्स्थ संभ्रमेष्वप्यसंभ्रमः
मा विषीद नरव्याघ्र नायं धर्मोऽस्तिभूभुजाम् १५

छिन्ध्यस्य दक्षिणं बाहुं छिन्नः राज्ञो मया भुजः
इत्येवं वदता तस्य भुजो रामेण पातितः १६
निस्त्रिंशे नातितीक्ष्णेन चकर्त तिलकांडवत्
ततोऽस्य दक्षिणं बाहुं खड्गेना जघ्निवान् बली १७
सौमित्रिरपि संप्रेक्ष्य भ्रातरं राघवं स्थितम्
पुनरप्याह तत्पार्श्वे तद्रक्षो लक्ष्मणो भृशम् १८
गतासुरपतद्भूमौ कबंधः सुमहां स्ततः
तस्य देहाद्विनिसृत्य पुरुषोदिव्यलक्षणः १९
ददृशे देवमास्थाय दिविसूर्य इव ज्वलन्
पप्रच्छरामस्तं वाग्मी कस्त्वं प्रब्रूहि पृच्छतः २०
काम्यया किमिदं चित्रमाश्चर्यं प्रतिभाति मे
तस्यावचक्षे गंधर्वो विश्वावसुरहं नृप २१
अहं प्राप्तोनुशापेण योनिं राक्षससेविताम्
रावणेन हृता सीता राज्ञा लंकानिवासिना २२
सुग्रीव मभिगच्छ त्वं स ते भद्रं करिष्यति
एषा पंपा शिवजला हंसकारंडसेविता २३
ऋक्षमूकस्य शैलस्य संनिकर्ष तटाकिनी
स वसत्यत्र सुग्रीवश्चतुर्भिः सचिवैः सह २४
भ्राता वानरराजस्य बालिनो हेममालिनः
एतावच्छक्व मस्माभिर्वक्तुं द्रक्ष्यसि जानकीम् २५
ध्रुवं वानरराजस्य विदितो रावणालयः
इत्युक्त्वांतर्हितो दिव्यः पुरुषः स महाप्रभः २६
विस्मयं जग्मतुश्चोभौ भ्रातरौ रामलक्ष्मणौ
ब्रह्मोवाच
ततोह्यदूरे नलिनीं प्रभूतकमलोत्पलाम् २७
सीताहरणदुःखार्तो रामः पंपां समागतः
मारुतेनातिशीतेन मृदुना तिसुगंधिना २८
सेव्यमानो वने तस्मिन् जगाम मनसा प्रियाम्
विललाप स राजेन्द्रस्तत्र कान्ता मनुस्मरन् २९
कामवाणाभिसंतप्तः सौमित्रि स्तमयाब्रवीत्

न त्वामेवंविधो भावः स्प्रष्टुं मर्हति राघव ३०
ग्रात्मवन्तमिव व्याधिः पुरुषं व्याधि शीलिनम्
प्रवृत्तिमुपलभ्यान्ते वैदेह्या रावणस्य च ३१
तां त्वं पुरुषकारेण बुद्ध्या चैवोपवादय
सुग्रीवगभिगच्छावः शैलस्थं हरिपुंगवम् ३२
सुग्रीवो पि च तौ दृष्ट्वा वीरौ बलवतां वरौ
मनसा ववृधे तत्र कृतकृत्यत्वमन्यगात् ३३
सुग्रीवः पूजयामास पाद्यादि विधिपूर्वकम्
तत् प्रत्ययकरं बुद्ध्वा सुग्रीवं प्लवगाधिपम् ३४
पृथिव्यां वानरैश्वर्ये स्वयं रामोऽभ्यपेचयत्
प्रतिजज्ञे च काकुत्स्थः समरे बालिनो वधं ३५
सुग्रीवोऽपि प्रसन्नात्मा सीतायन्वेपयामि च
इत्येवं समयं कृत्वा तत्रैव च परस्परम् ३६
मेघगंभीरया वाचा ननाद प्लवगाधिपः
नैतत्सन्ममृषे बाली तं तारा प्रत्यषेधयत् ३७
यथा नदति सुग्रीवो बलवानद्य वानरः
मन्ये सदाश्रयं प्राप्तो न त्वं निर्गन्तुमर्हसि ३८
हेममाली ततो बाली तारां ताराधिपाननाम्
प्रोवाच वचनं वाग्मी तां वानरपतिः पतिः ३९
सर्वं भूतकृताज्ञांतां पश्यन् बुद्ध्या समन्विताम्
केनाप्या श्रययुक्तोऽसौ ममैव भ्रातृ गंधिकः ४०
चितयित्वा मुहूर्तं तु तारा ताराधिकप्रभा
पति मित्यब्रवीत्प्राज्ञा शृणु सर्वकपीश्वरम् ४१
हृतदारो महासत्वो रामो दशरथात्मजः
भ्राता चास्य महाबाहुः सौमित्रिरकुतोभयः ४२
लक्ष्मणो नाम तेजस्वी स्थितः कार्यार्थं सिद्धये
मैंदश्च द्विहरिद्रश्चैव हनुमाननिलात्मजः ४३
जांबुवानृक्षराजश्च सुग्रीवसचिवाः स्मृताः
सर्व एते महात्मानो बुद्धिमन्तो महाबलाः ४४
रलवंतोऽतिवीर्याश्च श्रीरामस्य व्यपाश्रयात्

तस्यास्तदाधिप्यवचो हितमुक्तो कपीश्वरः ४५
पर्यशंकत तामीशो सुग्रीवगतमानसाम्
तारां परुष मुक्त्वाशु निर्जगाम गुहामुखात् ४६
स्थितं माल्यवतः प्रान्ते सुग्रीवं सोऽभ्यभाषत
असकृत्त्वं मया मूढ निर्जितो जीवितप्रियः ४७
अन्तकश्च समाहूतस्त्वया मरण मिच्छता
इत्युक्तः प्राह सुग्रीवो भ्रातरं हेतुमद्वचः ४८
प्राप्ताकालममित्रघ्नो रामं संबोधयन्ति च
हृतराज्यस्य मे राजन् हतदारस्य च त्वया ४९
किन्तु जीवित सामर्थ्यमिति विद्धीदमागतम्
एवमुक्त्वा बहु विधं ततस्तौ संनिपेततुः ५०
समरे बालीसुग्रीवौ शालतालशिलायुधौ
उभौ जघ्नतुरन्योन्यमुभौ भूमौ निपेततुः ५१
उभौ च चेलतुश्चित्रं मुष्टि भिश्च निजघ्नतुः
उभौ रुधिरसंसिक्तौ नखदंतपरिक्षतौ ५२
शुशुभाते महावीरौ पुष्पिता विवकिंशुकौ
न विशेषस्तयोर्युद्धे यदा कश्चन दृश्यते ५३
सुग्रीवस्य तदामालां हनुमान् कंठमाविशत्
स मालया ततो वीरः शुशुभे कंठसक्तथा ५४
श्रीमानिव महाशैलो मलयो मेघमालया
कृतचिह्नं तु सुग्रीवं रामोदृष्ट्वा महाबलः ५५
विचकर्ष धनुः श्रेष्ठं लक्ष्यमुद्दिश्य बालिनम्
दंकारस्तस्य धनुषो यंत्रस्येव तदा वभौ ५६
वितत्रास ततो वाली शरेणाभिहतो बली
स भिन्नमर्मा भिहतो वक्राच्छोणित मुद्वमन् ५७
ददर्शामिश्रिणं राममारात् सौमित्रिणा सह
गर्हयित्वा च काकुत्स्थं पपात भुवि मूर्छितः ५८
तारा ददर्श तं भूमौ तारापतिमिवच्युतम्
हते बालिनि सुग्रीवः किष्किन्धां प्रत्यपद्यत ५९
तामवाप स्वीयपत्नीं तारां च वानरेश्वरः

रामस्तु चतुरो मासान् पृष्ठे माल्यवतः शुभे ६०
निवासमकरोद्धीमान् सुग्रीवेणाभ्युपस्थितः
रावणोऽपि पुरीं गत्वा लंकां कामबलान्वितः ६१
सीतां निवेशयामास भवने नंदनोपमे
अशोकवाटिकाभ्यासे तापसाश्रयसंनिभे ६२
भर्तृस्मरणतन्वंगी तापसी वेषधारिणी
उपवासतपःशीला ततः सा पृथुलोचना ६३
उवास दुःखभारेण फलमूलजलाशना
भर्तृस्मरणमात्रेण दिनानि निरवाहयत् ६४
दिदेश राक्षसीं तस्याः रक्षणे राक्षसाधिपः
प्रासासिशूलपरशुमुद्गरालातधारिणीं ६५
द्व्यक्षीं त्र्यक्षीं ललाटाक्षीं दीर्घजिह्वामजिह्मगाम्
विस्तृतानैकपादांगीं त्रिजटा नाम राक्षसीम् ६६
एताश्चान्याश्च दीप्ताश्च करभोत्कटमूर्धजाः
परिवार्यांवतिष्ठन्ते दिवारात्रमतंद्रिताः ६७
ता रौद्रा दारुणाक्ष्यश्च पिशंग्योतिस्वरस्वनाः
तर्जयन्ति महारौद्राः कुरूपाः परुषाक्षराः ६८
भक्षयामः पाटयामस्तिलशः प्रविभज्यताम्
येयं भर्तारमस्माकं तिरस्कृत्येह जीवति ६९
इत्येवं भीषयन्त्यस्तां ताम्यन्त्यश्च पुनः पुनः
सीता शोकसमादिष्टा निःश्वस्येदमुवाच ताः ७०
भार्दाः खादत यां शीघ्रं न लोमो मेऽस्ति जीविते
---म्यां पुरीं च काक्षन्ती नीलाकृंचितमूर्धजाम् ७१
अप्येवाहं निराहारा न जीवे प्रियवर्जिता
ष्टोपयिष्यामि मात्राणि व्याली तालगता यथा ७२
न त्वन्यमभिच्छेयं पुमांसं राघवादृते
इति जानीत मे सत्यं क्रियतां तदनन्तरम् ७३
तस्यास्तद्वचनं श्रुत्वा राक्षस्यस्ताः स्वरस्वनाः
आख्यातुं राक्षसेंद्राय जगुस्तत्सर्वमादितः ७४
गतासु तासु सर्वासु त्रिजटा नाम राक्षसी

सान्त्वयामास वैदेही सुधर्मा प्रियपदिनी ७५
सीते वद्त्यामि ते किंचिद् रिद्धि संमति मे सलि
भयं तेव्येतु वामोरु शृणु चेदं वचो मम ७६
विंध्यो नामा च मेधावी हृदो रात्तसपुंगवः
स रावणहितारायेषी स्वदर्थे मां समादधात् ७७
सीता मद्वचना द्वाच्च्या समाश्वास्य प्रसाद्य च
भर्ता ते कुशली रामो लद्त्मणानुगतो बली ७८
सख्यं वानरराजेन शक्रमतिमतेजसा
कृतवान् राघवः श्रीमान् त्वदर्थे च समुग्रतः ७९
मा च ते भो भयं भीरु रावणाल्लोकगर्हितात्
नलकूबरशापेन रत्तिता ह्यसि सुंदरि ८०
शप्तो ह्येष पुरा पापो वधूं रंभां परावृशन्
सक्तोऽपि विवशां नारीं प्राप्य शृत्युवशं गतः ८१
त्तिप्रमेष्यति ते भर्ता सुग्रीवेणाभिरत्तितः
सौमित्रिसहितो धीमांस्त्वां मीतो मोचयिष्यति ८२
स्वप्ना हि सुमहावोरा दृष्टा मे रौद्रदर्शनाः
विनाशं थास्यति त्तिप्रं प्रौलस्त्यः कुलकुन्तनः ८३
दारुणो ह्येष दुष्टात्मा त्तुद्रधर्मनिशाचरः
स्वभावशीलदोषेण सर्वेषां भयवर्धनः ८४
स्पर्धते सर्वदेवैश्च कालोपहतचेतनः
मया विनाशलिङ्गानि स्वप्ने दृष्टानि तस्य वै ८५
तैलाभिषिक्तो विकलो मज्ञन् केशविमुक्तकः
असकृत् खरयुक्तेन रपेनैति स दत्तिणाम् ८६
कुंभकर्णादयश्चेमे मग्नाः पतितमूर्धजाः
कुप्यन्ते दत्तिणामाशां रदतमाल्पानुलेपराः ८७
श्वेतपर्वतमारुडो भुंजानो मधुपापसम्
लद्त्मणश्च मया दुष्टो संपश्यन् सर्वतो दिशम् ८८
रुदन्ती रुधिरार्दिगा व्याघ्रेण परिरत्तिता
लंकेयं नगरी दृष्टा पष्ठन्ती दिशमुत्तराम् ८९
हर्ममेष्यति वैदेहि त्तिपं भ---मन्विता

लक्ष्मणेन च संयुक्ता सीते भर्तृहिते रता ९०
इत्येषा मृगशावाक्षी तच्छ्रुत्वा त्रिजटावचः
बभूव शोचती बाला पुनर्भर्तृसमागमे ९१
यावदभ्यागता रौद्रा पिशाचेभ्यश्च दारुणाः
ददृशुस्ता स्त्रिजटया सह सीतां यथा पुरा ९२
ब्रह्मोवाच
तापसीं भर्तृशोकार्तां दीनां मलिनवाससम्
मणिशेषाभ्यलंकारां रुक्ष्मतीं च पतिव्रताम् ९३
राक्षमीभिः सेव्यमानां समासीनां धरातले
रावणः कामयाणार्तो ददर्शोपयने स्थिताम् ९४
देवरानवगंधर्वैर्यक्षैः किं पुरुषैर्युधि
अजितोऽशोक वनिका मागतः काममोहितः ९५
दिव्याम्बरभरः श्रीमान् सुमृष्टमणिकुंडलः
विचित्रमाल्यमुकुटो वसंत इव मूर्तिमान् ९६
स कल्पवृक्षसदृशो यत्नादपि विभूषितः
श्मशान चैत्यद्रुमवद्भूषितोऽपि भयंकरः ९७
स तस्यास्तनुमध्यायाः समीपे रजनीचरः
ददृशे रोहिणीमेत्य शनैश्चर इव ग्रहः ९८
स ता मामन्त्र्य सुश्रोणीं पुष्पकेतुशराहतः
इदमित्यब्रवीद्बालां त्रस्तां व्याकुललोचनाम् ९९
सीते पर्याप्तकामा त्वं भर्तृभावेन मा मपि
प्रसादं कुरु तन्वंगि क्रियतां प्रतिकर्म ते १००
भजस्व मां वरारोहे महाभरणभूरिता
भव मे सर्वनारीणामुत्तमा वरवर्णिनि १०१
सन्ति मे देवकन्याश्च देवर्षीणां तथाङ्गनाः
संति दानवकन्याश्च राजर्षीणां च पोषितः १०२
चतुर्दश पिशाचानां कोटयो मे व्यवस्थिताः
द्विस्तावत्पुरुषादानां रक्षसां भीमकर्मणाम् १०३
ततोऽपि त्रिगुणा यक्षाः सन्ति मे कृत्यकारिणः
केचिदेवधनाध्यक्षां भ्रातरं मे समाश्रिताः १०४

गंधर्वाप्सरसो भद्रे मदीयचरणान्तिके
प्रार्थयन्ति सदा सर्वे तथैव भ्रातरं मम १०५
पुत्रोहमपि विप्रर्षेः साक्षाद्विश्रवसो मुनेः
पंचमो लोकपालाना गिति मे प्रथितं यशः १०६
दिव्यानि भक्ष्य भोजानि पानानि विविधानि च
मध्ये च त्रिदिवेशस्य तथैव मम भामिनि १०७
क्षीयतां दुष्कृतं कर्म वनवासकृतं तव
भार्या मे भव सुश्रोणि यथा म दोदरी तथा १०८
इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ श्रीरामचरितं नाम एकत्रिंशोऽध्यायः

## अध्याय ३२

ब्रह्मोवाच
इत्युक्ता तेन वैदेही परिवृत्य शुमानना
कृतान्तं दूरतः कृत्वा तमुवाच निशाचरम् १
अशिवेनापि वामोरुरजस्त्रं नेत्रवारिणा
स्तनाग्रपतितौ पीनौ सा हि तावभिपिंचती २
उवाच वाक्यं तं क्षुद्रं वैदेही पतिदेवता
असकृ द्वदतो वाक्यमीदृशं राक्षसेश्वर ३
अधर्मयुक्तमेतत्ते मया श्रुतमभाग्यया
तद्भद्र सुखभद्रं ते मानसं संनिवर्तताम् ४
परदारास्म्यलभ्या च सततं च पतिव्रता
न चैवोपषिकी भार्या कृपणा मानुषी तव ५
विवशां धर्मयित्वा मां कां त्वं प्रीतिमवाप्स्यसि
प्रजापतिसमो विप्रो ब्रह्मयोनिः पिता तव ६
न स पालयसे धर्मलोकपालोपमः कथम्
भ्रातरं राजराजानां महेश्वरसखं प्रभुम् ७
धनेश्वरं व्यपदिशन् कथं हि त्वं न लज्जसे
इत्युक्त्वा प्रारुदत् सीता कंपयंती व्योधरौ ८
शिरोधरां च तन्वंगी मुखं प्रच्छाद्य पाणिना
तदा रुदन्त्या भामिन्या दीर्घवेणीमुसंयुता ९

ददृशेऽवस्थिता स्निग्धा कालव्यालीव मूर्धनि
तच्छ्रुत्वा रावणो वाक्यं सीतयोक्तमनिष्टुरम् १०
प्रत्याख्यातोऽपि दुर्मेधाः पुनरेवाब्रवीद्वचः
काममंगानि मे सीते दुनोति मकरध्वजः ११
न त्वा मकाम्यां सुश्रोणि समेष्वे चारुशासिनि
किं त्वशक्यं मया कर्तुं यत्त्व मद्यापि मानुषम् १२
आहारभूतमस्माकं यत्त्वं स्मरसि राघवम्
इत्युक्त्वा तामनिंद्यांगीं स राक्षसगणेश्वरः १३
तत्रैवान्तर्हितो भूत्वा जगामाभिमतां दिशम्
राक्षसीभिः परिवृता वैदेही शोककर्शिता १४
सेव्यमाना च दुःखेन तत्रैव न्यवसत्तदा
मरीचिरुवाच
कथं दाशरथी वीरौ भ्रातरौ रामलक्ष्मणौ १५
प्रस्थापितौ वन ब्रह्मन् मैथिली च तपस्विनी
पित्रा तौ सुकुमाराङ्गौ तौ वीरौ बलिनां वरौ १६
ब्रह्मोवाच
जातपुत्रो दशरथः प्रीतिमानभवत्तदा
क्रियारतिर्धर्मपरः सततं धर्मसेवितः १७
क्रमेण चास्य ते पुत्रा व्ययर्धंत महोजसः
वेदेषु च रहस्थेषु धनर्वेदस्य पारगाः १८
चरितब्रह्मचर्यास्ते कृतदाराश्च पार्थिवाः
यदा तदा दशरथः प्रीतिमानभवत्सुखी १९
रामो भरतशार्दूलो लक्ष्मणः शत्रुकर्शनः
कनीयांस्तस्य शत्रुघ्नो महाश्चलपराक्रमः २०
ज्येष्ठो रामो भवत्तेषामनुरक्ता प्रजा ययम्
मनोरमतया धीमान् पितुर्हृदयतोपणः २१
ततः स राजा मतिमान् मत्वात्मानं वयो--कम्
मंत्रयामास सचिवैर्धर्मज्ञैश्च पुंजहितैः २२
अभिषेकाय रामस्य यौवराज्येन तत्रह
प्राप्तं कालं च ते सर्वे मेनिरे मन्त्रवित्तमाः २३

श्रीरामं च महाबाहुं ह्नतमात्तंगगामिनम्
दीर्घबाहुं महोरस्कं नीलकुंचित मूर्धजम्  २४
दीप्यमानं श्रिया वीरं शक्रादप्यधिकं बले
वारगं सर्वशास्त्राणां बृहस्पतिसमं मतौ  २५
स शँनुरक्तप्रकृतिं सर्वविद्याविशारदम्
जितेन्द्रिय मयित्राणामपि दृष्टिमनोहरम्  २६
नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम्
धृत्तिमन्त मनादृष्यं जेतारमपराजितम्  २७
पुत्रं दशरथस्यापि कौशल्या नंदवर्धनम्
संदृश्य परमां प्रीतिमणप्रद्रघुनंदनः  २८
चिन्तयंश्च महातेजा गुणाम्रामास्य कीर्तिमान्
अभ्यभाषत भद्रं ते प्रीयमाणः पुरोहितम्  २९
अद्य पुष्यो निशि ब्रह्मन् पुरययोग मुपेष्यति
संभाराः संम्रियन्तांभो रामश्चैवाभिषिच्यताम्  ६०
इति तद्राजवचनं प्रतिश्रुत्याथ मंथरा
कैकेयीमां प्रगम्येदं काले वचनमब्रवीत्  ३१
अथ कैकेयि दुर्भाग्यं राज्ञा ते ख्यापितं महत्
रामराज्याभिषेकं च तवाप्रीतिकरं महत्  ३२
सुभगा खलु कौशल्या यस्याः पुत्रोऽभिषिच्यते
कुतोसि तव सौभाग्य यस्याः पुत्रो न राज्यभुक्  ३३
सा तद्वचनमाकर्म्य सर्वाभरणभूषिता
वेदी विमान मध्ये च विभ्रती रूपमुत्तमम्  ३४
विविक्ते पतिमासाद्य हसन्तीव शुचिस्मिता
प्रणयं स्त्रंजयन्तीव मधुरं वाक्यमब्रवीत्  ३५
राजन् सत्यपतिज्ञस्त्वं कामयेकं निसृष्टवान्
उपाकुरुष्व मां राजन् वर दत्तवरां वर  ३६
राजोवाच
वरं ददायि तेहं तत् गृहाणत्वं यदीच्छसि
अवध्यो वध्यतां कोत्र वध्यः कोवाप्यवध्यताम्  ३७
धनं ददामि कस्याश क्रियतां कस्य किं पुनः

ब्राह्मणेभ्यो ददाम्यत्र यत्किंचिद्वित्तमस्ति ते ३८
ब्रह्मोवाच
सा तद्वचनमाज्ञाय परिगृह्य नराधिपम्
आत्मनो बलमाहाय ततएवमुवाच ह ३९
अभिषेचनिकं तत्ते रामार्थमुपकल्पितम्
भरतस्तदवाप्नोतु वनं गच्छतु राघवः ४०
स तु राजा वचः श्रुत्वा विप्रियं दारुणोदयम्
दुःखार्तोऽसौ तदा विप्र न किंचिद्व्याजहारह ४१
ततस्तथोक्तं पितरं रामो विज्ञाय वीर्यवान्
वनं प्रतस्थे धर्मात्मा राजा सत्यो भवत्विति ४२
तमन्वगच्छल्लक्ष्मीवान् वपुष्मान् ल्लक्ष्मणस्तथा
सीता च भार्या कल्याणी वैदेही जनकात्मजा ४३
ततो वनं गते रामे राजा दशरथस्तदा
समयुज्यत देहं स्वं काले पर्यायधार्मिणि ४४
रामं तु गतमाज्ञाय राजानं च तथा गतम्
आनारय भरतं देवी कैकेयी वाक्यमब्रवीत् ४५
गतो दशरथः स्वर्गं वनस्थौ रामलक्ष्मणौ
गृहाण राज्यं विपुलं क्षेयं निहतकंटकम् ४६
तामुवाच स धर्मात्मा नृशंसं वत ते कृतम्
पतिं हत्वा कुलं चेदमुत्सन्नं धनलुब्धया ४७
अयशः पातयित्वा मे मूर्ध्नि त्वं कुलपांसनि
सकामा भव दुर्मातरित्युक्त्वा प्ररुरोदह ४८
स चारित्रविशुद्ध्यर्थं सर्वप्रकृतिसंनिधौ
अन्वयाद्भ्रातरं रामं विनिवर्तनलालसः ४९
कौशल्यां च सुमित्रां च कैकेयीं च सुदुःखितः
अग्रे प्रस्थापयामास शत्रुघ्नसहितो ययौ ५०
वशिष्ठवामदेवाभ्यां विप्रैश्चान्यैः सहस्रशः
पौरजानपदैः सार्धं रामानयनकांक्षया ५१
ददर्श चित्रकूतस्थं स रामं लक्ष्मणान्वितम्
तापसानाभयंकारं धारयंतं धनुर्धरम् ५२

उवाच प्राञ्जलिर्भूत्वा प्रणिपत्य रघूद्वहम्  ५३
शशंस मरणं राज्ञः शून्यांश्चापि च कौशलान्
 नाथ त्वं प्रतिरक्षस्व स्वराज्यमिति चोक्तवान्  ५४
तस्य तद्वचनं श्रुत्वा रामः परमदुःखितः
चकार दैवकल्पस्य पितुः स्नानोदकक्रियाम्  ५५
अब्रवीत्तं तदा रामो भरतं भ्रातृवत्सलम्
भविष्यतः पादुके मे राज्य रक्षण तत्परे  ५६
एवमस्त्विति तं प्राह भरतो भ्रातरं तदा
विसर्जितः स रामेण पितुर्वचनकारिणा
नंदीग्रामे करोद्राज्यं पुरस्कृत्यास्य पादुके  ५७
रामस्तु पुनराशंकन्पांरजानपदागमम्
प्रविवेश यथाकामं शरभंगाश्रमं प्रति  ५८
संस्तुत्य शरभंगं स दंडकारण्यमाश्रितः
नदीं गोदावरीं रम्या माश्रित्य न्यवसत्दुरा  ५९
वसतस्तस्य रामस्य ततः शूर्पणखाकृतम्
खरेणासीन्महावैरं जनस्थाननिवासिना  ६०
रक्षार्थं तापसानां च राघवो धर्मवत्सलः
चतुर्दशसहस्राणि जघान भुवि रक्षसाम्  ६१
दूपणं च खरं चैव निहत्य सुमहाबलः
चक्रे क्षेमं पुनर्धीमान् धर्मारण्यं स राघवः  ६२
हतेषु तेषु रक्षःसु ततः शूर्पणखा पुनः
ययौ निकृत्तनासाऽसौ लंकां भातृनिवेशनम्  ६३
ततो रावणमभ्येत्य राक्षसी क्रोधमूर्छिता
पपात पादयोर्भ्रातुः संशुष्मरुधिरानना  ६४
तां तथा विकृतां दृष्ट्वा रावणः क्रोधमूर्छितः
उत्पपातासनात् क्रुद्धो दंतैर्दंता ननुस्पृशन्  ६५
स्वानमात्यान् विसृज्याय विविक्ते तामुवाच ह
केनास्येवं कृता भद्र मा मस्मृत्या वमन्य च  ६६
कः शूलं तीक्ष्यमासाद्य सांगात्रे निषेवते
कः शिरस्यग्निमादाय विश्वस्तः स्वपते भृशम्  ६७

आशीविषं घोरमिमं पादेन स्पृशतीव कः
सिंहंकेसरिणं कश्चित् दंष्टायां खलु तिष्ठति ६८
इत्येवं भाषमाणस्य चेतो जज्वाल मन्युवा
खद्योतांदधतो रात्रौ वृक्षस्येव स्वरंध्रतः ६९
तस्य तत्सर्वमाचख्यौ भगिनी रामविक्रमम्
खरद्षणसंयुक्तं राक्षसानां पराभवम् ७०
स निश्चित्य ततः कृत्यं स्वसारं परितोष्य च
ऊर्ध्वमाचक्रमे राजा विधाय नगरे विधिम् ७१
त्रिकूटं समतिक्रम्य कालपर्वतप्रेव च
ददर्श मकरावासं गंभीरोदं महोदधिम् ७२
तमतीत्याथ गोकर्ण मन्वगच्छहकावनः
दयितस्थानमत्युग्रं शूलपाणेर्महात्मनः ७३
तत्राभ्यगच्छन्मारीचं पूर्वामात्यं दशाननः
पुरा रामभ--ादेव तापस समुपस्थितम् ७४
ब्रह्मोवाच
मारीचस्त्वय संभ्रान्तो दृष्ट्वा रावणमागतम्
पूजयामास सत्कारैः फलमूलादिभिस्तथा ७५
विप्रान्तमेव मासीनमुपतस्थौ स राक्षसः
उवाच प्रसृतं वाक्यं वाक्यज्ञो याक्यकोविदम् ५६
न ते प्रकृतिमान् वर्णः कश्चित्क्षेमं पुरे तव
तथात्यक्तभयाः सर्वे सेवन्ते ते यथा पुरा ७७
किमत्रागमने चैव कार्यं ते राक्षसेश्वर
कृतमित्येव तद्विद्धि यद्यपि स्यात्सुदुर्लभम् ७८
शशंस रावणस्तस्मै तत्सर्वं रामचेष्टितम्
समासेनैवकार्याणि क्रोधामर्मसमन्वितः ७९
मारीचस्त्वब्रवीच्छ्रुत्वा समासीनं च रावणम्
अलं ते राममासाद्य वीर्यज्ञो ह्यस्मितस्य वै ८०
वाणवेगं हि कस्तस्य शक्तः सोदुं महात्मनः
प्रव्रज्यायादि प्रं हेतुः स एव पुरुषर्षभः ८१
विनाशमुखमेतत्ते केनाख्यातं दुरात्मना ८२

तमुवाचाथ सक्रोधो रावणः परिभर्त्सयन्
अकुर्वंतोस्मद्वचनं स्यान्मृत्युरपि ते ध्रुवम् ८३
मारीचश्चिंतयामास विशिष्टान्मरणं ध्रुवम्
अवश्यमरणे प्राप्ते करिष्याम्यस्य यद्धितम् ८४
ततस्तं प्रत्युवाचाथ शरीचो राक्षसेश्वरम्
किं साहाय्यं मया कार्यं करिष्याम्यवशेषितम् ८५
तमब्रवीद्दशग्रीवो गच्छ सीतां प्रलोभय
रत्नशृंगो मृगो भूत्वा रत्नचित्रतनूरुहः ८६
ध्रुवं सीता समालोक्य त्वां रामं नोदयिष्यति
अपक्रान्ते च काकुत्स्थे सीता वश्या भविष्यति ८७
तामादावापनेष्यामि ततः स न भविष्यति
भार्यादि---गाद्दुर्बुद्धिस्तत्साहाय्यं कुरुष्व मे ८८
इत्येवं मुक्तो मारीचो कृतोदकमयात्मनः
रावणं पुरतो यात मन्वगच्छ त्सुदुःखितः ८९
ततस्तस्याश्रमं गत्वा रामस्याक्लिष्टकर्मणः
चक्रतुस्तौ तथा सर्वमुभौ तत्पूर्वमन्वितम् ९०
रावणस्तु ततिर्भूत्वा मुंडतुंडी त्रिदंडधृक्
मृगः सं भूत्वा मारीचस्तं देशमुपजग्मतुः ९१
दर्शयामास वैदेह्या आत्मानं मृगरूपधृक्
चोदयामास तस्यार्थे रामं वै विधिनोदिता ९२
रामस्तस्याः प्रियं कुर्वन् धनुरादाय सत्वरः
रक्षार्थं लक्ष्मणस्तस्याः प्रतस्थे मृगलिप्सया ९३
सधन्वी बद्ध तूणीर खड्गगोधांगुलीत्रवान्
अन्वधावन्मृगं रामो रुद्रस्तारामृगं यथा ९४
सोंतर्हितस्ततस्तत्र दर्शनं राक्षसो व्रजन्
चकर्ष दीर्घमध्वानं रामस्तद्बुबुधे ततः ९५
निशाचरं तं विज्ञाय राघवः प्रतिभानवान्
अमोघं शरमादाय जघान बहुरूपिणम् ९६
स रामवाणाभिहतः कृत्वा रामस्वरं ततः
हा सीते लक्ष्मणेत्येव मुक्त्वाशार्त रवरेणतत् ९७

शुश्राव तस्य वैदेही ततस्तां करुणां गिरम्
स प्रभावयतः शब्दं तामुवाचाथ लक्ष्मणः ९८
अलं ते शंकया भीरु को रामं ताडयिष्यति
मुहूर्ताद्द्रक्ष्यसे राम मागतं त्वं शुचिस्मिते ९९
इत्युक्ता साश्रवदना पर्यशंकत देवरम्
हृता वै खीस्वभावेन सच्चरित्रविभूषणा १००
सा तं पुरुषमारब्धा वक्तुं साध्वी प्रतिव्रता
नैष कालो भवेन्मूढ यत्त्वं प्रार्थयसे हृदा १०१
अप्यहं शस्त्रमादाय हन्यामात्मान मात्मना
पतेयं गिरिश्रंगाद्वा विशेयं वा हुताशनम् १०२
रामभर्तार भुत्सृज्य न त्वहं त्वां कथं चन
तथैवमुपतिष्ठेयं शार्दूली क्रोष्टुकं यथा १०३
एतादृशं वचः श्रुत्वा लक्ष्मणः प्रिय राघवः
साश्रुकंठस्तु सु ष्टुत्तः प्रतस्थे राघवं प्रति १०४
स रामस्य पदं लब्ध्वा प्रससार धनुर्धरः
एतस्मिन्नंतरे रक्षो रावणः प्रत्यदृश्यत १०५
अभव्यो भव्यरूपेण प्रतिच्छन्न इवानलः
प्रविवेश प्रतिच्छन्नो जिहीर्षुस्तामनिन्दिताम् १०६
सा तमालक्ष्य संप्राप्तं धर्मज्ञा जनकात्मजा
निमन्त्रयामास तदा फलमूलाशनादिभिः १०७
अवमन्यत तत्सर्वं स्वरूपं प्रत्यपद्यत
सान्त्वयामास वैदेही मिति राक्षसपुंगवः १०८
सीते राक्षसराजोऽहं रावणो नाम राक्षसः
यम लंकापुरी नाम्ना रम्या तीरे महोदधेः १०९
तत्र त्वं वरनारीभिः शोभमाना मया सह
भार्या मे भव सुश्रोणि तापसं त्यज राघवम् ११०
एवमाद्यानि वाक्यानि श्रुत्वा सीता च जानकी
पिधाय कर्णौ सुश्रोणी मैवमित्यब्रवीद्वचः १११
पपात द्यौः सनक्षत्रा पृथ्वी चेच्छकला भवेत्
शैत्यमग्निर्भजेन्नाहं त्यजेयं रघुनंदनम् ११२

कथं हि भिन्नकटकं संप्राप्तं वनगोचरम्
उपस्थाय महानागं करेणुः सूकरं व्रजेत् ११३
कथं च पीत्वा माध्वीकं सुस्वाद्यं मधुमाधवम्
लोभं मैरेयके कुर्यात् नारी काचिदपिस्मरेत् ११४
इति सा तं समाभाष्य प्रविवेशाश्रमं पुनः
तामनुद्रुत्य सुश्रोणीं रावणः प्रत्यवोचत ११५
भर्त्सयित्वा तु कोपेन स्वरेण गतचेतनाम्
मूर्धजेषु निजप्राह तामुपाचक्रमे ततः ११६
तां ददर्श तदा गृध्रो जटायुर्वनगोचरः
रुदंतीं रामरामेति ह्रीयमाणां तपस्विनीम् ११७
विक्लिन्नवदनां दीनां साश्रुनेत्रां सगद्गदाम्
मुक्तकंठां प्ररुदतीं मुक्तकेशां च मामिनीम् ११८
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ रामचरिते द्वात्रिंशत्तमोऽध्यायः

## अध्याय ३३

ब्रह्मोवाच
एतच्छ्रुत्वा च सक्रोधो जटायुर्गतविक्लवः
सखा दशरथस्यासौ खगेन्द्रो ह्यरुणात्मजः १
जटायुर्गृध्रराजो वै संपातिर्यस्य सोदरः
क्रोधादपाद्रवत्पक्षी रावणं राक्षसेश्वरम् २
अथैनमब्रवीत्क्षुद्रं युंचमुंचेति मैथिलीम्
विद्यमाने मयि कथं हरिष्यसि निशाचर ३
न हि मे मोक्ष्यसे रक्षः यदि नोत्सृजसे वधूम्
उक्त्वैवं राक्षसेन्द्रं च चकर्त नखजैर्भृशम् ४
पक्षतुंडप्रहारेण बहुशो जर्जरीकृतम्
चकार रुधिरं भूरि गिरिप्रस्रवणै रिव ५
स वध्यमानो गृध्रेण रामप्रियहितैषिणा
खड्गमादाय चिच्छेद रावणस्तच्छिरो बलात् ६
निहत्य गृध्रराजं रा छिन्ना द्रिशिखरोपमम्
ऊर्ध्व मप्याक्रमत् सीतां प्रगृह्यां केन राक्षसः ७

यत्र यत्र नु वैदेही पश्यत्याश्रममंडलम्
सरांसि सरितो वापि तत्र मुंचति भूपणम् ८
सा ददर्श गिरिपृष्ठे पंच वामर पुंगवान्
तत्र वासो महद्दिव्यमुत्ससर्ज मनस्विनी ९
तत्तेषां वानरेन्द्राणां पपात पवनोद्धतम्
मध्ये सुवीतं पंचानां विद्युन्मेघान्तरे यथा १०
एवं हृद्मयां सीतायां रामो हत्वा महा मृगम्
न्यवतंत वनोद्देशे भ्रातरं लक्ष्मणं तदा ११
कथमुत्सृज्य वैदेहीं वने राक्षस सेविते
प्राप्तोऽसि भ्रातरं दृष्ट्वा बहुशो स व्यगर्हमत् १२
मृगरूपधरेणाथ रक्षसा सोपकर्षणम्
भ्रातु रागमनं चैव चिंतयन् पयं तप्यत १३
गर्हयन्नेव रामस्तु त्वरितं तत्समासदत्
अयि जीवति वैदेही नेति पश्यामि लक्ष्मण १४
तस्य तत्सर्वप्राचख्यौ सीताया लक्ष्मणो वच
यदुक्तवत्यसदृशं वैदेही परुषं वचः १५
दरुमानेन तु हृदा रामोऽभ्यापतदाश्रमम्
स ददर्श तदा मृध्रं विहतं पर्वतोपमम् १६
राक्षसं शंकमातस्तं प्रगृह्य सशरं धनुः
अभ्यधावत काकुत्स्थस्ततस्तं सहलक्ष्मणः १७
स तावृवाचि तेजस्वी निहतो रामलक्ष्मणौ
वृध्रराजोऽस्मि भद्रं वां सखा दशरथस्य च १८
संहृत्य धनुषी शुभ्रे श्रुत्वा तद्वचनं शुभम्
फोयं पितरमस्माकं संस्मरत्यूचतुः स्मृतौ १९
ततो ददृशतुस्तं वै छिन्नपक्षद्वयं तथा
द्वयोः शशंस गृध्रस्तु सीतार्थे रावणाद्वधम् २०
अपृच्छद्राघवो गृध्रं रावणः कां दिशं गतः
एवंगृध्रः शिरःकम्पै राचचक्ष ममार च २१
तस्य सर्वं विधायाथ सदुःखं पितृवत्तदा
दक्षिणां दिशमापेदे राघवः सह लक्ष्मणः २२

सत्कारं लंभयन्नाशु सखायं पूजयन्पितुः
दुःखशोकसमाविष्टौ राघवा वतिविहलौ २३
सीताहरणदुःखार्ता वेवं सख्यमवापतुः
तेभ्यः सीतोपदेशं च प्राप्तोदधिमगात्ततः २४
संमील्य प्लवगेन्द्राणां यूथानि च सहस्रशः २५
एतत्ते सर्वमाख्यातं सुग्रीवेण समं च यत्
रामलक्ष्मणयोः सख्यं हत्वा बालिन माहवे २६
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ श्रीरामचरितं नाम त्रयस्त्रिंशोऽध्यायः

## अध्याय ३४

ब्रह्मोवाच
ततो दाशरथिः श्रीमान् सुग्रीवं प्रत्यभाषत
मध्ये वानरमुख्यानां प्राप्तकालमिदं वचः १
उपायः कोनु भवता प्राप्तः सागरलंघने
इयं हि महर्ता सेना सागरश्चापि दुस्तरः २
तत्रान्ये प्याहरन्ति स्म वानरा बहुमानिनः
समर्था लंघने सिन्धो स्तर्तुं कृत्स्नं च सागरम् ३
केचिन्नौभिर्व्यवस्यन्ति केचिच्च विविधैस्तरैः
नेति रामश्च तान्सर्वान् सान्त्वयन् प्रत्यभाषत ४
शतयोजनविस्तारं न शक्ताः सर्ववानराः
क्रमितुं सागरं वीरा नैषा वोनैष्ठिकी मतिः ५
नावो न सन्ति सेनाया वह्वस्तारयितुं क्षमाः
विविधाश्च तथा पोताः कथमस्मद्विध स्मरेत् ६
विस्तीर्णसैन्यमेतन्नो हन्याच्छिद्रेषु चापरः
प्लवो दूरप्रचारे च नैवात्र मम रोचते ७
अहं त्विमं जलनिधिं वशीकर्तुं प्रयत्नतः
समारप्स्ये सुखेनैव स मार्गं दर्शयिष्यति ८
न चेद्दर्शयिता मार्गं धक्ष्याम्येनमहं ततः
महास्त्रैरप्रतिहतैरत्यग्निपवनोपमैः ९
इत्युक्त्वा वै स सौमित्रिरयः स्पृष्ट्वाऽथ राघवः

शोषयिष्ये जलनिधिं विधिं चक्रे च संस्तरे १०
सागरस्तु ततः स्वप्ने दर्शयामास राघवम्
देवो नदनदी भर्ता श्रीमान्यादो गणैर्वृतः ११
कौशल्या मातरित्येव माभाष्य मधुरं वचः
इदमित्याह रत्नानामाकरैः शतशो वृतः १२
ब्रूहि किं ते करोम्यद्य साहाय्यं पुरुषर्षभ
इक्ष्वाकुरस्मि ते ज्ञातिरितिरामस्तदाब्रवीत् १३
मार्गमिच्छामि सैन्यस्य दत्तं नदनदीपते
येन गत्वा दशग्रीवं हन्यां पौलस्त्यपांसनम् १४
यद्येवं याचितो मार्गं न प्रदास्यसि मे भवान्
शरैस्त्वां शोषयिष्यामि दिव्यास्त्र प्रतिमंत्रितैः १५
इत्येवं वचनं श्रुत्वा रामस्य वरुणालयः
उवाच व्यथितो वाक्यमिति बद्धांजलिः स्थितः १६
नेच्छामि प्रतिघातेन नास्मि विघ्नकरस्तव
शृणु चेदं वचो राम श्रुत्वा कर्तव्यमाचर १७
यदि दास्यामि ते मार्गं सैन्यस्य व्रज ताज्ञया
अन्येऽप्याज्ञापयिष्यन्ति मामेवं धनुषो बलात् १८
अस्त्यत्र तु नलो नाम वानरः शिल्पिसंमतः
त्वष्टुर्देवस्य तनयो बलवान् विश्वकर्मणः १९
स यत्काष्ठं तृणं वापि शिलां वा क्षेपयेन्मयि
सर्वं तद्धारयिष्यामि स ते सेतुर्भविष्यति २०
इत्युक्त्वांतर्हित तत्र रामो नलमुवाच ह
कुरु सेतुं समुद्रे त्वं शक्तो ह्यसि मतो मम २१
तेनोपायेन काकुत्स्थः सेतु बन्धमकारयत्
दशयोजनविस्तार मायतं शतयोजनम् २२
नलसेतुरिति ख्यातो योद्यापि प्रथितो भुवि
रामस्याज्ञां पुरस्कृत्य कृतो वै गिरिसंनिभः २३
तत्रस्थस्य तु धर्मात्मा समागच्छद्विभीषणः
भ्राता राक्षसराजस्य चतुर्भिः सचिवैर्वृतः २४
प्रतिजग्राह रामस्तं स्वागतेनातिरंहसा

सुग्रीवस्य विशंकाऽभूत्प्रणिधिः स्यादयं द्विजः २५
राघवस्तस्य चेष्टाभिः सम्यक्वचिदिततीङ्गतैः
तदासान्तेन तुष्टोऽभूत्तत एनमपूजयत् २६
सर्वराक्षस राज्ये च व्यभ्यर्षिंचद्विभीषणम्
चक्रे च बुद्धिसचिवं सुहृदं लक्ष्मणस्य च २७
बिभीषणमतेनैव लङ्घयामास सागरम्
तत्सैन्यं सेतुना तेन मासेनैव नराधिपः २८
ततः गत्वा समासाद्य लंकोद्यानान्यनेकशः
भेदयामास कपिभिर्महान्ति च बहूनि च २९
तत्रास्तां रावणामात्यौ राक्षसौ शुकसारणौ
वीरौ वानररूपेण तौ जग्राह बिभीषणः ३०
प्रतिपन्नौ यदा रूपं राक्षसं तौ निशाचरौ
दर्शयित्वा ततः सैन्यं रामः पश्चादवासृजत् ३१
निवेश्योपवने सैन्यं तच्छूरं प्राज्ञवानरम्
प्रेषयामास दौत्येन रावणस्य ततोंऽगदम् ३२
ब्रह्मोवाच
प्रभूतान्नोदके तत्र बहुमूलफले वने
सेनां निवेश्य काकुत्स्थो विधिवत्पर्यरक्षत ३३
रावणश्च विधिं चक्रे लंकायां शस्त्र निर्मितम्
या प्रकृत्यैव दुर्धर्षा दृढप्राकारतोरणा ३४
अगाध तोया परिखा मीननक्रसमाकुला
बभूव सातिदुर्धर्षा शंकुभिः खादिरैश्चिता ३५
कपाटयंत्रदुर्धर्षा रावणेनाभिरक्षिता
साशीविषसमायोधाः ससर्ज विषमुल्बणम् ३६
मुशलाततनाराचतोमरासिपरश्वधैः
अन्विता च शतघ्नीभिः प्रभूतमुद्गरादिभिः ३७
परद्वारेषु सर्वेषु गुल्माः स्थावरजंगमाः
बभूवुर्बहुला लापाः प्रभूत गजवाजिनाम् ३८
इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ श्रीरामचरितनाम चतुस्त्रिंशत्तमोऽध्यायः

## अध्याय ३५

ब्रह्मोवाच
अंगदस्त्वथ लंकाया द्वारदेशमुपागतः
विदितो राक्षसेन्द्रेण प्रविवेश गतव्यथः १
मध्ये राक्षसकोटीनां बह्वीनां सुमहाबलः
शुशुभे मेघमालाभिरादित्य इव संवृतः २
स समासाद्य पौलस्त्यममात्यैः परिवारितम्
रामसंदेशमामन्त्र्य वाग्मी वक्तुं प्रचक्रमे ३
अहं त्वां राघवो राजन् कोशलेन्द्रो महायशाः
प्राप्तकालामिदं वक्यं वदतस्त्वं शृणुष्व मे ४
त्वयैकेनापराधेन सीता माहरता वनात्
वधाया नपराधाना मन्येषां तद्भविष्यति ५
ये त्वया बलदर्पाभ्यां विद्यमाना वनेचराः
ऋषयो हिंसिताः पूर्वं देवाश्चाप्यवमानिताः ६
राजर्षयश्च निहता रुदन्त्यश्च धृतास्त्रियः
अनित्याः समनुप्राप्तः कालस्तस्या नयस्यते ७
हन्तास्मि त्वां सहामात्यं युध्यस्व पुरुषोधम
पश्य मे धनुषो विर्यं मानुषस्य निशाचर ८
मुच्यतां जानकी सीता न चेन्मोक्ष्यसि कर्हिचित्
अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः ९
इति तस्य ब्रुवाणस्य दूतस्य परुषं वचः
श्रुत्वा न ममृषे राजा रावणः क्रोधमूर्छितः १०
इङ्गितज्ञा स्ततो भर्तुश्चतुरो रजनीचराः
चतुर्ष्वंगेषु जगृहुः शार्दूलमिव पक्षिणः ११
तां स्तथांगेषु संसक्ता नंगदो रजनीचरान्
आदायैव समुत्पत्य प्रासादतल माविशत् १२
वेगेनोत्पततस्तस्य पेतुस्ते रजनीचराः
भुवि संभिन्नहृदयाः प्रहार वरपीडिताः १३
समुक्तोहर्म्यशिखरात्तस्मात्पुनरवापतत्
लंघयित्वा पुरीं रम्यां स्वबलस्य समीपतः १४

कोशलेन्द्रमथाभ्येत्य खर्बशाख इतां गदः
विशश्रामाथ तेजस्वी राघवेणाभिनन्दितः १५
ततः सर्वाभिसारेण हरीणां वातरंहसा
भेदयामास लंकाया प्राकारं रघुनंदनः १६
बिभीषणं दैत्यपतिं पुरस्कृत्याथ लक्ष्मणः
दक्षिणं नगरद्वारं न्यरुणच्च दुरासदम् १७
करभारुणप्रातं च हरीणां युद्धशालिनाम्
कोटीशतसहस्राणि लंकामभ्यपतंस्तदा १८
उत्पतद्भिः पतद्भिश्च निपतद्भिश्च वानरैः
प्राकारं ददृशुस्तेऽस्म समंतात्कपिशी कृतम् १९
राक्षसा विस्मिता विद्वन् सस्त्रीवृद्धाः समंततः
बिभिदुस्ते मणिस्तंभान् कर्णाटशिखराणि च २०
भग्नोन्मथितवेगानि यंत्राणि च विचिक्षिपुः
परिगृह्य शतघ्नांश्च सुचक्रमुद्गरोपलान् २१
चिक्षिपुर्भुजवेगेन लंकामध्ये वनेचराः २२
प्राकारस्थाश्च ये केचिन्निशाचरगणास्तदा
दुद्रुवुस्तेऽपि शतशः कपिभिः समभिद्रुताः २३
ततस्ते राजवचनाद्राक्षसाः कामरूपिणः
निर्ययुर्विकृताकाराः सहस्रशतसंघशः २४
शस्त्रवर्षाणि वर्षन्तो द्रावयन्तो वतौकसः
प्राकारं शोभयन्तस्ते परं विक्राणास्थिताः २५
स मांसराशिसदृशैर्बभूव क्षणदाचरैः
ततो निर्वानरो भूयः प्राकारो भीमदर्शनैः २६
पेतुः शरविभिन्नांगा बहवोवानरर्षभाः
स्तंभभारेण भग्नाश्च पेतुस्तत्र वनेचराः २७
केशाकेश्यभवद्युद्धं रक्षसां वानरैः सह
नखदंतैश्च वीराणां खादतां वै परस्परम् २८
निःस्वनन्तोऽप्युभयत स्तत्र वानरराक्षसाः
हता निपतिता भूमौ न मुंञ्चंति परस्परम् २९
रामस्तु शरजालानि ववर्ष जलदो यथा

तानि लंकां समासाद्य जघ्नुस्तान् रजनीचरान्  ३०
सौमित्रिरपि नाराचै दृढधन्वा गतक्लमः
आदिश्यादिश्य दुर्गस्थान् पातयामास राक्षसान्  ३१
ततः प्रत्यवहारोऽभूत्सैन्यानां राघवाज्ञया
कृतेमावर्द लंकायां लब्धलक्षो जयोत्तरः  ३२
ब्रह्मोवाच
ततो निवेश्यमानांस्तान् सैनिकान् रावणानुगाः
रुजश्च प्ररुजश्चैव प्रधसश्चैवमादयः  ३३
ततोऽमिपततां तेषा मदृश्यानां महौजसाम्
अंतर्द्धानवधं तज्ज्ञ श्चकार स विभीषणः  ३४
ते दृश्यमाना हरिभिर्बलिभिर्जितकासिभिः
निहताः सर्वशो ब्रह्मन् अहीं जग्मुर्निशाचराः  ३५
अमृष्यमाणः सबलो निर्ययावथ रावणः
राक्षसानां गणैर्घोरैः पिशाचानां च संवृतः  ३६
युद्धशास्त्रविधानज्ञ उशना इव चापरः
व्यूहंचोशनसं कृत्वा हरीन्सर्वा न घातयत्  ३७
राघवस्त्वभिनिर्याति व्यूढानीके दशानने
बार्हस्पत्यविधिं कृत्वा रचयश्च निशाचरम्  ३८
तमेत्य युयुधे तत्र ततो रामेण रावणः  ३९
इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ श्रीरामचरितनाम पंचत्रिंशोऽध्यायः

## अध्याय ३६

ब्रह्मोवाच
युयुधे लक्ष्मणश्चाथ तथैवेन्द्रजिता सह
विरूपाक्षेण सुग्रीवस्तारेण च निखर्बदः  १
क्रुंडे न च नलस्तत्र षडन्नः पलसेन च
विसह्यं यो हि यं मेने स समेन समेयिवान्  २
युयुधे युद्धवेलायां स्वबाहुवलमाश्रितः
समंप्रहारो ववृधे भीरूणां भयवर्धनः  ३
लोमसंहर्षणो घोरो पुरा देवासुरे यथा  ४

रावणो राममानर्च्छ शूलशक्तिपरश्वधैः
निशितैरायसैस्तीक्ष्णैः रावणं चापि राघवः ५
तथैवेन्द्रजितं चापि लक्ष्मणो मर्मभेदिभिः
इन्द्रजिच्चापि सौमित्रिं बिभेद दशभिः शरैः ६
बिभीषणः प्रहस्तं च प्रहस्तश्च बिभीषणम्
खगपत्रैः शरैस्तीक्ष्णैरभ्यवर्षनुनव्यथः ७
तेषां बलवता मासीन्महास्त्राणां समागमः
विव्यथे सकलो येन लोको हि सचराचरः ८
ब्रह्मोवाच
ततः प्रहस्तस्तरसा सममेत्य बिभीषणम्
गदया ताडयामास विनद्य रणदुर्मदः ९
स तदाभिहतो धीमान् गदया तिसुवेगया
नाकंपत महाबाहुर्हिमवानिव सुस्थितः १०
ततः प्रगृह्य विकटां शतघंटां बिभीषणः
अनुमंत्र्य महाशक्तिं चिक्षेपास्य शिरः प्रति ११
पतन्त्या स तया वेगात् राक्षसोऽशनिनादया
हतोत्तमांगो ददृशे वातभग्न इव द्रुमः १२
तं दृष्ट्वा निहतं संख्ये प्रहस्तं क्षणदाचरम्
अभिदुद्राव धूम्राक्षो वेगेन महता नदन् १३
तस्य वेगोपमं सैन्यं सोपतद्भीमदर्शनम्
दृष्ट्वैव सहसा दीर्णा रणे वानरपुंगवाः
निवार्य कपिशार्दूलो हनुमान्पर्यवस्थितः १४
तंदृष्ट्वा वै स्थितं संख्ये हरयः पवनात्मजम्
वेगेन महता राजन्नभ्यवर्तंत सर्वशः १५
ततः शब्दो महानासी त्तुमुलो रोमहर्षणः
रामरावणसैन्याना मन्योन्य मभिधावताम् १६
तस्मिन्प्रवर्तिते संख्ये घोरे रुधिरकर्दमे
धूम्राक्षः कपि सैन्यंत द्भावयामास पत्रिभिः १७
तं राक्षसमहामात्र मापतन्तं सपत्नजित्
तरसा प्रतिजग्राह हनुमान् मारुतात्मजः १८

तयोः समभवद्युद्धं हरीराक्षसवीरयोः
विजिगीष्वोर्यथाऽन्योऽन्यमिन्द्रप्रह्लादयो रिव १९
गदाभिः परिघैश्चैव राक्षसो जघ्निवान् कपिम्
कपिश्च कघ्निवान् रक्षः सस्कंधविटपैर्द्रुमैः २०
ततस्त मद्रिप्रतिमं साश्वं सरथसारथिम्
धूम्राक्षं मवधीद् ब्रह्मन् हनुमान् मारुतात्मजः २१
ततस्तं निहतं दृष्ट्वा धूम्राक्षं राक्षसात्मजम्
हरयो जातविश्रंभा जघ्नुरभ्येत्य सैनिकान् २२
ते वध्यमाना बलिभिर्हरिभिर्जितकाशिभिः
राक्षसा भग्नसंकल्पा जघ्नुरम्येत्य सैनिकान् २३
अभिपत्य पुरं भग्ना हतशेषा निशाचराः
सर्वं राज्ञे यथावृत्तं रावणाय न्यवेदयत् २४
श्रुत्वा च रावणस्तेभ्यः प्रहस्तं निहतं युधि
धूम्राक्षं च महेष्वासं सहसैन्यं वनेचरैः २५
सुदीर्घमिव निःश्वस्य समुत्प्लुत्य वरासनात्
उवाच कुम्भकर्णस्य कर्मकालोऽयमागतः २६
इत्येव मुक्त्वा विविधैर्वादित्रैः सुमहास्वनैः
शयानमतिनिद्रालुं कुम्भकर्ण मबोधयत् २७
प्रबोध्य महता चैनं यत्नेन गतसाहसः
स्वस्थमासीन मव्यग्र मनिद्रं राक्षसाधिपः २८
ततो ब्रवीद्दशग्रीवः कुम्भकर्णं महाबलम्
धन्योसि यस्य ते निद्रा कुम्भकर्णेयमीदृशी २९
य इमं दारुणं कालं न जानाति महाभयम् ३०
एष तीर्त्वार्णवं रामः सेतुना हरिभिः सहः
अवमत्येह नः सर्वा नकरोत्कदनं महत् ३१
मयाऽस्योपहता भार्या सीतानामास्य जानकी
तां मोचयिष्णु रायातो बध्वासेतुं महार्णवे ३२
युद्धकामो महाबाहुः प्लवगैः सह राघवः
तस्य नान्यो निहन्तार स्त्वदृते शत्रुकर्शन ३३
सुदंशितो विनिर्याय बलेन बलिनांवर

रामादीन् समरे शत्रून् सर्वान्जह्यरिमर्दन  ३४
दूषणावरजौ वापि वज्रवेगप्रमाथिनौ
तौ वो बलेन महता सहितावनुयास्यतः  ३५
उक्त्वा रक्षःपति काले कुंभकर्णं तरस्विनम्
संदिदेशे तिकर्तव्यं वज्रवेगप्रमाथिनौ  ३६
तथेत्युक्त्वा तु तौ वीरौ रावणं दूषणानुजौ
कुंभकर्णं पुरस्कृत्य तूर्णं निर्ययतुः पुरात्  ३७
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ श्रीरामचरितनाम षट्त्रिंशोऽध्यायः

## अध्याय  ३७

ब्रह्मोवाच
ततो विनिर्याय पुरान् कुंभकर्णो महाबलः
अपश्यत्कपिसैन्यं तल्लंकायाः सन्मुखं स्थितम्  १
स वीक्षमाणस्तत्सैन्यं रामदर्शनकांक्षया
रक्षोऽपश्यच्च सौमित्रिं धनुष्पाणिमवस्थितम्  २
तमभ्येत्याथ हरये परिक्रम्य समंततः
अभ्यघ्नन्स महाकाम्यैर्बहुभिर्जगतीसहैः  ३
करजैश्च रदैश्चापि युयुधे रणदुर्मदः
बहुधा युध्यमानास्ते युद्धमार्गे विशारदाः  ४
नानाप्रहरणेन्द्रैश्च राक्षसं तमताडयन्
स ताड्यमानः प्रहसन् भ्रामयामास वानरान्  ५
वनचंडं वनाक्षं च वेत्रबाहुं च वानरम्
तद्दृष्ट्वा व्यथनं कर्म कुंभकर्णस्य रक्षसः  ६
उदाक्रोश न्परित्रस्ता स्तारप्रभृतय स्ततः
सतारमुश्चैः क्रोशन्त मन्यांश्च हरिपुंगवान्  ७
अभिदुद्राव सुग्रीवः कुम्भकर्ण मपेतभीः
ततो निपेत्य वेगेन कुंभकर्णं महामनाः  ८
शालेन जघ्निवान् मूर्ध्नि बलेन कपिकुंजरः
स महात्मा महावेगः कुंभकर्णस्य मूर्धनि  ९
बिभेद शालं सुग्रीवो न चैव व्यचलद्रिपुः

ततो विनद्य प्रहसन् शालस्पर्शाविबोधितः १०
दोर्भ्यामादाय सुग्रीवं कुंभकर्णोऽहरद्बलात्
ह्रीयमाणं तु सुग्रीवं दृष्ट्वा वायुसुतो बली ११
गच्छन् संशोधयामास प्रहारेणाल्पचेतसम्
ततः स लब्धसंज्ञस्तु हत्वा कर्णोष्ठ नासिकाम् १२
सुग्रीवः कुंभकर्णस्य जगाम हरिवाहिनीम्
अथ क्रुद्धः कुंभकर्णो मिश्रितान् हरिराक्षसान् १३
भक्षयामास बलवान् न्यगृह्णात् पादयोरपि
भक्ष्यमाणान् हरीन् सर्वान् कुंभकर्णेन रक्षसा १४
अभ्यवेक्ष्याद्रवद्वीरः सौमित्रिर्मित्रनंदनः
सोऽमिपत्य महावेगं रुक्मपुङ्खं महाशरम् १५
प्राहिणोत् कुंभकर्णाय लक्ष्मणः परवीरहा
स तस्य देहावरणं भित्वा देहं च सायकः १६
जगाम दारयन् भूमिं रूधिरेन समुक्षितः
स तथा भिन्नहृदयः समुत्सृज्य कपीश्वरान् १७
कुंभकर्णो महेष्वासः प्रगृह्य च शिलायुधं
अभिदुद्राव सौमित्रिमुद्यम्य महतीं शिलाम् १८
तस्याभिद्रवतस्तूर्णं क्षुराभ्यामुच्छ्रितौ भुजौ
चिच्छेद निशिताग्राभ्यां सव भूव चतुर्भुजः १९
तानप्यस्य भुजा न्सर्वान् प्रगृहीतशिलायुधान्
शरैश्चिच्छेदसौमित्रिर्लब्ध्वस्त्रं प्रति दर्शयन् २०
स बभूवातिकायश्च बहुपादशिरोभुजः
तं ब्रह्मास्त्रेण सौमित्रिर्ददाहाद्रिचयोपमम् २१
स पपात महावीर्यो दिव्यास्त्राभिहतो रणे
महानशनिनिर्दग्धः पादपोंऽकुर वेष्टितः २२
तं दृष्ट्वा वृत्रसंकाशं कुंभकर्णं तरस्विनम्
गतासुं पतितं भूमौ राक्षसाः प्राद्रवन् भयात् २३
ततस्तान् द्रवतो योधान् दृष्ट्वा तौ दूषणानुजौ
अवस्थाप्याथ सौमित्रिं संक्रुद्धावभ्यधावताम् २४
तौ विद्रवन्तौ संक्रुद्धौ वज्रवेगप्रमाथिनौ

प्रतिजग्राह सौमित्रिः कृतोद्योगः पतत्रिभिः २५
ततः सुतुमुलं युद्ध मभव ल्लोमहर्षणम्
दूषणानुजयोर्विप्र लक्ष्मणस्य च धन्विनः २६
महता शरवर्षेण राक्षसौ सोऽभिवर्षति
तौ चापि वीरौ सक्रोधा वुभौ समभिवर्षतम् २७
मुहूर्तमेकमभवद्वज्रवेगप्रमाथिनोः
सौमित्रेश्च महाबाहोः संप्रहारः सुदारुणः २८
अथाद्रिशृंग मादाय हनुमान् मारुतात्मजः
अभिद्रुत्याददे प्राणान् वज्रवेगस्य रक्षसः २९
नीलश्च महता ग्राव्णा दूषणावरजं हरिः
प्रमाथिनमभिद्रुत्य प्रममाथ महाबलः ३०
ततः प्रावर्तत पुनः स ग्रामः कटुकोदयः
रामरावणसैन्यानामन्योन्य मभिधावताम् ३१
शतशो नैर्ऋता वन्यान् जघ्नुर्वन्याश्च नैर्ऋतान्
नैर्ऋतास्तत्र वध्यन्ते प्रायशो न तु वानराः ३२
ब्रह्मोवाच
ततः श्रुत्वा हतं संख्ये कुंभकर्णं महाबलम्
प्रहस्तं च महेष्वासं धूम्राक्षं चाग्नितेजसम् ३३
पुत्रमिन्द्रजितं शूरं रावणः प्रत्यभाषत
जहि राममित्रघ्नं सुग्रीवं च सलक्ष्मणम् ३४
त्वया हि मम सत्पुत्र यशो दीप्तमुपार्जितम्
जित्वा संख्ये वज्रधरं सहस्राक्षं शचीपतिम् ३५
अंतर्हितप्रकाशो वा दिव्यैर्दत्तवरैः शरैः
जहि शत्रुममित्रघ्नं मम शस्त्रभृतांवर ३६
रामलक्ष्मणसुग्रीवाः शरस्पर्शं न तेऽनघ
समर्थाः प्रति संसोढुं कुतस्तदनुयायिनः ३७
अक्षतता प्रहस्तेन कुंभकर्णेन वानघ
वैरस्यापचितिः संख्ये तां गच्छत्वं महाभुज ३८
त्वमद्यनिशितैर्बाणैर्हत्वा शत्रून् ससैनिकान्
प्रतिनंदय मां पुत्र पुरा बध्वेव वासवम् ३९

इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ श्रीरामचरितं नाम सप्तत्रिंशोऽध्यायः

## अध्याय ३८

ब्रह्मोवाच
प्रययाविंद्रजित्तूर्णं क्षिप्रमायोधनं प्रति
रावणे श्रावयत्येव स्पष्टं राक्षसपुंगवे १
आह्वयत् समरे तत्र लक्ष्मणं शुभलक्षणम्
तं लक्ष्मणोऽप्य भ्यधावत् प्रगृह्य सशरं धनुः २
त्रासयं स्तलघोषेण सिंहः क्षुद्रमृगं यथा
तयोः समभवद्युद्धं सुमहज्जयमिच्छतोः ३
दिव्यास्त्रविदुषोस्तीव्रमन्योन्यस्पर्धिनोस्तदा
रावणस्तु तदा तैर्न विशेषयति सायकैः ४
ततो गुरुतरं यस्त मतिष्ठद्बलिनां वरः
तत एनं महावेगैरर्दयामास तोमरैः ५
तानागतान् सचिच्छेद सौमित्रिर्निशितैः शरैः
ते निकृत्ताः शरैस्तीक्ष्णैरपतन् वसुधातले ६
तमंगदो बालिसुतः श्रीमानुद्यम्य पादपम्
अभिद्रुत्य महावेग स्ताडयामास मूर्धनि ७
तस्येंद्रजिदसंभ्रान्तः प्रासेनोरसि वीर्यवान्
प्रहतुमैच्छत्तं तस्य प्रासंचिच्छेदलक्ष्मणः ८
तमभ्यासगतं वीरमंगदं रावणात्मजः
गदयाऽताडयत् सव्ये पार्श्वे वानरपुंगवम् ९
तमचिंत्यप्रहारं च बलवान् वालिनः सुतः
स राजेन्द्रजितं क्रोधात् शालस्कंधममित्रजित् १०
सोंगदेन रुषोत्सृष्टो वधायेन्द्रजितस्ततः
जघानेन्द्रजितो वत्स रथं साश्वं समारथिम् ११
ततो हताश्वात्प्रस्कंद्य रथात् स हतसारथिः
तत्रैवान्तर्दधे राजन् मायया रावणात्मजः १२
अंतर्हितं विदित्वा तं मुहुर्मायंसराक्षसम्
रामस्तंदेश मासाद्य तत्सैन्यं पर्यरक्षतु १३

स राममुद्दिश्य शरैस्ततो दत्तवरैस्तदा
योधयाप्रासतुरुभौ रावणं रामलक्ष्मणौ १४
म रुषा सर्वगात्रेषु तयोः पुरुषसिंहयोः
व्यसृजत् सायकान् भूयः शतशोऽथ सहस्रशः १५
तमदृश्यं विचिन्वन्तः सृजन्त मनिशं शरान्
हरयो विविशुर्व्योम प्रगृह्य महतीः शिलाः १६
तांश्च तौचाप्यदृश्यः स शरैर्विव्याध राक्षसः
सुग्रीवं पीडयन् वीरो रावणिर्मायया वृतः १७
तौ शरैराचितौ शूरौ भ्रातरौ रामलक्ष्मणौ
पेततुर्गमनाद्भूमौ सूर्याचन्द्रमसौरिव १८
ब्रह्मोवाच
तावुभौ पतितौ दृष्ट्वा भ्रातरौ विस्मितौजसौ
ववन्ध रावणिर्भूयः शरैर्दत्तवरैस्तथा १९
तौ वीरौ शरजालेन बद्धाविन्द्रजिता रणे
रेजतुः पुरुषव्याघ्रौ शकुन्ताविव पंजरे २०
तौ दृष्ट्वा पतितौ भूमौ शतशः सायकैश्चितौ
सुग्रीवः कपिभिः सार्द्धं परिवार्य व्यतिष्ठत २१
सुषेणमैन्यद्विविदैः कुमुदेनांङ्गदेन च
हनुमन्नीलतारैश्च नलेन च हरीश्वरः २२
ततः समीरवचनात् रामध्यातः खगेश्वरः
आरात्यामोचयद्वीरौ सर्पबन्धात्सुदारुणात् २३
तास्तं देशमागत्य कृतकर्मा बिभीषणः
बोधयामास तौ वीरौ प्रज्ञास्त्रेण विमोहितौ २४
विशल्यया महौषध्या दिव्यास्त्रपतिमुक्तया
तौ लब्धसंज्ञौ नृवरौ विसंज्ञावुदतिष्ठताम् २५
गततंद्राक्लमौ चास्तां क्षणेनोभौ महारथौ
ततो बिभीषणो विद्वन् राममिक्ष्वाकुनंदनम् २६
उवाच विज्वरं दृष्ट्वा कृतांजलिरिदं वचः
इदमम्भो गृहीत्वा तु राजराजस्य शासनात् २७
गुह्यकोऽभ्यागतः शैलात् त्वत्सकाश मरिंदम

इदमम्भः कुबेरस्ते राजराजः प्रयच्छति २८
अंतर्हितानां भूतानां दर्शनार्थं परंतप
गृह्णात्विदं जलं भूरि राजराजेन चार्पितम् २९
शीतलं चातिगन्धं च परमाप्यायनं महत्
तथेति रामस्तद्वारि परिगृह्य महामनाः ३०
चकार नेत्रयोः शैत्यं लक्ष्मणोऽपि तथैवह
सुग्रीवो जांबुवांश्चैव हनुमानं गदस्तथा ३१
मैंद द्विविदताराद्याः प्रायः प्लवगसत्तमाः
तथासमभवच्चापि यदुवाच बिभीषणः ३२
क्षणेनातींद्रियाण्येव चक्षूंष्येषां युधिष्ठिर
इन्द्रजित्कृतकर्मा च पित्र्ये कर्म तदात्मनः ३३
निवेद्य पुनरागच्छत्त्वरयाऽऽजिशिरः प्रति
तमापतन्तं शंक्रुद्धं पुनरेव युयुत्सया ३४
अभिदुद्राव सौमित्रिर्बिभीषणमते स्थितः
अकृताह्निकमेवैनं जिघांसुर्जितवासवम् ३५
शरैर्जघान संक्रुद्धः कृतसंज्ञोऽथ लक्ष्मणः
तयोः समभवद्युद्धं तदान्योन्यं जिगीषतोः ३६
अतीव चित्रमाश्चर्यं शक्रप्रह्लादयोरिव
अविध्यदिन्द्रजित्तीक्ष्णैः सौमित्रिं मर्मभेदिभिः ३७
सौमित्रिश्चानलस्पर्शैरविध्यद्रावणिं शरैः
सौमित्रिशरसंस्पर्शाद्रावणिः क्रोधमूर्छितः ३८
असृजल्लक्ष्मणायाष्टौ शरानाशीविषोपमान्
तस्य तत्पावकस्पर्शैः सौमित्रिपत्रिभिस्त्रिभिः ३९
यथा निरहरद्वीरस्तन्मे निगदतः शृणु
एकेनास्य धनुष्मन्तं बाहुं देहादपातयत् ४०
द्वितीयेन तु बाणेन भुजं भूमावपातयत्
तृतीयेन तु बाणेन पृथुधारेण भास्वता ४१
जहार सुनसं चारु शिरो भ्राजितकुंडलम्
विनिकृत्त शिरस्कंधं भीमं भैरवदर्शनम् ४२
तं कृत्वा मृतमप्याशु जघान बलिनां वरः

लंकां प्रवेशयामासुर्वाजिनस्ते रथं तदा ४३
ददर्श रावणस्तं च रथं पुत्रं विनाकृतम्
स पुत्रं निहतं दृष्ट्वा त्राससंभ्रान्तलोचनः ४४
रावणः शोकमोहार्तो वैदेहीं हन्तुमुद्यतः
अशोकवनिकास्थां तां रामदर्शनलालसाम् ४५
खड्गमादाय दुष्टात्मा जथेनाभिपपात ह
तं दृष्ट्वा तस्य दुर्बुद्धेरवध्यः पापनिश्चयम् ४६
शभयामास संक्रुद्धं श्रूयतां येन हेतुना
महाराज्ये स्थितो दीप्तो न स्त्रियं हन्तुमर्हसि ४७
हतैवैषा यदा स्त्री तु बंधनस्थास्ति ते गृहे
न चैषा देहभेदेन हता स्यादिति मे मतिः ४८
जहि भर्तारमेवास्या हते तस्मिन् हता भवेत्
न हि ते विक्रमे तुल्यः साक्षादपि शचीपतिः ४९
असकृद्धि त्वया सेन्द्रा स्त्रासिता स्त्रिदशा अपि ५०
एवं बहुविधैर्वाक्यैरवध्यो राक्षसेश्वरम्
क्रुद्धं संशमयामास जगृहे स च तद्वचः ५१
निर्याणे स मतिं कृत्वा निधायासिं निशाचरैः
आज्ञापयामास तदा रथो मे कल्प्यतामिति ५२
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ श्रीरामचरितनाम अष्टत्रिंशोऽध्यायः

## अध्याय ३९

ततः क्रुद्धो दशग्रीवः प्रियेपुत्रे निपातिते
निर्ययौ रथमास्थाय हेमरत्नविभूषितम् १
संवृत्तो राक्षसैर्वीरैर्विविधायुधपाणिभिः
अभिदुद्रावः रामं स पोथयन् हरियूथपान् २
तमापतन्तं संक्रुद्धं मैंदनीलनलांगदाः
हनुमान् जांबुवांश्चैव ससैन्यं पर्यवारयन् ३
ते दशग्रीवसैन्यं त दृक्षवानरयूथपाः
द्रुमैर्विध्वंसयांचक्रुर्दशग्रीवस्य पश्यतः ४
ततः स सैन्यमालोक्य हन्यमानमरातिभिः

मायावी व्यदधन्मायां रावणो राक्षसेश्वरः ५
तस्य देहाद्विनिष्क्रान्ताः शतशोऽथ सहस्रशः
राक्षसाः प्रत्यदृश्यन्त शरशक्त्यृष्टिपाणयः ६
तान् रामो जघ्निवान् सर्वान् दिव्येनास्त्रेण राक्षसान्
अथ भूयोऽपि मायां स व्यदधात् राक्षसेश्वरः ७
कृत्वा रामस्य रूपाणि लक्ष्मणस्य च धीमतः
अभिदुद्राव रामं स लक्ष्मणं च दशाननः ८
ततस्ते राममाच्छंश्च रावणादिनिशाचराः
अभिपेतु स्तदा वत्स प्रगृहीतोच्चकार्मुकाः ९
तां दृष्ट्वा राक्षसेन्द्रस्य मायाभिक्ष्वाकुनंदनः
उवाच रामः सौमित्रिमसम्भ्रान्तो महद्वचः १०
जहीमान् राक्षसान् पापारात्मनः प्रतिरूपकान्
जघान रामस्तां श्चान्यानात्मनः प्रतिरूपकान् ११
ततो हर्यश्वमुक्तेन रथेनादित्यवर्वसा
उपतस्थे रणे रामं प्रांजलिः शक्रसारथिः १२
मातलिरुवाच
अयं हर्यश्वयुक् जैत्रो मेघोनः व्यंदनोत्तमः
अनेन शक्रः समरे काकुत्स्थोदैत्यदानवान् १३
तदेतेन नरव्याघ्र मायाऽऽयाति न संगरे
स्यंदनेन जहि क्षिप्रं रावणं माचिरं कृथाः १४
इत्युक्तो राघवस्तथ्यं ततोऽशंकत मातलिम्
मायिनं राक्षसं क्रूरं तदोवाच विभीषणः १५
नेयं माया नरव्याघ्र रावणस्य दुरात्मनः
गृहाणस्यन्दनं दिव्यमिममैन्द्रं महाभुज १६
ततः प्रहृष्टः काकुत्स्थः तथेत्युक्त्वा बिभीषणम्
रथेनाभिपपाताशु दशग्रीवं रुषान्वितः १७
हाहाकृतानि भूतानि रावणे समभिद्रुते
सिंहनादाः सपटहा दिवि दिव्यस्वनास्तथा १८
स रामाय महाघोरं विससर्ज निशाचरः
शूलमिंद्राशनिप्रख्यं ब्रह्मदण्डमिवोद्यतम् १९

तच्छूलमंतरा रामश्चिच्छेद निशितैः शरैः
तद्दृष्ट्वा दुष्करं कर्म रावणो भयमाविशत् २०
ततः क्रुद्धः ससर्जाशु दशग्रीवः शितान् शरान्
सहस्रायुतशो रामे शस्त्राणि विविधानि च २१
गदा भुषंडीः शूलीश्च मुसलानि परश्वधान्
शक्तीश्च विविधाकाराः शतघ्नीश्च शितान् क्षुरान् २२
तां दृष्ट्वा विकृतां मायां दशग्रीवस्य रक्षसः
भयात् प्रदुद्रुवुः सर्वे वानराः सर्वतो दिशम् २३
ततः सुपत्रं सुमुखं हेमपुङ्खं शरोत्तमम्
तूर्णादादाय काकुत्स्थो ब्रह्मास्त्रेण युयोजह २४
तं बाणवीर्यं रामेण ब्रह्मास्त्रेणाभिमन्त्रितम्
जहृषुर्देवगन्धर्वा दृष्ट्वा शक्रपुरोगमाः २५
अल्पावशेषमायुश्च ततोऽमन्यंत रक्षसः
ब्रह्मास्त्रोदीरणाच्छस्त्राद्देवगन्धर्वकिन्नराः २६
ततः ससर्ज तं रामः शर मप्रतिमौजसम्
रावणान्तकरं घोरं ब्रह्मदंडमिवोद्यतम् २७
स तेन राक्षसः श्रेष्ठः सरथः साश्वसारथिः
प्रजज्वाल महाज्वालेनाग्निना परिसंस्कृतः २८
ततः प्रहृष्टात्रिदशाः सगंधर्वाः सचारणाः
निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्मणा २९
तत्यजुस्तं महाभागं पंचभूतानि रावणम्
भ्रंशितः सर्वलोकेषु स हि ब्रह्मास्त्रतेजसा ३०
शरीरधातवोह्यस्य मांसं रुधिरमेव च
नेशुर्ब्रह्मास्त्रनिर्दग्धानलभस्म व्यदृश्यत ३१

इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ श्रीरामचरिते रावणवधोनाम
एकोनचत्वारिंशत्तमोऽध्यायः

## अध्याय ४०

ब्रह्मोवाच
स हत्वा रावणं क्षुद्रं राक्षसेन्द्रं सुरद्विषम्

बभूव हृष्टः ससुहृद्रामः सौमित्रिणा सह १
ततो हते दशग्रीवे देवाः सर्षिपुरोगमाः
आशीर्भिर्जययुक्ताभिरानर्चुस्तं महाभुजम् २
रामं कमलपत्राक्षं तुष्टुवुर्वनदेवताः
गंधर्वाः पुष्पवर्षैश्च वाग्भिश्च त्रिदशालयाः ३
पूजयित्वा तथा रामं प्रतिजग्मुर्यथागतम्
तन्महोत्सवसंकाश मासीदाकाश मच्युतम् ४
ततो हत्वा दशग्रीवं लंकां रामो महायशाः
विभीषणाय प्रददौ प्रभुः परपुरंजयः ५
ततः सीतां पुरस्कृत्य बिभीषणपुरस्कृतः
अवंध्यो नाम सुप्राज्ञो वृद्धामात्यो विनिर्ययौ ६
उवाच तं महात्मानं काकुत्स्थं दैन्यमाश्रितः
प्रतीच्छदेवीं सद्वृत्तां महात्मन् जानकीमिति ७
एतच्छ्रुत्वा वचस्तस्मादवतीर्य रथोत्तमात्
बाष्पेणपिहितः सीतां ददर्शेक्ष्वाकुनंदनः ८
तांदृष्ट्वा चारुसर्वङ्गीं यानस्थां शोककर्शिताम्
मलापचितिसर्वाङ्गीं जटिलां क्लिष्टवाससम् ९
उवाच रामो वैदेहीं परामर्शविशंकितः
गच्छवैदेहि मुक्तासि यत्कार्यं तत्कृतं मया १०
मामासाद्य पतिं भद्रे न त्वं राक्षसवेश्मनि
जरां न प्राप्नुयास्तस्मान्निहतो मे निशावरः ११
कथमस्मद्विधो जातु जानन् धर्मविनश्चयम्
परहस्तगतां नारीं मुहूर्तमपि धारयेत् १२
सुवृत्तामसुवृतां वा त्वामहं जनकात्मजे
नोत्सहे परिभोगाय श्वावलीढं हविर्यथा १३
ततः सा सहसा बाला श्रुत्वा तद्दारुणं वचः
पपात व्यथिता देवी निकृत्य कदली यथा १४
यो ह्यस्या हर्षसंभूतो मुखरागस्तदा भवत्
क्षणेन स परिभ्रष्टो निश्वासादिव दर्पणे १५
ततस्ते हरयः सर्वे तच्छ्रुत्वा रामभाषितम्

गतासुकल्पा निश्चेष्टा बभूवुः सहलक्ष्मणाः १६
ततो देवो विशुद्धात्मा विमानेन चतुर्मुखः
पितामहो जगत्सृष्टा दर्शयामास राघवम् १७
शक्रश्चाग्निश्च वायुश्च यमो वरुण एव च
यक्षाधिपश्च भगवां स्तथा सर्वे महर्षयः १८
राजा दशरथश्चैव दिव्यभास्करमूर्तिमान्
विमानेन तदर्हेण हंसयुक्तेन भास्वता १९
ततोऽन्तरिक्षं तत्सर्वं देवगंधर्वसंकुलम्
शुशुभे तारकाचित्रं शरदीव नभस्तलम् २०
तत उत्थाय वैदेही तेषां मध्ये यशस्विनी
उवाच वाचं कल्याणीं रामं पृथुलवक्षसम् २१
राजपुत्र न ते कोपं करोमि विदिता हि मे
गतिः स्त्रीणां नराणां च शृणुचेदं वचो मम २२
अन्तश्चरति भूतानां मातरिश्वा सदा गतिः
स मे प्राणान्हरेदेवं यदि पापं चराम्यहम् २३
अग्निरापस्तथाकाशः पृथिवी वायुरेव च
विब्रुवन्तु यथा तत्व मेते ह्येव त्यजन्तु माम् २४
यथाऽहं त्वदृते वीर नान्यं स्वप्ने प्यचिंतयम्
तथा च देवनिर्दिष्टस्त्वमेवेह पतिर्भव २५
ततोंऽरिक्षवागासी च्छ्रावयन्ती दिशो दश
पुण्या संहर्षिणी तेषां वानराणां महात्मनाम् २६
वायुरुवाच
भो भो राघव सत्यं ते वायुरस्मि समागतः
अपापा मैथिली राजन् संगच्छस्व स्वभार्यया २७
अग्निरुवाच
अहं मतः शरीरस्थो भूतानां रघुनंदन
सुसूक्ष्ममपि जानामि मैथिली नापराधिनी २८
वरुण उवाच
रसाः सर्वे मत्प्रसूता देहे देहे रघूद्वह
अहं त्वां प्रब्रवीम्येव मैथिली प्रतिह्येताम् २९

ब्रह्मोवाच
पुत्र नैतदिहाश्चर्यं त्वयि राजर्षिधर्मणि
साधौ सन्मार्गवृत्तिस्थे शृणुचेदं वचो मम ३०
शत्रुरेषत्वया वीर देवमंत्रार्थभोगिनाम्
यक्षाणां दानवानां च महर्षीणां च पातितः ३१
अवध्यः सर्वभूतानां मत्प्रसादात्पुराऽभवत्
कस्माच्चित्कारणात्पापः कंचित्कालमुपेक्षितः ३२
वधार्थमात्मनस्तेन हृता सीता दुरात्मना
तस्य कुबेरशापेन रक्षाचास्याः कृता मया ३३
यदि ह्यकामां वावेत स्त्रियमन्यामपि ध्रुवम्
शतधास्यपतेद् देह इत्युक्तः सोऽभवत्पुरा ३४
नात्रशंका त्वया कार्या पतीच्छेमां महाद्युते
कृतं त्वया महत्कार्यं देवानाममरप्रभ ३५
दशरथ उवाच
प्रीतोऽस्मि वत्स भद्रं त्ते पिता दशरथोऽस्मि ते
अनुजानामि ते राज्यं प्रशाधि पुरुषोत्तम ३६
श्रीराम उवाच
प्रणमामि पितः पुण्य प्रसीदतु सदा मयि
गमिष्यामि पुरीं रम्यामयोध्यां शासनात्तव ३७
ब्रह्मोवाच
तमुवाचपिता भूयः प्रहृष्टो मनुजाधिपः
गच्छायोध्यां प्रशाधित्वं राम रक्तान्तलोचन ३८
संपूर्णानीह वर्षाणि चतुर्दश महाद्युते ३९
ततो देवान्नमस्कृत्य सुहृद्भिरभिनंदितः
महेन्द्र इव पौलोम्या वैदेह्या सममेयिवान् ४०
ततो वरं ददौ तस्मा अवध्याय परंतप
त्रिजटां चार्थमानां च योजयामास राक्षसीम् ४१
तमुवाच ततो ब्रह्मा ददौ शक्रमुखैर्वृतः
कौशल्या मातरिष्टान् ते वरानद्य ददामि ते ४२
विप्रे राम स्थितिं धर्मे शत्रुभ्यश्चापराजयम्

राक्षसैर्निहतानां च वानराणां समुद्भवम् ४३
ततस्ते ब्रह्मणा प्रोक्तात्तथेति वचनात्तदा
समुत्तस्थुर्महाराज वानरा लब्धचेतनाः ४४
सीता चापि महाभागा वरं हनुमते ददौ
रामकीर्त्या समं पुत्र जीवितं ते भविष्यति ४५
दिव्यास्त्वांमुपभोगाश्च मत्प्रसादकृताः सदा
उपस्थास्यन्ति हनुमन्न् इतिवै हरिलोचन ४६
ततः संप्रेषमाणानां तेषामक्लिष्टकर्मणाम्
अंतर्धानं ययुर्देवाः सर्वे शक्रपुरोगमाः ४७
दृष्ट्वानुरामं जानक्या समेतं शक्रसारथिः
उवाच परमप्रीतः सुरमध्य इदं वचः ४८
देवगंधर्वयक्षाणां मनुष्योरगरक्षसाम्
अपनीतं त्वया दुःखमिदं सत्यपराक्रम ४९
स देवासुरगन्धर्वयक्षराक्षसकिंन्नराः
कथयिष्यन्ति लोकास्त्वां यावद्भूभिर्धरिष्यति ५०
इत्येवमुक्त्वानुज्ञाप्य रामं शस्त्रभृतां वरम्
संपूज्य प्राक्रमन्तेन रथे नादित्य वर्चसा ५१
ततः सीतां पुरस्कृत्य रामः सौमित्रिणा सह
सुग्रीवप्रमुखैश्चैव सहितैः सह वानरैः ५२
विधाय लंकारक्षायां विभीषणपुरस्कृतान्
उत्ततार पुनस्तेन सेतुना मकरध्वजम् ५३
पुष्पकेण विमानेन खेचरेण विराजता
कामगेन यथामुख्यैरमात्यैः सवृतो बली ५४
तत्र तीरे समुद्रस्य यत्रोषिवान् स पार्थिवः
तत्रै वायात्स धर्मात्मा सहितः सर्ववानरैः ५५
अथैतान् राघवः काले समानैरभिपूज्य च
विसर्जयामास तदा रत्नैः संतोष्य पार्थिवः ५६
गतेषु वानरेन्द्रेषु गोपुच्छर्क्षेषु तेषु च
सुग्रीवसहितो रामः किष्किन्धां पुनराव्रजत् ५७
बिभीषणेनानुगतः सुग्रीवसहितस्तदा

पुष्पकेण विमानेन वैदेह्या दर्शयन् वनम् ५८
किष्किन्धां तु समासाद्य रामः प्रहरतां वरः
अंगदं कृतकर्माणं यौवराज्येऽभ्यषेचयत् ५९
ततस्तैरेव सहितै रामः सौमित्रिणा सह
यथागतेन मार्गेण प्रययौ स्वपुरं प्रति ६०
अयोध्यां तु समासाद्य पुरीं राष्ट्रपतिस्तदा
भरताय हनुमंतं दूतं प्रास्थापयत्तदा ६१
लक्षयित्वेंगितैः सर्वं प्रिय तस्मै न्यवेदयत्
वायुपुत्रैस्तदा शीघ्रं नंदीग्राममुपागमत् ६२
स तत्र मलदिग्धांगं भरतं चीरवाससम्
अग्रतः पादुके कृत्वा ददर्शासीनमासने ६३
समेत्य भरतेनाथ शत्रुघ्नेन च वीर्यवान्
राघवः सह सौमित्रिर्मुमुदे भरतर्षभ ६४
तथा भरतशत्रुघ्नौ समेतौ गुरूणा तदा
वैदेह्या दर्शनेनोभौ प्रहर्षं समवापतुः ६५
तस्मै तद्भरतो राज्यमागतायाभिसत्कृतम्
न्यासं निर्यापयमास युक्तः परमया मुदा ६६
ततस्तं वैष्णवे शूरं नक्षत्रेऽभिजितेऽहनि
वशिष्ठो वामदेवश्च सहितावभ्यषिंचताम् ६७
सोभिषिक्तः कपिश्रेष्ठं सुग्रीवं ससुहृज्जनम्
बिभीषणं च पौलस्त्य मन्वजानादृहान् प्रति ६८
अभ्यर्च्य विविधै रत्नैः प्रीतियुक्तो मुदाननः
अभिधायेति कर्तव्य दुःखेन विससर्ज सः ६९
पुष्पकं च विमानाग्र्यं पूजयित्वा च राघवः
प्रादा द्वै धनदायैव प्रीत्या वै रघुनन्दनः ७०
ततो देवर्षिसहितः सरितं गोमतीमनु
दशाश्वमेधा नाजह्रे जान्हव्यां स निरर्गलान् ७१
इत्येवं रामचरितं श्रुत्वा लोकपितामहात्
मरीचिरतिसंतुष्टः पुनः पप्रच्छ सादरम् ७२
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ श्रीरामचरितं नाम चत्वारिंशत्तमोऽध्यायः

अध्याय ४१
ब्रह्मोवाच
कथितं रामचरितं यत्पृष्टमिह तेऽनघ
ब्रूहि नश्च महाभाग किं पुनः श्रोतुमिच्छसि १
मरीचिरुवाच
कस्मिञ्जाते कुले रामः किं वीर्यः किं पराक्रमः
रावणः कस्य पुत्रश्च किं वैरं तस्य तेन च २
एतन्मे संशयं ब्रह्मन् सम्यगाख्यातु मर्हसि ३
त्वया प्रत्यक्षतो दृष्टं यथा सर्वमशेषतः
श्रोतुमिच्छामि चरितं रामस्या क्लिष्टकर्मणः ४
ब्रह्मोवाच
अजोनामाऽभवद्राजा इक्ष्वाकुकुलनंदनः
तस्य पुत्रो दशदथः शश्वत्स्वाध्यायवान्मुने ५
अभवत्तस्य चत्वारः पुत्रा धर्मार्थकोविदाः
रामलक्ष्मणशत्रुघ्नभरताश्च महाबलाः ६
रामास्य माता कौशल्या कैकेयी भरतस्य तु
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्राया बभूवतुः ७
विदेहराजा जनकः सीता तस्यात्मजाऽभवत्
यां चकार स्वयं सृष्टा रामस्य महिषीं प्रियाम् ८
एतद्रामस्य ते जन्म सीतायाश्च प्रकीर्तितम्
रावणस्यापि ते जन्म व्याख्यास्यामि मुनीश्वर ९
पितामहो रावणस्य साक्षाद्देवः प्रजापतिः
स्वयंभूः सर्वलोकानां प्रभुः सृष्टा महातपाः १०
पुलस्त्यो नाम तस्यासीन्मानसो दयितः सुतः
तस्य वैश्रवणो नाम इति पुत्रोऽभवत्पुनः ११
जनितारं समुत्सृज्य पितामहमुपस्थितः
तस्यकोपात् पिता राजन् ससर्जात्मानमात्मना १२
ससर्ज विश्रवानाम तस्यात्मार्धेन वै द्विज
प्रतिकाराय सक्रोधं ततो वैश्रवणस्य वै १३
पितामहस्तु प्रीतात्मा ददौ वैश्रवणाय च

अमरत्वं धनेशत्वं लोकपालत्वमेव च १४
ईशानेन समं सख्यं पुत्रं च हलकूबरम्
राजधानीनिवेशं च लंकां यक्षगणान्विताम् १५
पुलस्त्यस्य तु यः कोपादर्धदेहोऽभवन्मुनिः
विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत १६
बुबुधे तं तु सक्रोधं पितरं राक्षसेश्वरम्
कुबेरस्तत्प्रसादार्थं यततेस्म सदा ततः १७
स राजराजो लंकायां तोषयन्नरवाहनः
राक्षस्य प्रददौ तस्मै पितुर्वै परिचारिकाः १८
तास्तदा तं महात्मानं संतोषयितुमुद्यतः
ऋषिं तु मुनिशार्दूलं नृत्यगीतविशारदाः १९
पुष्पोत्कटा च वाकाया मालिनी च द्विजोत्तम
अन्योन्यस्पर्धया रामाः श्रेयस्कामाः सुमध्यमाः २०
तासां स भगवान् तुष्टो महात्मा प्रददौ वरान्
लोकपालोपमान् पुत्रानेकैकस्या यथेप्सितं २१
पुष्पोत्कटाया जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ
कुंभकर्णदशग्रीवै बलेनाप्रतिमौ भुवि २२
मालिनी जनयामास पुत्रमेकं विभीषणं
वाकाया मिथुनं जज्ञे खरः शूर्पणखा तथा २३
बिभीषणस्तु रूपेण सर्वेभ्यो ह्यधिकोऽभवत्
बभूव च महाभागो धर्मगोप्ता क्रियारतिः २४
दशग्रीवस्तु सर्वेषां ज्येष्ठो राक्षसपुंगवः
महोत्साहो महावीर्यो महासत्वपराक्रमः २५
कुंभकर्णो बलेनासीत् सर्वेभ्योप्यधिकस्तथा
मायावी रणशूरश्च रौद्रश्च रजनीचरः २६
खरो धनुषि विक्रान्तो ब्रह्म द्विट् पिशिताशनः
सर्व विघ्नकरी चापि रौद्रा शूर्पणखा तथा २७
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः
ऊषुः पित्रा सह रता गंधमादन पर्वते २८
ततो वैश्रवणं तत्र ददृशुर्नरवाहनम्

पित्रा सार्धमथासीनमृद्ध्या परमया युतम्  २९
जातस्पर्धास्ततस्ते तु तपसे कृतनिश्चयाः
ब्रह्माणं तोषयामासुर्घोरेण तपसा तदा  ३०
अतिष्ठदेकपादेन सहस्रं परिवत्सरान्
वायुभक्षो दशग्रीवः पंचाग्निसुसमाहितः  ३१
अधःशायी कुंभकर्णो जिताहारो जितेन्द्रियः
बिभीषणः शीर्णपर्णमेकं भक्षितवान्सदा  ३२
उपवासरतिर्धीमान् सदा जाप्यपरायणः
तमेककालमातिष्ठत्तपस्तीव्रमुदारधीः  ३३
खरः शूर्पणखा चैव तेषां वै तप्यतां तपः
परिचर्यां च रक्षांश्च चक्रतुर्हृष्ट मानसौ  ३४
पूर्ण वर्षसहस्रं तु शिरश्छित्वा दशाननः
जुहोत्यग्नौ दशग्रीव स्तेनातुष्यत्पितामहः  ३५
ततो ब्रह्मा स्वयं गत्वा तपसस्तु न्यवर्तयत्
प्रलोभ्य वरदातेन सर्वानेव पृथक् पृथक्  ३६
ब्रह्मोवाच
प्रीतोऽस्मि विनिवर्तध्वं वरान् शृणुत पुत्रकाः
यद्य दिष्टमृते चैक ममरत्वं तथास्तुवः  ३७
गंधर्वदेवा सुरतो यक्षराक्षसतस्तथा
सर्पकिन्नर नागेभ्यो न ते भूयात्मरागवः  ३८
शिरांसि यानि पूर्वं ते हतानि महदिप्सया
तथैव तानि ते देहे भविष्यन्ति यथेप्सितम्  ३९
वैरूप्यं न च ते देहे कामरूपधरस्तथा
भविष्यसि रणेऽरीणां विजेता च न संशयः  ४०
रावण उवाच
गंधर्व देवासुरतो यक्ष राक्षसतस्तथा
सर्पकिंनरनागेभ्यो न मे भूयात्पराभवः  ४१
ब्रह्मोवाच
य एते कीर्तिताः सर्वे न तेभ्योऽस्ति भयं तव
ऋृतेमनुष्याद्भद्रं ते यथावद्विहितं मया  ४२

एवमुक्तो दशग्रीवस्तुष्टः समभवत्तदा
अवमेने च दुर्बुद्धेर्मनुष्यान् पुरुषादकः ४३
कुंभकर्णमथोवाच तथैव प्रपितामहः
कुंभकर्णमहाबाहो वरं वरय सुव्रत ४४
स वव्रे महतीं निद्रां तपसा नष्टचेतनः
तथा भविष्यतीत्युक्त्वा बिभीषणमुवाच ह ४५
वरं वृणीष्व पुत्र त्वं प्रीतोऽस्मीति पुनः पुनः
बिभीषण उवाच
परमापद्गतस्यापि नास्त्वधर्मे मतिर्मम ४६
अशिक्षितं च भगवन् ब्रह्मास्त्रं प्रतिभाति मे
ब्रह्मोवाच
यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्शन ४७
नाधर्मे रमते बुद्धिरमरत्वं ददाम्यतः
ब्रह्मोवाच
राक्षसस्तु वरान् लब्ध्वा दशग्रीवो महाबलः ४८
लंकां पर्यवसत्सोपि युधि जित्वा धनेश्वरम्
हित्वा स भगवान् लंकामाविशन् गंधमादनम् ४९
गंधर्वयक्षानुगत स्तथा किंपुरुषैर्वृतः
विमानं पुष्पकं तस्य जहाराक्रम्य रावणः ५०
शशाप तं वैश्रवणो नत्वामेतत्तु वक्ष्यति
यस्तुत्वां समरे हन्ता तमेतद्वै बहेत्सदा ५१
अवनत्य गुरुं मां च विप्रत्वं न भविष्यति
बिभीषणस्तु धर्मात्मा सतां धर्ममनुस्मरन् ५२
अन्दगच्छन्महाभागं श्रियां परमया युतः
तस्मै स भगवांस्तुष्टो भ्राता भ्रात्रे धनेश्वरः ५३
सेनापत्यं ददौ श्रीमान् यक्ष राक्षस सेनयोः
यक्षाश्च पुरुषादाश्च पिशाचाश्च महाबलाः ५४
सर्वे समेत्य राजान मभ्य पिञ्चन् दशाननम्
दशग्रीवस्तु देवानां दैत्यानां च बलोत्कटः ५५
आक्रम्य रत्नान्यहरत् कामरुपी विहंगमः

रावयामास लोकान् यस्तस्माद्रावण उच्यते ५६
दशग्रीवः कामबलो देवानां दुःखदोऽन्वहम्
ब्रह्मोवाच
ततो ब्रह्मर्षयः सिद्धा देवा राजर्षयस्तथा ५७
हव्यवाहं पुरस्कृत्य ब्रह्माणं शरणं गताः
अग्निरुवाच
स वै वैश्रवसः पुत्रो दशग्रीवो महाबलः ५८
ततो नस्त्रांतुं भगवन् नान्यस्त्राता हि विद्यते
ब्रह्मोवाच
न स देवासुरैः शक्यो युद्धे जेतुं विभावसो ५९
विहितं यत्र तत्कार्यमभितस्तस्य निग्रहे
तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः ६०
विष्णुः प्रहरतां श्रेष्ठः स कर्मैतत्करिष्यति
वह्निरुवाच
पितामहस्ततस्तेषां संनिधौ वाक्यमब्रवीत् ६१
सर्वैर्देवगणैः सार्द्धं संभवंतु महीतले
विष्णोः सहाया ऋक्षेषु वानरेषु च सर्वशः ६२
जनयध्वं सुरान् सर्वान् कामरूपबलाश्रितान्
ततो भागानुभागेन देवगंधर्वपन्नगाः ६३
समागन्तुं महीं सर्वे रोचयामासुरंजसा
तेषां समक्षं गंधर्वीं दुंदुभीं नामनामतः ६४
शशास वरदो देवो देवकार्यार्थ सिद्धये
पितामहवचः श्रुत्वा गंधर्वी दुंदुभी ततः ६५
मंथरा मानुषे लोके कुब्जानामा भवत्तदा
शक्र प्रभृतयश्चैव सर्वे ते सुरसत्तमाः ६६
वानरक्षावरस्त्रीषु जननं चापुरात्मजाः
नागायुतसमप्राणाः वायुवेगसमानवे ६७
यथेच्छकनिवासाश्च केचित्तत्र वनौकसः
एवं भगवान् जज्ञे भ्रातृभिः सह भूतले ६८
भुवो भारावताराय गृहे दशरथस्य च

इन्दीवरदलश्यामः कौशल्यानंदवधनः ६९
अवतीर्य रवेर्वंशे भगवान् हरिरीश्वरः
पितुराज्ञां पुरस्कृत्य चक्रे वासं वने विभुः ७०
मैथिली हरणार्थोऽसौ सख्यमृक्षैश्च वानरैः
अकरोद्वालिनं हत्वा युद्धेषु जयमेव च ७१
ज्ञात्वा हनुमतः सीतां लंकोपवन वासिनीम्
बद्धोदधा विमंसेतुं शतयोजनमायतम् ७२
रावणो निहतः संख्ये सपुतः सपरिच्छदः
देवानां कार्यसिद्ध्यर्थं भुवो भारावनुत्तमे ७३
तं हत्वा रघुवीरोऽसौ सीतामादाय जानकीम्
अगमत्स्वपुरे रम्ये मयोध्याख्ये तदा विभुः ७४
तदा सभगवांस्तत्र भ्रातृभिः सह मोदितः
चक्रे तत्कोशल विभू राज्यं निहतकंटकम् ७५
जनानानंदयत् सर्वान् स्वकोशल निवासिनः
मातृभक्तिपरो वीरो लोकान् संहर्षयन्निव ७६
बुभुजे रघुवीरोऽसौ भोगान् षड्तुसंभवान्
सीतया सह वैदेह्या पूर्वदुःखमनुस्मरन् ७७
ब्रह्मोवाच
एवं ते कथितं विप्र यत्पृष्टोऽहमिहत्वया
चरितं रघुनाथस्य पावनात्पावनं परम् ७८
श्रुतं काले मलं हन्ति पठितं सर्व दुःखहृत्
परमाप्रच्छिदं नित्यं सुखसौभाग्यदायकम् ७९
रघुनाथस्य चरितं ये पठन्ति दिने दिने
न तेषां सत्य संधानामापदोऽभिभवन्ति हि ८०
मरीचिरुवाच
कथं च कीलको दुष्टो सान्त्वितः प्रभुणा विभो
तन्मे कथय देवेश येन संतापिता द्विजाः ८१
ब्रह्मोवाच
दत्वा क्रिया विभागं च मध्यगेन महात्मनः
सान्त्वितः स्वपुरे रम्ये समानीतो भयानकः ८२

इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ रामचरितं नाम
एकचत्वारिंशत्तमोऽध्यायः । रामोपाख्यानं समाप्तम्

अध्यायः ४२

रामेणैवं भगवता हतो दुष्टो निशाचरः
तथा कीलकको नाम विश्वेदेवाः सुदारुणः १
नांदीमुखानां वचनात् समानीतोऽत्र पुत्रक
दत्वा क्रियाविभागं हि तोषितः सुदुरात्मकः २
ततस्ते ब्राह्मणाः सर्वे समागत्य तु तं प्रति
विविशुस्तेन सहिता नंदीग्रामं बलीयसा ३
एवं सन्मान्य तं पाप मूचुर्नांदीमुखा मिथः
नांदीमुखा ऊचुः
गजच्छायासु भो श्राद्धं प्रयागे कार्यमेव हि ४
आगच्छत महाभागाः पुरंदरपुरं प्रति
अर्थयामोगजं दिव्यं नान्यथा चाप्नुयाम तत् ५
सिद्धं चैरावतं विप्रा विना चान्येन हस्तिना
एवमुक्त्वा ततस्ते तु जग्मुः शक्रपुरं प्रति ६
दृष्ट्वातानागतान् सर्वान् द्वादशार्कसमप्रभान्
सुरेन्द्रोऽभिजगामापि हर्षसंतुष्टमानसः ७
चकाराहणकां चैव चक्रे देवाधिपः खलु
स्तुत्या संतोषयामास विप्रान्नांदीमुखोद्भवान् ८
दत्ताज्ञां मे महाभागा ब्रुत किं करवाण्यहम्
युष्मत्प्रसादाद्विप्रेन्द्रा राज्यंभोक्ष्याम्य कण्टकम् ९
विप्रा ऊचुः
त्वत्प्रसादा त्सुरश्रेष्ठ ह्यस्माकं वर्तते किल
याचामहे गजं दिव्यमिममैरावतं विभो १०
छायायां कुंजरस्यैव प्रयागे श्राद्ध कर्मणि
देह्यस्मभ्यं सुरश्रेष्ठ क्रियते त्वत्प्रसादतः ११
देवराजो विमृश्याथ मनस्येवं सुराधिपः
श्राद्धं प्रयागे छायायां शुभायां कुंजरस्य मे १२

नांदीमुखाश्च विप्रेन्द्रा सर्वं तत्प्रतिकलकम्
ततः प्रोवाच शक्रोऽसौ चिंतयाकुलमानसः १३
इन्द्र उवाच
नादेयं मे च भवतां किंचिच्च त्रिदिवोद्भवम्
ऐरावतं विना विप्राः सुवर्णं गृहमेव वा १४
ग्रामश्च नगरं देशा रथा गावस्तथा परम्
रत्नानि विविधान्येवं तथान्यद्यच्च मृग्यते १५
ब्रह्मोवाच
ततो नांदीमुखाः सर्वे कोधसंरक्तलोचनाः
ऊचुः सर्वे महाभागाः शोकसंतापकातराः १६
विप्रा ऊचुः
धिक् त्वां देवेन्द्र चास्माकं प्रार्थना तथ्यतां गता
त्वां प्राप्य कुसुरश्रेष्ठ यास्यामः स्वं निकेतनम् १७
शत्रुभिः परिभूतस्त्व मस्मद्वाक्या न्नसंशयः
संतापो मानसो भूयो भूयस्त्वां प्राप्नुयात्सदा १८
ब्रह्मोवाच
एवमुक्त्वा ततस्ते च गता नांदीपुरे वरे
अथो सत्रं समारेभे विप्रः कोशिककोद्भवः १९
प्राप्तये स्वर्गराज्यस्य चाग्निष्टोमं सतां मतम्
तस्मिन् क्रतौ च विप्रेन्द्रानवृणोत्तानृषीनथ २०
भूषयामास तान् विप्रो हेमालंकारभूषणैः
दक्षिणां च ददौ तेभ्यो धनानि विपुलानि च २१
भुक्तास्ते ब्राह्मणास्तत्र ह्यसंख्याताह्यनेकशः
दीनांधकृपणाश्चापि भोजनं प्रापुरुत्तमम् २२
तत्र नांदीमुखानांच स्त्रियो हर्षान्विताः शुभाः
मुदिताः संजगुस्तत्र चक्रुः सेवां महामुने २३
अथो समागतस्तत्र नारदो यज्ञ कर्मणि
वचनादेवदेवस्य शक्रस्य च महात्मनः २४
धृतवानक्ष बलयमजिनं कटि सूत्रकम्
सूर्यकोटी प्रतीकाशो योगि रूपधरोऽमलः २५

ऋषिं तमागतं दृष्ट्वा स्त्रियः फुल्लित लोचनाः
गायन्त्यश्च हसन्त्यश्च पेक्षमाणा श्चतुर्दिशम् २६
नारदं मुनि मज्ञात्वा ताभिः सन्मानितो न सः
क्रुद्धश्च गृहमध्ये तु गतो यज्ञस्य वाटके २७
न ज्ञातस्तत्र विप्रेन्द्रैः कृत्य विह्वल मानसैः
अर्हणा न कृता तस्य न वचोभिश्च मानितः २८
क्षणं तत्र समास्थाय नारदः क्रोध मूर्छितः
मेघ गंभीरया वाचा प्राह नांदीमुखान् द्विजान् २९
नारद उवाच
भो भो नांदीमुखा विप्रा विद्या धन मदेन च
गर्विता नैव जानीथ नारदं च महामुनिम् ३०
तस्माद्यूयं च विप्रेन्द्रा ह्यस्मद्वाक्या दसंशयम्
विद्या विहीनका यूयं भविष्यथ न संशयः ३१
कलौ समागते चैव मुक्त्वा स व्रजितो मुनिः
यथागतस्तथा वास सत्वरं क्रोध मूर्छितः ३२
तेनो दितं वचः श्रुत्वा विप्रा नांदीमुखास्तदा
चिन्ता सुविकलास्ते च प्रेक्षंते सर्वतो दिशम् ३३
तमृषिं नैव पश्यन्ति मूर्छिता इव चाभवन्
हा हेति च वचः श्चैव प्रोच्यमानाः सुदारुणम् ३४
क्वगतः क्वगतश्चेति भाषन्ते च परस्परम्
अथैव ब्राह्मणास्ते तमन्वधावन्महामुनिम् ३५
सपुत्राः ससुहृदश्चैव त्यक्त्वा कार्याण्यनेकशः
स्त्रियो नांदीमुखानां च त्यक्त्वा स्वं स्वं निकेतनम् ३६
विहाय गृहकार्याणि भयविह्वलमानसाः
भूषणानिविचित्राणि धृतानि प्रतिलोमतः ३७
विक्लिन्नमानसाःकाश्चित्स्तनाद्बालन्विमोच्य च
अन्नशालां विहायान्याः पतिशुश्रूषणे रताः ३८
अर्द्धार्चितं महाहारं मुक्तानां मणिसंयुतम्
मुक्त्वार्द्धान्यभिजग्मुश्च नारदं तं तपोनिधिम् ३९
कर्ण मूलसमां वाच मुक्त्वा प्रव्रजितो मुनिः

गोकर्ण निकटे गङ्गां समायातस्तपोनिधिः ४०
तत्रश्रांतो महाभागो विश्रामाय स्थितो मुनिः
तत्र निवर्तयामास सर्वाश्चा प्याह्निकिः क्रियाः ४१
एतस्मिन्नेव कालेतु सर्वे नांदीमुखा मुने ४२
समाजग्मुर्निदाघार्ता महावृत्तं यथाध्वगाः
ते तं प्रापुर्महाभागाः प्रणिपात कृतोद्यमाः ४३
जगृहुश्चरणौ केचिन्मुनेः सद्वृत्ति चारिणः
दंडवत् प्रणिपातांश्च केचिच्चक्रुर्महामुनेः ४४
कृतांजलिपुटाः सर्वा नमश्चक्रुः स्त्रियोऽप्यथ
प्रसन्नचेतसं चकुर्दिव्यैस्तोत्रैश्च तुष्टुवुः ४५
एवं दृष्ट्वा हि तान् सर्वा नुवाच कृपया मुनिः
नारद उवाच
किमर्थमागता यूयं त्यक्त्वा कार्यं स्वकीयकम् ४६
दूराध्वान मतिक्रम्य श्रांतावः सकलत्रकाः
ब्राह्मणा ऊचुः
अज्ञात्वा त्वां महाभाग सापराधा वयं विभो ४७
तवशापाद्व्याकुलीभूताः शरणयंत्वां समागताः
क्रियतांच मुनिश्रेष्ठ चास्माकमप्यनुग्रहम् ४८
नारद उवाच
श्रूयतांच महाभागां नातथ्यं वचनं मम
करिष्येऽनुग्रहं चैव वचनं कथयामि वः ४९
मच्छापा न भविष्यंति विनाकलियुगं द्विजाः
तत्रापि च श्रियायुक्ताः कलौ वाणिज्यवृत्तयः ५०
सदा संतुष्टमनसः कस्याशां न करिष्यथ
तथेत्युक्त्वा ततः सर्वे प्रययुः स्वं निकेतनम् ५१
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ नारदशापो नाम द्वाचत्वारिंशत्तमोऽध्यायः

आध्याय ४३
ब्रह्मोवाच
एवं समाप्य विधिवद्यज्ञं विपुलदक्षिणाम्

आरेभिरे ततो विप्रा नरमेध क्रतुर्महान् १
तत्र यज्ञे महाभाग समायाता स्तपोधनाः
क्रतुर्वसिष्ठः पुलहः पुलस्त्यः शौनकस्तथा २
वसिष्ठो नारदश्चैव भृगुरांगिरस स्तथा
एतेचान्ये च बहव स्तत्र नांदीपुरे वरे ३
भगवानपि विश्वात्मा यत्र संनिहित स्सदा
लक्ष्म्या च सहितो वत्स तत्रारेभुस्तपोधनाः ४
वृणुयाद्ब्राह्मणान्सर्वान् गौतमो मुनिसत्तमः
काम्ययज्ञे तदर्हांश्च वेद वेदांग वेदिनः ५
शांतो दान्तः कुलीनश्च नरः सुंदर रूपधृक्
सर्वलक्षणसंयुक्तो नरः षोडश वार्षिकः ६
वेदोक्तेन विधानेन चक्रुः सर्वे महाक्रतुम्
नरो वेदोक मंत्रेण सर्वांगेषु च यंत्रितः ७
वन्धनैर्बंधयामासुस्तं नरं ते महर्षयः
भोजयामासु रम्यांश्च विप्रां स्तेषु ह्यनेकशः ८
रन्ध्रान्वेषी ततः शक्र आगतो दिव्यरूपधृक्
मुनयो नैव पश्यन्ति तं महान्तं पुरंदरम् ९
कार्यविह्वलतां प्राप्तान् विप्रानालोक्य यत्नतः
देवराजो जहाराथ तं नरं च वृतं क्रतौ १०
समुद्रतट मध्ये तु क्षिप्तस्तेन सुरूपवान्
ययौ रथं समारुह्य कृतकार्योऽमरावतीम् ११
अथ ते ब्राह्मणाः सर्वे ददृशुर्न नरं वरम्
चिंताकुला अपश्यँश्च विह्वलाः सर्वतो दिशम् १२
हाहाकार वचस्तत्र वर्तते यज्ञवाटके
मिथः केन हृतः प्रोचुर्भय संत्रस्तमानसाः १३
राक्षसामिहतः केचित्कल्पन्ते च परस्परम्
गंधर्वैः किन्नरैश्चापि भूतप्रेतपिशाचकैः १४
कृष्णात्रिकुलभूतेन विप्रेण च महात्मना
कार्ष्णात्रिण महाभाग प्रेक्षितो ध्यानमागतः १५
तानुवाच महाप्राज्ञो ज्ञातं मे मुनिसत्तमाः

देवराजो नरं तं च गतो हत्वा सुराधिपः १६
ततस्ते ब्राह्मणाः सर्वे यज्ञसंभारकं मुने
विप्रेभ्यः प्रददुस्ते च भगवत्प्रीतिहेतवे १७
दीनांधकृपणाँश्चापि भोजयामासुरन्विताः
तैस्तर्पितैः सदा वत्स यतो यज्ञफलं भवेत् १८
ब्रह्मोवाच
एवं ते ब्राह्मणाः सर्वे कोपिताश्च पुरंदरम्
मिथो विचारयामासुः किं कार्यमितिचाब्रुवन् १९
वयं शक्रेण दुष्टेन नीताश्चैवोपहास्यताम्
यो यो यज्ञः समारब्धस्तं तं दुष्टः प्रदुष्यति २०
अस्यापि केचित्सुव्यक्तं कुर्वीरंश्चाभिचारकम्
यदिकिंचित्प्रजानन्ति तदा ब्रूत बुधोत्तमाः २१
श्रुत्वा कार्ष्णात्रिको विप्रः प्रत्युवाच हि तान् प्रति
शृणवन्तु विद्वत्प्रवराः करिष्येऽहं सुसत्रकम् २२
तेन यज्ञेन दुष्टात्मा पराजयमुपैष्यति
दिष्ट्यादिष्ट्येति ते सर्वे प्रवदन्ति तपोधनाः २३
ततो यज्ञः समारब्धः काम्यार्थं ते द्विजोत्तमाः
तेनोपदिष्टा विप्रेन्द्रा धनानि विपुलानि च २४
समचैषुर्महाभागा स्तत्र यज्ञे द्विजोत्तमाः
कालेन बहुना वत्स व्यतीतेन द्विजोत्तम २५
यज्ञ सम्पूर्णतां यातो ब्राह्मणैर्यच्छुभः कृतः
एकस्मिन्दिवसे वत्स पुरीं चैवामरावतीम् २६
सिंहासनोपविष्टे च शक्रे चैव महात्मनि
स्तंभः सिंहासनस्यैव जातश्चैव विदारकः २७
तस्माच्च दारुजो वत्स दैत्येन्द्रः समुपस्थितः
खड्गचर्मधरः शूरः तिष्ठतिष्ठेति च ब्रुवन् २८
तस्मादुत्थाय शक्रोऽपि युयुधे सह तेन वै
तयोर्युद्धमभूद्घोरं तत्रत्यानां भयावहम् २९
बाहुभिश्च तथा भल्लैः खड्गैर्दंतदंशैस्तथा
हाहाकारस्ततो जातो स्वर्गस्थानां गृहे गृहे ३०

शक्रस्तु तत्प्रहरणैर्मूर्छितस्तद्भुवं गतः
सर्वे देवास्तदा वत्स विह्वली भूतमानसाः ३१
भगवंतं समाजग्मुः क्षीरसागरवासिनम्
स्तुत्या संतोषयामासुर्देवदेवं जनार्दनम् ३२
तुष्टः प्रोवाच भगवानव्यक्तः पुरुषोत्तमः
यात देवाः स्वसदनं परां निर्वृतिमागताः ३३
भवतां साधयिष्यामि कार्यं चात्र दिवेश्वराः
तथेत्युक्त्वा गताः सर्वे देवाः स्वं स्वं निकेतनम् ३४
विप्रा नांदीमुखाश्चापि प्रेरिता हीश्वरेच्छया
दैत्यं संवारयामासुर्देवानां रक्षणाय च ३५
ततः प्रभृति विप्रेन्द्र मन्युः शक्रस्य चाभवत्
शेषेण महता वत्स समाहूय च तोयदान् ३६
अकालजनितान्वायूञ्स्तथा ब्राह्मणसत्तम
उवाच तान् महाभाग देवानामधिपस्ततः ३७
प्लावयन्तु पुरं चेदं नांदीमुखनिवासजम्
सबालस्त्रीपशुनरं सरत्नं च सुतोरणम् ३८
उन्मत्ता ब्राह्मणाश्चैते करिष्यन्ति महाद्भुतम्
गृहीष्यन्ति शुभं स्थानमस्माकं स्वर्गजं शुभम् ३९
विद्याधनमदेनापि मन्यन्ते ते न कानपि
तथेत्युक्त्वा गताः सर्वे वायवो मेघसंयुताः ४०
तद्देशं च महाभाग ह्यरण्यग्रामसंयुतम्
चक्रुर्जलस्थलमिति सर्वेषां विस्मयैः सह ४१
हाहाकारस्ततो जातो ग्रामे नांदीपुरे शुभे
एवं केचित्त विप्रेन्द्राः प्लुताः साकं स्ववंशजैः ४२
गोत्रैकादशजाश्चैव नगरे तत्र संस्थिताः
कौंडिण्याश्च तथा चंद्रात्रेयाश्च गौतमास्तथा ४३
औपमन्यवःकौशिक्यावात्स्यसागार्ग्यकास्तथा
जातूकर्ण्या स्तथान्येऽपि मौद्गलाश्च तथापरे ४४
कार्ष्णात्रियाः कौशिकाश्च काश्यपाश्च तथैव हि
शांडिल्याश्च सपुत्रास्ते सर्वे सहकुटुंधकाः ४५

दिशो दशाभ्यद्रवन्त संत्रस्ता भयमानसाः
देहमात्रं समादाय गतास्ते च दिशासु च ४६
एवं नांदीपुरे रम्ये तीर्थान्यायतनानि च
गृहाण्युपवनानि च वायुभिश्च समंततः ४७
सिकताभिः स्थलं तत्र क्रियते सर्वतो भृशम् ४८
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ इन्द्रकोपो नाम त्रिचत्वारिंशत्तमोऽध्यायः

## अध्याय ४४

ब्रह्मोवाच
ततः कालेन महता तत्तीर्थे निर्जने स्थिते
सिंह व्याघ्र समाकीर्णे मृग पक्षिभि रन्विते १
नाना गुल्मलता कीर्णे नाना सत्वनिषेविते
आजगाम महाबाहुर्नंदो नाम माहबली २
जीर्णोद्धारः कृतस्तेन समानीता द्विजोत्तमाः ३
मरीचिरुवाच
कस्मिञ्जातः कुले नंदः किंवीर्यः किं पुराक्रमः
कथमानीतवान् विप्रान् तन्मे वद जगत्प्रभो ४
ब्रह्मोवाच
योऽयं रिपुंजयो नाम बार्हद्रथोत्पन्न स्तस्य शुनको नामामात्यो भविष्यति ५
सचैनं स्वामिनं हत्वा स्वपुत्रं प्रद्योतनामान मभिषेक्ष्यति । तस्यापि
पालकनामा पुत्रो भविता ६
ततो विशाखयूप स्तत्पुत्रो जनकस्तस्य नंदि वर्धन इत्यष्टत्रिंशदुत्तरैकशतं
प्रद्योतन पुत्राः पृथिवीं भोक्ष्यन्ति । इति सर्व पुराणेषु प्रसिद्धम् ७
ततः शिशुनागा राजानो भवितारः । ततः प्रथमः शिशुनागः तत्पुत्र श्च
काकवर्णो भविता तस्य क्षतधर्मा तस्यापि च क्षत्रोजातः ८
तत्पुत्रो विधिसारस्ततोऽजातशत्रुस्तस्माद्दर्भको ।
दर्भकाच्चोदयस्तस्मान्नंदिवर्धनस्तत्पुत्रो महा नंदीत्येते शैशुनागा दश पुत्रा
स्त्रीणि वर्षशतानि षष्ठ्यधिकानि भविष्यन्ति ९
महानंदीसुतश्च शूद्रागर्भोद्भवो अतिलब्धो महापद्म स्तस्य पुत्रो नंदः परशुराम
इवापरोऽभवत् १०

सर्वशूद्रधर्म प्रवर्तकः क्षत्रिय धर्मोच्छेदकः
स्वयं शूद्र अन्यानपि स्वतुल्यान् करिष्यमाणो धर्ममुत्थापयिष्यति ११
ततः सर्वे राजानः शूद्रा भविष्यन्ति ।
तेषां मध्ये नंद इतिनामा शूरः सात्विकः सकलवसुधाधिपोऽभवत् येन दशदिशां पतयो वशीकृताश्चयः सकलभूभृतां वशीकर्ता तेन नंदीग्रामं पुनर्वासितं तेनेन्द्रकोपतो गता नांदीमुखा नरा नेष्यन्ते १२
ब्रह्मोवाच
कदाचित्कौतुकाविष्टो मृगयारसिको भृशम्
आजगाम महारण्ये नंदीपुरनिबासजे १३
तत्रारण्ये शुभस्थाने नाना विहगसेविते
शूकरांश्च मृगान् व्याघ्रान् जघान स विशांपतिः १४
एवं च क्रिडताऽनेन कपोतं प्रति संदधे
धनुः कर्णान्तमेवायो स्वर्णपुंखं महाशरम् १५
मुमोचतं प्रजानाथश्चापुंखाग्रं भुवंगतम्
गृहीत्वाकर्षयामास पुंखाग्रे तं महाशरम् १६
आकर्षिते शरे तत्र गर्ते च सुमहाद्युतिम्
तेजः पुंजं ददृशाथो विस्मितान्वितमानसः १७
तान्वै चाज्ञापयामास रथवारान् महाबलान्
मार्गयन्तामिमां भूमिं वर्तते किमिहात्रवै १८
ते तथा प्रेरिता स्तेन तांमहीमन्वशोधयन् १९
तत्र संशोधिते दृष्टमणुं स्वर्णमयं तदा
आश्चर्यं समनुप्राप्तः संमूढ इव चाभवत् २०
कपोतश्चा प्युवावायो राजानं वरया गिरा
कथं वां मुक्तवान् बाणं राजन् सर्वहितेरत २१
उदरार्थं न कर्तव्यं परेषां पीडनं विभो
देहे पंचत्वमापन्ने प्रभो वै पंचभौतिके २२
न कलत्राणि पुत्राश्च न धनानि सुहृज्जनाः
अनुगच्छंति राजेन्द्र धर्मस्तिष्ठति केवलः २३
आचारविमुखा ये वै परपीडासु तत्पराः
परापवादनिरता स्ते दैवेन विडम्बिताः २४

भगवन्मायया मूढाः स्वार्थीभूताश्चरन्ति हि
आवृता नैव पश्यन्ति चांधीभूताश्च दुष्कृताः २५
राजोवाच
कस्त्वं पक्षीन्द्र वद मे ज्ञानवानिव दृश्यसे
कथयस्व महाबाहो धर्मं मे धर्मवित्तम २६
कपोत उवाच
शृणु राजन् महाबाहो संक्षेपेन विशांपते
ब्रह्मक्षत्रियविट्शूद्रैः स्वोचिताचार तत्परैः २७
भाव्यं स्वाश्रम धर्मैश्च परदारपराङ्मुखैः
षट्कर्मनिरतैर्भाव्यं ब्राह्मणैर्वेदपारगैः २८
शालिग्रामाः सदा पूज्याश्चतुर्वर्गपरायणैः
राजोवाच
शालिग्रामाः कथं पूज्याः कीदृशा स्तद्वदस्व मे २९
एतन्मे संशयं पक्षिन् विस्तरेण कृपां कुरु
कपोत उवाच
शालिग्रामशिलांभेदो मूर्तिवर्णश्च कथ्यते ३०
तथैव भगवंस्तत्र क्षेत्रवर्णं शुभाशुभम्
श्यामाः पीतास्तथा श्वेताः कृष्णा नीलास्तथैव च ३१
पांडुराःकृष्णवर्णा श्च कपिला इति वर्णजाः
कपिला स्त्रीहरा ज्ञेया नीला लक्ष्मीप्रदा स्मृता ३२
धनवृद्धिप्रदा श्यामा शुक्ला मोक्षप्रदा स्मृता
पीताधनकरी ज्ञेया रक्ता राज्यप्रदा स्मृता ३३
अतिरक्ताऽऽरोग्यकरी कृष्णा कीर्तिकरा तथा
दुर्दरं दग्धमुखकं दारिद्र्यकर दुःखदम् ३४
बन्धनं बद्धचक्रं च त्रिकोणं परिवर्जयेत्
गौरा शत्रुहरा ज्ञेया बिंदुना पुत्रनाशिनी ३५
विमला त्वर्थहानिः स्यात् कलहक्षयमेव च
हिरण्य दामोदर विश्वरूप नृसिंह वैकुंठ जनार्दनेति ३६
सुदर्शन श्रीधर वासुदेव लक्ष्मीमुरारे हि मुकुंद कृष्ण ।
गदाधर श्रीपतिपुष्पमालिनौ

श्रीवत्सनामा पुरुषोत्तमाख्यः ३७
शिलाचतुर्विंशतिनामधेया
प्रोक्ता तवायं धरणीधराख्यः ।
श्रीकेशवेश प्रभुयद्मनाभ
सङ्कर्षणाधार जगन्निवास ३८
सदा पठेद्यस्तु सदा महात्मा
तस्यश्रियः सन्ति च सर्वदा गृहे ३९
ब्रह्मोवाच
हिरगयरेषायुक्तांगो वर्तुलो मध्य उन्नतः ४०
हिरगयगर्भनामाव महापातकनाशनः
वनमाली सदावर्तो मध्ये चक्रं च सुंदरम् ४१
दामोदरः सविज्ञेयो ब्रह्महत्यापहारकः
स्निग्धं श्याम बहुचक्रं वर्तुलं चापिशोभनम् ४२
विश्वरूपः स विज्ञेयो यज्ञकोटिफलप्रदः
नृसिंहं पीतवर्णाभं महाचक्रं मुखेंऽकुरम् ४३
यतीनां पूजितं नित्यं सत्यलोकप्रदायकम्
मधुवर्णं महास्थूलं चक्रं वा यदि संस्थितम् ४४
वैकुंठं देवदेवेशं ब्रह्मलोकप्रदायकम्
चक्रं च पृष्टदिग्भागे श्यामनामसुवर्णकम् ४५
सुदर्शनं शलाकाच पूजितं सर्वकामदम्
पक्वजम्बूफलाकारं दक्षिणांगे च चक्रिणम् ४६
श्रीधरं देवदेवेशं महासिद्धिप्रदायकम्
शिलास्थूलं महाचक्रं श्यामं चक्रविदारकम् ४७
मध्यचक्रं सदासूक्ष्मं दक्षिणांगे च चक्रिणम्
मुरारिं देवदेवेशं कष्टव्याधिविनाशनम् ४८
शिला शुक्लशलाका च शुभ्रं चकं सुशोभितम्
वनमाला च विज्ञेया ह्यश्वमेधफलप्रदा ४९
चक्रद्वयं द्वयं यस्य श्यामाङ्गो वर्तुलाकृतिः
देवो गदाधरो नाम राजसूयफलप्रदः ५०
श्रीफलाकार सोत्तुंगं पतच्छायासु चक्रगम्

श्रीवत्सनाम विज्ञेयं स्त्रीहत्यापापनाशनम्  ५१
सच्छिद्रं वर्तुलं श्यामं वनमाला सुशोभितम्
पुरुषोत्तमः स विज्ञेयः सिद्धिकोटिफलप्रदः  ५२
पूर्वं पश्चिमदिग्भागे चक्रं यस्य च दृश्यते
केशवं नाम देवेशं महासिद्धिप्रदायकम्  ५३
शुभ्रं शुष्कं चतुष्कं च चक्रं यस्यविराजते
संकर्षणं महादेवं पूजनं यस्य दुर्लभम्  ५४
दक्षिणे चोत्तरे वापि चक्रं द्विद्वेधा यदा भवेत्
हरिहरं च विज्ञेयं पृथ्वीपूजनवत्फलम्  ५५
श्यामं स्थूलं मुखे सूक्ष्मं मध्ये चक्रं प्रदृश्यते
पद्मनाभं विजानीयात् सदानंदा पुनर्भवम्  ५६
द्वारमेकं द्विधाचक्र मन्योन्यं चैव दृश्यते
देवं प्रद्युमम्न नामाख्यं राजसूयशताधिकम्  ५७
वर्तुलाकार चक्रं च शिला स्थूला च शोभिता
धरणीधर नामानं सर्वयज्ञफलप्रदम्  ५८
शिला चतुर्विंशतिमत्र नित्यं
मूर्तीस्तथैवं परिपूजयेन्नरः ।
वाराणसी तत्र सदैव तिष्ठे
द्देवो हरिस्तत्र सदाशिवोऽपि  ५९
आवाहनासनं पाद्यमर्चा षोडशभिस्तथा
श्रुत्युक्तैरुपचारैश्च पूजनीयः प्रयत्नतः  ६०
पृथिव्यां यानि तीर्थानि वर्तन्ते मूर्तयोऽपि याः
दर्शने पूजने तेषां यत्फलं लभते नरः  ६१
तत्फलं लभते राजन् शालिग्राम शिलार्चनात्
किं बहूक्तेन राजेन्द्र यादृक् फलमवाप्नुयात्  ६२
तथा शृणु विशंनाथ धर्मं साधारणं शृणु
अहिंसा च प्रकर्तव्या प्रोक्तं वेदाङ्गवेदिभिः  ६३
अतथ्यां नोच्चरेद्वाचं सत्यां बाणीमुदीरयेत्
सत्यवादी सदापुतो योगिनां लभते गतिम्  ६४
मनःशरीरवाचाभिः परस्कं नाहरेत्दका

लोभेन हरते यस्तु रौरवं नरकं व्रजेत्  ६५
शौचाचारश्च कर्तव्यो देहशुद्धि प्रकाम्यया
शौचाचारविहीनस्य समस्ता निष्फला क्रियाः  ६६
एकादशेन्द्रियाएयेवं वशीकुर्यात् प्रयत्नतः
दानं देयं यथाशक्ति तथा देहस्य शोधनम्  ६७
ब्रह्मोवाच
एकादशीव्रतं कुर्यात् निर्वेधं दोषवर्जितम्
ब्रह्महत्यादिका त्पापा न्मुच्यते नाम संशयः  ६८
पिचुमंदं तथाश्वत्थं चिंचिणीदशकं तथा
कपित्थामलके बिल्वीं पञ्चाम्रान्रोहयन्ति ये  ६९
नरकं च न पश्यन्ति ते नराः स्वर्गगामिनः  ७०

इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ कपोतोपाख्यानं
नाम चतुश्चत्वारिंशत्तमोऽध्यायः

## अध्याय ४५

राजोवाच
कथयस्व महाबाहो पक्षिराज महाशते
भूमावस्यां महाभाग हैममंडं महाद्युति  १
दृश्यते तन्नजानीमो दिव्य भूमिस्तथा परम्
दिव्यरूपभृतां श्रेष्ठ चे उजानासि वदस्व मे  २
कपोत उवाच
यदिपृच्छसि राजेन्द्र शृणुत्यैकाग्रमानसः
लक्ष्मीनारायणायत्र वर्तेते स्वनिवेतने  ३
दिव्यं स्वर्णमयं चात्र तेजो राशिं महाद्भुतम्
नांदीपुरमिदं दिव्यं विश्वकर्माभिनिर्मितम्  ४
स्वर्णप्राकारसदनं मुक्ता तोरणभृषितम्
सिक्ताभिः सकलं प्याप्तं शक्रकोपेन सर्वतः  ५
विप्रा नांदीमुखाश्चात्र बभूवुर्द्विजसत्तमाः
वेदाङ्गं शास्त्रविविदो ज्ञानिनः स्वर्गकामुकाः  ६
चतुर्विंशति गोत्राणि बभूवुश्च विशांपते

दशैकानि ततो नाशमाप्तानि पृथिवीपते  ७
त्र्योदशस्था विप्रेन्द्रा गतास्ते सर्वतो दिशम्  ८
तेषां स्थानानि नामानि प्रोक्त्वा तं च महीपतिम्
अंतर्दधे पक्षिराजः सर्वेषां विस्मथापहः  ९
राजापि विस्मयं प्राप्तः क्षते सर्वतो दिशम्
स रभकीयान् जनानाह मेक्षतां च महीमिमाम्  १०
ते तथान्ये समाहूता राज्ञा तेनापि नोदिता
महीं संशोधयामासु र्नांदीपुरसमीपगाम्  ११
आविरभून्निकेतं तल्लक्ष्मीनारायणात्मनोः
सौवर्णं दीप्तियुक्तं च भ्रात्रमानं सुतेजसा  १२
सप्राकारं सननरं गृहैश्चाप्युपदेशोभितम्
तदा तद्भूपयामास रत्नैः कांचनसंयुतैः  १३
द्वाराणि भूपयामास मुक्तातोरणकैस्तदा
पताकामिश्च शोभेत यया चैवामरावती  १४
वेद्यां स्वर्णमयाः कुंभाः सोदका राजन्ते भृशम्
निवासं कृतधांस्तत्र सादरोधः सपुत्रकः  १५
तं देशं भूपयामास जनैर्ग्रामैरलंकृतम्
समृद्धं पशुभिर्धान्यैर्धनैश्च सुमहाधनैः  १६
चक्रे राजाविरचतोऽसौ राज्यं नंदो महायशाः
ततः स्त्रानु---  राजा प्रोवाच परया गिरा  १७
नंद उवाच
गम्यतां मम वाक्येन यत्र नांदीमुखाः स्थितः
आनयन्तु महाभागानत्र नांदीपुरे नरे  १८
यतः क्षे--- सदैतेषां वल्लभानां हि वात्मनः
तथेत्युक्त्वा मताः सर्वे यत्र नांदीमुखा द्विजाः  १९
विनयेनान्वितं वाक्यं प्रोवाच द्विजसत्तमान्
यथा प्रोक्तं सुमहता नंदेन च तथानघ  २०
श्रुत्वा तं वाक्यममलं हर्षिताश्च द्विजोत्तमाः
दिष्ट्यादिष्ट्येति भद्रं च प्रोचुश्च सुसमाहिताः  २१
आरोप्य शकटे सर्वं ययुः स्वं स्वं निकेतनम्  २२

राजापि तान् समाज्ञाय समायातान् द्विजोत्तमान्
सन्मुखं निर्ययौ तत्र भेरीतूर्यसमन्वितः २३
सन्मान्य शुभ वाक्येन गीतयादित्र संयुतान्
वेदनिर्वोषसहितान् वेशयामास तान् गृहे २४
अथ ते ब्राह्म--- --- स्थिताः स्वे स्वे निकेतवे
श्रुत्युक्तानि च कर्माणि चक्रुर्नांदीमुखास्तदा २५
इति श्री वह्निपुराणे नांदीमुखोत्पत्तौ विप्रागमननामा
पंचचत्वारिंशत्तमोऽध्यायः

## अध्याय ४६

ब्रह्मोवाच
एवं बहुसमाःसोपि राज्यं चक्रे ह्यकंटकम्
नांदीमुखानां विप्राणां प्रभावाद्यज्ञकर्मणः १
एवं बहुतिथे काले समासन्ने कलं तथा
समासन्ना मही म्लेच्छैर्दुष्टैस्तैः पालान्वितैः २
म्लेच्छैः सर्वैस्ततस्ते म ह्यत्र कृत्वा समावृताः
पुरी नांदीमुखानां तु तदा व्याकुलतां गता ३
नंदोऽपि तान् विनम्याथ किंकार्यमिति चात्रवीत् ४
अथ ते ब्राह्मणाः सर्वे सप्रेत्येति च चक्रिरे
स्तुत्यापराजितायाश्च होमं चक्रे विजानतः ५
मरीचिरुवाच
अपराजितायाः स्तोत्रं कथयस्व प्रसादतः
यस्य संश्रवणादेव नारिभिः परिभूयते ६
ब्रह्मोवाच
ततः सिद्धांविकां नत्वा जप्त्वा तामपराजिताम्
महाविद्यां वैष्णावीं च साधनेन समन्विताम् ७
यस्याः श्रवणमात्रेण सर्व दुःखक्षयोभवेत्
तां विद्यां कीर्तयिष्यामि शृणुध्वं विप्रपुंगवाः ८
अस्या महाविद्याया महावैष्णव्या अपराजितायाः श्री वामन ऋषिः
गायत्र्युष्णिगनुष्टुप जगती छंदांसि श्री लक्ष्मीनृसिंहो देवता चतुर्वर्ग

फलावाप्तये जपे विनियोगः ९
नमोऽनंताय सहस्रशीर्षाय क्षीरोदार्णवशायिने । शेषभोगपर्यंकाय गरुडवाहनाय । अजेयाय अप्रमेयाय अपराजिताय पीतनीर्मलवाससे १०
वासुदेव संकर्षण प्रद्युम्न अनिरुद्ध हयग्रीव वराह दामोदर नृसिंह वामन त्रिविक्रम परशुराम राम वरप्रद नमोऽस्तुते स्वाहा ११
असुरदैत्यदानव भूतप्रेतपिशाच कुष्माण्डान् पच पच मथ मथ विध्वंसय विध्वंसय शंखेन वज्रेण चक्रेण शूलेन चापेन भस्मीकुरु स्वाहा १२
सहस्रवाहन सहस्रप्रहरणायुध जय जय विजय विजय अपराजित अप्तिहत सहस्रनेत्र ज्वल ज्वल प्रज्वल प्रज्वल १३
विश्वरूप नित्यरूप बहुरूप माधव मधुसूदन महावराह महापुरुष वैकुंठ नारायण पद्मनाभ गोविंद दामोदर हृषीकेश केशव सर्वाशुभोत्सादन सर्वभूतवशंकर सर्वदुःखप्रभेदन सर्वयंत्रप्रभेदन सर्वनागप्रवंधन सर्वदेवमहेश्वर सर्वबंधविप्रोक्षण सर्वदैत्यप्रमर्दन सर्वज्वरप्रणाशन सर्वग्रहनिवारण सर्वपापप्रणाशन जनार्दन जनानंदकारक नमोस्तुते स्वाहा १४-१६
य इमामपराजितां परमवैष्णवीं पठितसिद्धां पठति जपति शृणोति स्मरति धारयति कीर्तयति वा न तस्य वाय्वग्निवज्रोपलभयं विषभयं न समुद्रभयं न ग्रहभयं न चौरभयं न श्वापदभयं कदापि न भवेत् १७
न विद्युद्रात्र्यंधकारस्त्री राजकुल विषाष्टप्रबंध सागर गद वशीकरण विद्विषोच्चाटनबंध भयवान् न भवेत् १८
एतैर्मंत्रैरुदाहृतैः सिद्धैः संसिद्धपूजितैः
ततो यथा नमस्ते स्तु ह्यभये चानुषिञ्जिते १९
असिते अमृते अपराजिते जिते पठितसिद्धे स्मरंति विद्ये एकानेके उमेध्रुवे अरुंधति सावित्रि गायत्रि जातवेदसि मानसे २० सरस्वति धरणि धारिणि घिरणि सौदामिनि अदिते दिते विनते गौरि गांधारि मातंगि कृष्णे यशोदे सत्यवादिनि ब्रह्मवादिनि कालि कपालिनि निद्रे सत्ये मायाविनि जलगतं स्थलमतमंतरिक्षगतं मा रक्ष रक्ष सर्वभूतोपद्रवेभ्यो रक्ष रक्ष स्वाहा २०-२१
यस्यास्तु पतते पुष्पं गर्भो वा पात्यते यदि ।
म्रियन्ते बालका यस्याः काकवंध्या च या भवेत् २२
सा त्विमां धारये द्विद्या मेतैर्दोषैर्न विद्यते

रणे राजकुले द्यूते नित्यं तस्य जयो भवेत् २३
शस्त्रं धारयतां ह्येषा समरे कांडधारिणाम्
गुल्मशूलादिरोगाणां क्षिप्रं नाशयते यथा २४
शिरोरोगज्वराणां वै नाशिनी सर्वदेहिनाम्
तद्यथा हर हर कालि सर सर गौरि धम धम विद्ये सुविद्ये वसुविद्ये आले माले तमाले गंधे बन्धे पावनविद्ये नाशय निःसंहर दुःस्वप्नान् विघ्नान् नाशय रजनीसंधे दुंदुभि भानवेगे शंखिनि चक्रिणि वज्रिणि शूलिनि अल्पमृत्युविनाशिनि विश्वेश्वरि द्रविणि द्राविणि केशवदैत्ये पशुपति सहिते दुंदुभिदमनि शवरि किराति मातंगि हुं हुं जुं जुं क्रुं क्रुं कुरु स्वाहा २६-२७
अमुका य इमां द्विषन्ति प्रत्यक्षं परोक्षं वा तान् सर्वान् दंभय दंभय मर्दय मर्दय तापय तापय शोषय शोषय उच्चाटय उच्चाटय उत्सादय उत्सादय ब्रह्माणी माहेश्वरी वाराही वैनायकी पूर्वदिशि आग्नेयि चामुंडे वारुणि वायवि रक्षोक्ते प्रचंडविद्ये रक्षोपेन्द्रभोगिनि विजये शांति स्वस्तिपुष्टिवर्धिनि कामांकुशे कामदुघे सर्वकामवरप्रदे सर्वभूतेषु मां प्रियं कुरु कुरु स्वाहा २७-२९
आकर्षणे आवेशिनि ज्वालामालिनि रमणि रामणि धरणि धारिणि तपनि तापिनि मदनोन्मादिनि शोषिणि संमोहिनि नीलपताके महानीले महागौरि महाश्रिये महाचान्द्रि महासेने आदित्यरश्मि जाह्नवि यमघंटे किंकिणि चिंतामणि सुरभि सुरोत्पन्ने सर्वकामदुघे तद्यथा मनीषिणां कार्य सिद्धिस्तथा मे सिध्यतु स्वाहा । यतश्चैवागतं पापं तत्रैव प्रतिगच्छतु ३०-३३
व्याहृतिहोमः । बले महाबले असिद्ध असिद्धसाधनानि स्वाहा ३४
एषा अमोघा अपराजिता पठितसिद्धा महाविंद्या अनया महाविद्यया भगवान् श्री नृसिंहो देवता प्रीयतां ममचिंतितं कार्यं सिध्यतु । गां गीं गूं गणपतये स्वाहा । क्षां क्षीं क्षूं क्षेत्रपालाय नमः स्वाहा प्रीयताम् । त्रिसंध्यं जपः कार्यः ३५-३६
य इमां साधयेत्प्राज्ञो वैष्णवीमपराजिताम्
विजयः संयुगे भूया न्मनोबुद्धिसमाधिभिः ३७
य इमां प्रजपेन्नित्यं साधनेन विनापि हि
तस्यापि सर्वविघ्नानि नश्यन्ति द्विजसत्तमाः ३८
ब्रह्मोवाच

प्रणवादि नमोऽन्तश्च चतुर्थ्या च समन्वितः
पूजाविशेषः कर्तव्यः स्वाहान्तैर्होम उच्यते ३९
प्रतिदैवतमंत्रैश्च स्वगृह्योक्तविधानतः
होमं कुर्यात्प्रयत्नेन सर्वकामसमृद्धये ४०
बन्ध्या स्त्री धारयेद्गर्भमवश्यं पुत्रमाप्नुयात् ४१
अपूपान् मोदकांश्चैव पायसं जुहुयादथ
त्रिमधुराक्तसघृतं शतपत्रसमन्वितम् ४२
शमीपालाशसंयुक्तं जुहुयाच्च समृद्धये
अष्टम्यां च चतुर्दश्यां संक्रान्तौ पर्वसंभवे ४३
कार्या पराजिता पूजा सर्वकामसमृद्धये
पायस सर्वकार्येषु उत्तमानि फलानि च ४४
बिल्वीदलानि रम्याणि जुहुयात्सर्वकामुकः
वश्यार्थेष्वप्यपामार्ग समिधो जुहुयादथ ४५
सर्वामयविनाशाय ह्यल्पमृत्योश्चशांतये
दुर्वाहूतिः पलाशस्य समिधो जुहुयाद्यवैः ४६
दुष्टशत्रुविनाशाय समिधोऽक्षस्य कीर्तिताः
दशरात्रं दशावर्तं पठेद्यः प्रयतः शुचिः ४७
ब्रह्मचारी भूमिशायी संपूर्णं लभते फलम्
दशांशेन महाहोमः कर्तव्यः शुभमिच्छता ४८
राजोद्भवं महाघोरं बंधनं व्यंजनं तथा
सर्वसंकटदुःखानि नाशयेज्जपतः शिवां ४९
इन्दुमण्डलमध्यस्था होमकुंडेन्दुसन्निभा
ध्यात्वायो विन्यसेद्वक्रे सभार्यः पूज्यतां व्रजेत् ५०
आश्विनस्य सिते पक्षे दशम्यां विजयार्थिभिः
दत्वाहोमं विधानेन यात्राकार्या नरैः सदा ५१
षण्मासाभ्यंतरे मृत्युर्यदा भवतिदेहिनाम्
तदायं विस्मृतिं याति मंत्रो मालासमन्वितः ५२
अल्पमृत्युहरा देवी सर्वामयविनाशिनी
दुःखदारिद्र्यरोगाघ्नी महामायाऽपराजिता ५३
कंठे बाहोस्तथा मूर्ध्नि धार्या देवी शुभार्थिभिः

चौराहिवह्नि भूपालराजघोरभये तथा ५४
अमृतं तद्भवेत्तस्य नाल्पमृत्युर्भवेत् क्वचित्
करे बद्धवा महारक्षां विचरेन्निर्भयः सदा ५५
लिखेद्रोचनया भूर्जे कंठे बाह्वोर्निधारयेत्
महारक्षा भवेदेषा सर्वदोषविनाशिनी ५६
हरिचंदनमिश्रेण रोचनाकुंकुमेन च
लिखित्वा भूर्जपत्रेण धार्यं तत्तु नरैः सदा ५७
पुष्पधूपपवित्रैश्च बल्योपहारपूजनैः
पूजयित्वा यथान्यायं शातकुंभेन वेष्टयेत् ५८
रोचनाकुंकुमाभ्यां च समभागैर्न चंदनम्
मालामंत्रं जपित्वातु तिलकं कारयेद्बुधः ५९
तिलकस्य प्रभावेण त्रैलोक्यं वशमानयेत्
य इमां धारयेद्वत्स समरे शत्रुसंकुले ६०
विजयस्तस्य चावश्यं सर्वशत्रुक्षयो भवेत् ।
अथ मालामंत्रः । ॐ ह्रीं नमः । कृष्णवाससे शतसहस्रकोटिसिंहवाहने
सहस्रवदने महाबले । अजिते अपराजिते श्री श्री प्रत्यंगिरे सर्वस्यैव
पराक्रमविध्वंसिनि परमंत्रच्छेदिनि सर्वभूतदमनि सर्वाहितान् बंधय बंधय
सर्वविघ्नान् छिंधि छिंधि निकृंतय निकृंतय सर्वदुष्टान् भंजय भंजय
ज्वलजिह्वे करालवक्त्रे सर्वयंत्रान् स्फोटय स्फोटय शृंखलान् त्रोटय त्रोटय
एभिर्मितं कार्यं साधय साधय श्रीप्रत्यंगिरे नमोऽस्तुते ६१-६२
त्रिकोणं षट्कोणं च तदूर्ध्वं षट्कर्णिका तिस्रः ।
ततोऽष्टदलं शुभं प्राकारं वै लिखेत्ततो देवीं प्रपूजयेत् ६३

इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ अपराजिता स्तुति नाम
षट्चत्वारिंशत्तमोऽध्यायः

## अध्याय ४७

ब्रह्मोवाच
जाप्यं होमं विधानेन मंत्रेणान्येन चक्रिरे
पायसैर्मधुसंयुक्तैः सघृतैर्मधुरान्वितैः १
नानापत्रैः फलैश्चापि वस्तुभिश्च समंततः

ततस्तुष्टा जगन्माता वक्रांगी प्रत्युवाच तान्  २
वरं वरयतां विप्रा यदिष्टं तद्ददामि वः
श्रुत्वा वाक्यं सकरुणं प्रत्यूचुर्द्विजसत्तमाः  ३
नांदीमुखा ऊचुः
प्रसादं कुरुनो मातर्म्लेच्छधूम्रादय स्ततः
पीडयन्ति जनान् सर्वान् राजानं च पुनः पुनः  ४
लक्ष्मीरुवाच
अनेन स्तवराजेन लक्ष्मीनारायणात्मनोः
भवतां शत्रवो नाशं यान्तु वाक्यान्ममैव हि  ५
अन्तर्दधे तदा वत्स देवी दिव्यस्वरूपिणी
ततस्ते ब्राह्मणाः सर्वे राजानं गाङ्गकैर्जलैः  ६
अभ्यसिञ्चन्महामंत्रैः श्रत्युक्तै रागमोदितैः
ततस्तान् ब्राह्मणान्नत्वा प्रययौ स नराधिपः  ७
रथमास्थान संन्नाहं धृतवान् दिव्यसारथिम्
स्नातः शुक्लाम्बरधरः कृष्ण कृष्णेति चाब्रुवन्  ८
हरिचंदनलिप्तांगः पुष्पमालासुशोभितः
गल्लकीयशिलाकंठः स्वसेनापरिवारितः  ९
भेरीपटहतूर्याणां स्वनेन सह सांप्रतम्
करिघंटारणत्कारैर्हिंकारैर्वाजिनां तथा  १०
जगाम सन्मुखं तेषां बहिर्ग्रामाच्च सांप्रतम्
तत्राभूत्तुमुलं युद्धं भूपालम्लेच्छयो स्तदा  ११
सैन्ये च सुमहाघोरे नद्यो रुधिरजास्तथा
कोलाहलेन सेनायाः संमूढा इव चाभवन्  १२
नांदीमुखप्रभावाच्च मृतकल्पा इवाभवन्
तेषा मधिपतिस्तत्र म्लेच्छः संपीडितो मृशम्  १३
विसारथिर्विरथस्क श्चचार पृथिवीतले
लोहितो बाणविद्धांगो व्याकुलीभूतमानसः  १४
रणभूमेर्विनिष्क्रांतो गतोऽसौ च पलायितः
तेषां सैन्ये तदा जातो हाहाकारो द्विजोत्तम  १५
सैन्यं संक्षयतां प्राप्तं म्लेच्छानां दुष्टचेतसाम्

म्लेच्छसैन्ये तथा जाते शब्दस्तत्र जयान्वितः १६
नगरे स समायातो नंदो राजा विशंपतिः
नंदिग्रामे तदा वत्स मांगल्यानि गृहे गृहे १७
गीत वादित्रं निर्घोषा वेदानां ध्वनयस्तथा
ब्राह्मणाः सूर्यसंकाशाः कामुकाः कार्यलोलकाः १८
एवं राज्यं तदा चक्रे कोशलाधिपतिस्तदा
तथैव बहु कालेन चोत्याख्यो म्लेच्छमंडनः १९
नंदिग्रामाधिपस्यैव प्रजानां च भयावहः
ततस्तान् शरणं प्राप्तो विप्रान्नांदीमुखोत्कटान् २०
यत्रतत्रत्य जीवानां बलंविप्राः प्रकीर्तिताः
तथा तैर्ब्राह्मणैर्वत्स स्तुतिर्हनुमतः कृता २१
तथा तस्य प्रभावेण म्लेच्छा स्ते च क्षयं गताः २२
मरीचिरुवाच
कथयस्वप्रसादेन स्तोत्रमेतन्महाप्रभो
यत्प्रभावात्सुरंश्रेष्ठा त्रैलोक्यं वशमानयेत् २३
शत्रवो नाशमायान्ति धनं च विपुलं भवेत्
ब्रह्मोवाच
गुह्याद्गुह्यतरं वत्स स्तोत्रमेतन्महामुने २४
यस्यश्रवणमात्रेण हनुमाँस्तुष्टिमाप्नुयात्
भवेच्च मानसः कामः संकटं तस्य नोभवेत् २५
ॐ अंजन्यास्तनयः समीरणसुतो यः फाल्गुनीयोद्भवः ।
श्रीरामप्रणतैकधामनिलयः सत्यप्रतिज्ञानिधिः २६
पिंगाक्षोद्भुतविक्रमो जलनिधेरुल्लंघने धीरधी
र्हेलोत्पाटितशैलशृंगघटितप्रत्यग्र सेतुस्थितिः २७
लंकाधीश्वरदर्पहा जनकजाशोकान्तकृल्लक्ष्मण-
प्राणत्राणकरो जितेन्द्रियगणः सश्रीहनूमान्भटः २८
एतैर्नामभिरादरादुषसि यो निद्राक्षये कीर्तयेत्
नाशंयात्यथ कर्मदोषजनितो नित्यस्तृतीयोज्वरः २९
यो वारांनिधि मल्पपल्वलमिवोल्लंघ्यप्रतापान्वितो वैदेहीघनशोकतापहरणो
वैकुंठभक्तिप्रियः ३०

ईशादूर्जितराक्षसेश्वरमहादर्पा पहारी रणे सोपं वानरपुंगवो दिशतु नः प्रीतिं
समीरात्मजः ३१
वीराधिपो वानरराजमंत्री देवादिकार्येषु कृतोद्यमो यः ।
लंकाधिराजस्य कुलान्तकारी सोऽयं हनूमान् दिशतु प्रियं नः ३२
सीतासंदेशहारी यो वानराखिलयूथपः
प्रहंता चाक्षवीरस्य हनुमन्तं नमामि तम् ३३
अत्युग्रः सर्ववीरेषु राक्षसान्तकरो बली
प्रहन्ता च परेषां यस्तं वीरं प्रणमाम्यहम् ३४
इदं स्तोत्रं पठेद्यस्तु वृणुया द्वापि भक्तितः
तस्यवांछितसिद्धिश्च करोति हनुमान् भरः ३५
दशरात्रं दशावर्तं पठेद्यः प्रयतः शुचिः
शत्रवो नाशमायान्ति लक्ष्मीवृद्धिस्तथा गृहे ३६
ब्रह्मोवाच
एवं तैर्ब्राह्मणैर्वत्स स्तुतः सहनुमान् भटः
शत्रवो नाशयायाता वायुपुत्रप्रसादतः ३७
युगत्रयावसाने च कलावपि समागते
काश्मीराः कोणकाः काच्छा म्लेच्छा व्याप्ताः समंततः ३८
शापस्य कारणं वत्स म्लेच्छैर्ज्ञातं द्विजोत्तम
ततश्च तैः परैश्चापि द्विजेषु द्वेषमुद्धत् ३९
क्षत्रिया वीर्यरहिता ब्राह्मणाः शापसंयुताः
मंत्रा निर्वीर्यतां प्राप्तास्तैर्व्याप्तं च समंततः ४०
क्षत्रिया बलहीनत्वाद रक्षां कर्तुमनुद्यमाः
अथ ते ब्राह्मणाः सर्वे शक्ताः स्थातं न तत्र च ४१
संगन्तु कामुकास्तेच मध्यदेशद्विजोत्तमाः
शकटेषु समारोप्य धनानिविपुलानि च ४२
वासांसि च विचित्राणि रत्नानि च बहून्यपि
जीवसंरक्षणार्थं च ते द्विजा गन्तुकामुकाः ४३
पुत्रदाराः ससुहृदश्चारुह्य रथगजसु
चेलुस्ते मध्यदेशं हि त्यक्त्वा ग्रामं स्वकीयकम् ४४
शोकसंतप्तदेहाश्च भयविह्वलमानसाः

मध्यदेशं समागत्य तत्रत्यांश्च नरेश्वरान् ४५
आशीर्भिरभिनन्द्याथ तत्र वासं प्रचक्रिरे
सद्भिर्भूपतिभिश्चैषां बहुमानपुरःसरम् ४६
नांदीमुखानां विप्राणां सेवाचापि कृतामुदा
एकदा ते हि राजानस्तानूचुः परमान्मुनीन् ४७
भवतां द्रविणं विप्रा दत्त नो भूरितेजसः
विधाय दास्यं भवतां दास्यामः परमर्षयः ४८
कालेनाल्पेन विप्रेन्द्राः वयं त्वत्सेवका ह्यतः
प्रत्युक्तास्ते तथेत्येवं धनं दत्तं स्वकीयकम् ४९
कियता कालयोगेन मैत्री तेषामुपस्थिता
ब्रह्मोवाच
अथ तेपि समामंत्र्य मिथो भूमिसुरा अपि ५०
राजानश्च गताः सर्वे संमील्य सुनरेश्वरम्
मध्यदेशाधिपं भूपं श्रीभोजं सुयशोन्वितम् ५१
तमाशीर्भिः समामंत्र्य कथयामासुरप्यतः
नांदीमुखानां नगरं म्लेच्छैर्व्याप्तिं समंततः ५२
सुवाच्यैस्तान् समाज्याथ स राजा चिन्तयान्वितः
प्रयाणेऽथ मतिं चक्रे म्लेच्छाञ्जेतुं ससैनिकः ५३
भेरीमृदंगतूर्यादिवाद्यान् संवाद्य यत्नतः
आरुरोह रथं दिव्यं वरूथध्वजशोभितम् ५४
गतवत्यथ सेना सा रराज परमर्द्धिभिः
गजै रथैर्हयैश्चापि सपताकैः समंततः ५५
पटहाद्यनिनादैश्चा प्यतिबेलोदधिर्यथा
म्लेच्छाधीशश्च यत्रास्ते गतोऽसौ तत्र रोषितः ५६
श्रुत्वा द्विजानां संतापं बांच्छन् युद्धं नरेश्वरः
सिन्धोस्तीरे समास्थाय वाद्यवादान नादयत् ५७
तमागतं समाज्ञाय म्लेच्छाधीशो नरेश्वरः
आगत्य पुरतस्तेन पुनर्युद्ध मथाकरोन् ५८
तत्पुत्रेण च वीरोऽसौ युद्धे च प्रपलायितः
ततोऽमी देशदेशेषु गताः सर्वे द्विजोत्तमाः ५९

एकदा धनलुब्धेन नंदेन च पलायिताः
समागताश्च गोकर्णं तेनसाकं द्विजोत्तमाः ६०
इति श्री बह्निपुराणे नांदीमुखोत्पत्तौ विप्राणामागमनं नाम
सप्तचत्वारिंशत्तमोऽध्यायः

## अध्याय ४८

ब्रह्मोवाच
पुनरग्रे प्रवक्ष्यामि तीर्थान्याथतनानि च
सर्वपापहराण्येव श्रुतानि कथितानि भोः १
नंदीग्रामे पुरे रम्ये यत्कुंडं वर्तते द्विज
तत्र संस्नानमात्रेण सर्वपापात् प्रमुच्यते २
यत्र संस्थापयामास गंगां त्रिपथगामिनीम्
नीलकंठसमीपस्थां ब्रह्मलोकपितामहः ३
अस्मिन्यः पुरुषः स्नानं कृत्वेमं समवेक्षते
सर्वपापविनिर्मुक्तः शिवलोकं प्रयास्यति ४
करिष्यति यथावत्तु शपथं चात्र मानवः
असत्यं यास्यति क्षिप्रं सत्यं यस्य गृहं प्रति ५
तत्रासीच्छूद्रसंभूतः पौंड्रकोनाम नामतः
बालभावे समं मित्रैः सक्रीडति दिवानिशम् ६
हास्यभावेन तेनापि चिंतयित्वा द्विजन्मनः
सदैव यत्र संस्थाय हृतं मित्रस्य पुस्तकम् ७
कृताश्च शपथा स्तत्र स्नात्वा भागीरथीजले
अदुष्टचेतसा तेन दत्तवान् न्पुस्तकं च यत् ८
पुनश्च रुचिरं हास्यं कृत्वा तेन समं बहु
अथासारवभवत्कुष्टी तत्क्षणादेव गर्हितः ९
स त्यक्तो वान्धवैः सर्वैः कलत्रैरपि वल्लभैः
ततो वैराग्यमापन्नो भृगुपातं पपात सः १०
जातश्चतत्प्रभावेण कुष्टेन परिवर्जित
शास्त्रचौर्यकृताद्दोषान्मूकरूपः सहास्यकृत् ११
न कार्यः शपथस्तस्मात्तदग्रेऽपिलघुर्द्विज

अपि हास्योपचारेण ह्यात्मनः सुखमिच्छता १२
मरीचिरुवाच
तत्र तीर्थे महादेवी भवानी भक्तवत्सला
स्नुतं द्विजानां रक्षार्थं स्थितातत्र सदैव हि १३
यदा पराजिता विप्राः शक्रेण च महात्मना
तदा तदा कथं तेषां नाकारि शरणं विभो १४
यत्प्रभावा महादेवी वक्रांगीति च विश्रुता
विशेषतः समाचक्ष्व स्थापनं पूजनं तथा १५
ब्रह्मोवाच
नांदीग्रामपुरे देवी तत्रैवास्ति द्विजोत्तम
स्थापिता श्रद्धया पूर्वं ब्रह्मणा भूसुरैः सह १६
यया स महिषः पूर्वं निहतो दानवो रणे
कौमारव्रतधारिण्या मायाशतसहस्र--- १७
यदैतन्निर्मितमिदं पुरं भगवता किल
तस्य संरक्षणार्थाय तदा सा स्थापिता द्विज १८
पुरस्य तस्य रक्षार्थं तथा तत्पुरवासिनाम्
सर्वेषां ब्राह्मणेन्द्राणां भक्त्या भावितचेतसाम् १९
यस्तामभ्यर्चयेत्सम्यक् महानवमीवासरे
कृत्स्नं संवत्सरं तस्य न भयं जायते क्वचित् २०
भूतप्रेतपिशाचेभ्यः शत्रुवश्च विशेषतः
रोगेभ्यस्तस्करेभ्यश्च दुष्टेभ्योऽन्ये च एव च २१
यं य काममभिध्यायन् भुवलाष्टम्यां विशेषतः
तां पूजयति सद्भक्त्या स तदाप्नोत्य संशयम् २२
निष्कामस्तु समाप्नोति मोक्षंनास्त्यव संशयः
तस्या देव्याः प्रसादेन सत्यमेतन्द्वयोदितम् २३
तामाराध्य गताः पूर्वं सिद्धिं तत्र महीशुभः
ब्राह्मणाश्च तथान्येऽपि योगिनः परमेश्वरीम् २४
यस्तस्याः श्रद्धयोपेतः प्रकरोति प्रदक्षिणाम्
नित्यं संवत्सरं यावत् तिर्यक् योनौ न स व्रजेत् २५
तस्या आयतने पूर्व्याश्चर्यमभवत्किल

यत्तत्ते कीर्तयिष्यामि शृणुष्वैकायमानसः २६
आसीच्चित्ररणो नाम पूर्वं पार्थिवसत्तमः
दशार्णाधिपतिः ख्यातः सर्वशत्रुनिबर्हणः २७
शुक्लाष्टभ्यां सदा भक्त्या यत्तस्याः श्रद्धयान्वितः
अष्टोत्तरशतं यावत्प्रचकार प्रदक्षिणाम् २८
ततः प्रणम्य तां देवीं संप्रयाति पुनर्गृहम्
सैन्येन चतुरङ्गेन समंतात्परिवारितः २९
एवं तस्य नरेन्द्रस्य प्रदक्षिणरतस्य च
जगाम सुमहान् काले देव्या भक्तिरतस्य च ३०
कस्यचित्त्वय कालस्य स राजा तत्र संगतः
अपश्यद्ब्राह्मणाञ्श्रेष्ठान् देवी गृहसमाश्रितान् ३१
ततः प्रदक्षिणां कृत्वा तां देवीं स महीपतिः
अवस्थांस्तान् द्विजान्सर्वान्नमश्चक्रे समाहितः ३२
ततस्तैः सहितैस्तत्र समासीनः कथा शुभाः
राजर्षीणां पुराणानां विप्रर्षीणां तथैव च ३३
ततस्तस्मिन् कथान्ते च स पुष्टकैर्द्विजोत्तमैः
कौतूहलसमोपेतैर्विनतोवनतः स्थितः ३४
राजन् पुच्छमहे सर्वे वयं त्वां कौतुकान्विताः
तस्मात्कीर्तय चेद्गुह्यं न तदेवं व्यवस्थितम् ३५
मासि मासि यदष्टम्यां शुक्लायां च सुदूरतः
आगत्य देवलायाश्च प्रकरोपि प्रदक्षिणाम् ३६
यत्नेनास्याः परित्यज्य सर्वाः पूजादिकाः क्रियाः
नूनं चेत्सि पालं कृत्स्नं यत्प्रदक्षिणसंभवम् ३७
राजोवाच
सत्यमेतद्द्विजश्रेष्ठा यद्भवद्भिरुदाहृतम्
रहस्यमपि वक्तव्यं युष्माकं सांप्रतं मया ३८
अहमन्नं शुकः पूर्वं कस्मिन्नाभतने शुभे
देव्याः शश्चिमदिग्भागे कुत्थयकृतसंथयः ३९
तत्र निर्गच्छतो मे च कुर्वत-- प्रवेशनम्
प्रदक्षिणा भवद्देटया नित्यमेव द्विजोत्तमाः ४०

ततः कालेन मे मृत्युः संजातोऽत्रैव मन्दिरे
तत्प्रमावेण संजातो राजा जातिस्मरोऽत्र हि ४१
एतस्मात्कारणाद्दूरात्समभ्येत्य प्रदक्षिणाम्
करोम्यस्या द्विजश्रेष्ठा देवतायाः समाहितः ४२
पुराभक्तिविहीनेन कुलेन वसता मया
कृता प्रदक्षिणा देव्यास्तेन जातोऽस्मि भूपतिः ४३
अधुना श्रद्धया युक्तो यत्करोमि प्रदक्षिणाम्
किं मे भविष्यति श्रेयस्तन्नवेद्मि द्विजोत्तमाः ४४
ब्रह्मोवाच
तच्छ्रुत्वा तस्य ते विप्रा विस्मयोत्फुल्ललोचनाः
साधुवादांस्तथा चक्रुस्तस्य भूपस्य हर्षिताः ४५
ततः स पार्थिवः सर्वान्प्रणम्य द्विजसत्तमान्
अनुज्ञाप्य गृहं तूर्णं ययौ सेनाभिरन्वितः ४६
अधुना श्रद्धया युक्तो यः करोति प्रदक्षिणाम्
स सर्वपापनिर्मुक्तो लभते वांछितं फलम् ४७
ततः प्रभृति ते विप्राः सर्वे भक्तिपुरः सराः
तस्याः प्रदक्षिणां चक्रुस्तथान्ये मुक्तिहेतवे ४८
प्राप्ताश्च परमां सिद्धिं यांछितं तत्प्रभावत्
इहलोके परत्रैव दुर्लभां त्रिदशैरपि ४९
तस्मात्सर्वप्रमत्नेन तां देवी मिह संश्रयेत्
सर्वकामप्रदा नृणां तस्मिन्क्षेत्रे व्यवस्थिता ५०

इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ देवीप्रदक्षिणा माहात्म्यनामा अष्टचत्वारिंशत्तमोऽध्यायः

## अध्याय ४९

ब्रह्मोवाच
त्रिपुरादेवीमाहात्म्ये चरितं यदुदाहृतम्
श्रवणात्तस्य विप्रेन्द्र संकटाद्विप्रमुच्यते १
मरीचिरुवाच
त्वया यद्भगवन्प्रोक्तं देवी कात्यायनीति सा

महिषान्तकरी जाता कथं सा मे प्रकीर्तय २
कीदृक् दानववर्यः स माहिषं रूपमाश्रितः
कस्मात्ससूदितो देव्या तन्मे विस्तरतो वद ३
ब्रह्मोवाच
अहं ते कीर्तयिष्यामि देव्या माहात्म्यमुत्तमम्
श्रुतमात्रेण मर्त्यानां येन शत्रुक्षयो भवेत् ४
हिरन्याक्षसुतः पूर्वं महिषो नाम दानवः
आसीन्महिषरूपेण येन भुक्तं जगत्त्रयम् ५
मरीचिरुवाच
माहिषेण स्वरूपेण किंजातो दितिनंदनः
अथवा शापदोषेण संजातः केनचिद्वद ६
ब्रह्मोवाच
स जातो हि सुरूपाढ्यः शतपत्रविलोचनः
दीर्घबाहुः पृथुग्रीवः सर्व लक्षण लक्षितः ७
नाम्ना चित्रसरः प्रोक्त स्तेजोवीर्यसमन्वितः
स ---प्रभृति प्रायो महिषाणां प्रबोधनम् ८
करोति संपरित्यज्य सर्व मश्वादि वाहनम्
कदाचिन्महिषारुडः संप्रतस्थे दितेः सुतः ९
जाह्नवीतीरमासाद्य विनिघ्नन् जलपक्षिणः
अथासी त्सुसमाधिस्थो दुर्वासा मुनिसत्तमः १०
गंगा तीरे विधायोच्चैः पद्मासनमनुत्तमम्
विहंगासक्तचित्तेन शून्येन स मुनीश्वरः ११
दृष्टो न माहिषैः क्षुराणः खुरैर्वेगवशा द्विजः
ततःक्षतजदिग्धांगः स दष्ट्वा दानवं पुरः १२
अथ दृष्ट्वा प्रणामेन रहितं कोप माविशत्
ततः प्रोवाच तं क्रुद्धस्तोयमादाय पाणिना १३
यस्मात्पाप मम क्षुराणं गात्रं महिषजैः खुरैः
समाधेश्च ततो भंगस्तस्मात्त्वं महिषो भव १४
यावज्जीवसि दुर्बुद्धे सम्यज्ज्ञानसमन्वितः
अथासौ महिषो जातः कृष्णगात्रधरो महान् १५

अतिदीर्घविषाणाग्रो ह्यंजनाद्रिरिवापरः
ततः प्रसादयामास तं मुनिं विनयान्वितः १६
शापान्तं कुरु मे विप्र बाल्यभावादजानतः
अथ तं स मुनिः प्राह न मे स्याद्वचनं वृथा १७
तस्माद्यावत्स्थिताः प्राणास्तावदेवं भविष्यति
महिषस्य स्वरूपेण निन्दितस्य सुदुर्मते १८
एव मुक्त्वा परित्यज्य गंगातीरं मुनीश्वरः
जगामान्यत्र सोऽप्याशु गत्वा शुक्र मुवाच ह १९
अहं दुर्वाससा शप्तः कस्मिंश्चित्कारणान्तरे
महिपत्वं समानीतस्तस्मात्त्वं मे गतिर्भव २०
यथास्यात्पूर्वजं देहं तिर्यक्त्वं नश्यते यथा
प्रसादात्तव विप्रेन्द्र तथा नीतिर्विधीयताम् २१
शुक्र उवाच
तस्य शापोऽन्यथा कर्तुं नैव शक्यः कथंचन
केनापि संपरित्यज्य देवमेकं महेश्वरम् २२
नांदीमुखवरे क्षेत्रे सर्वसिद्धिप्रदायके
तत्र संजायते सिद्धिः शीघ्रं दानवसत्तम २३
अपि पापयुगे प्राप्ते किं पुनः प्रथमे युगे
एव मुक्तः स शुक्रेण दानवः सत्वरं यथौ २४
कपालेश्वरजं क्षेत्रं तपस्तेपे ततः परम्
तस्यैवं वर्तमानस्य तपःस्थस्य महात्मनः २५
जगाम सुमहान्कालः कृच्छ्रे तपसि तिष्ठतः
ततस्तुष्टो महादेवो दृष्ट्वा तद्दृष्टिगोचरम् २६
प्रोवाच परितुष्टोऽस्मि वरं वरय दानव
महिष उवाच
अहं दुर्वाससा शप्तो महिषत्वे नियोजितः २७
तिर्यक्त्वं नाशमायातु तस्मान्मे त्वत्प्रसादतः
श्रीमहादेव उवाच
नान्यथा शक्यते कर्तुं तस्य वाक्यं कथंचन २८
तस्मात्तव करिष्यामि सुखोपायं शृणुष्वतत्

ये केचिन्मानवा भोगा दैविका ये तथा सुराः २९
ते सर्वे तव गात्रेऽत्र संप्रयास्यन्ति संश्रयम्
भोगार्थ मिष्यते कायं यतो मर्त्यं सुरासुरैः ३०
समवाप्स्यति तान् सर्वां स्तस्मात्तव कलेवरम्
महिष उवाच
यद्येवं देवदेवेश भोगप्राप्तिर्भवेन्मम ३१
तस्मादवध्यमेवास्तु गात्रमेत न्मम प्रथो
दशानां देवयोनीनां मनुष्याणां विशेषतः ३२
तिरश्चां चैव नागानां पक्षिणां सुरसत्तम
श्रीमहादेव उवाच
नावध्योऽस्ति धरापृष्ठे कश्चिद्देही च दानव ३३
तस्मादेकं परित्यज्य शेषान् प्रार्थय दैत्यप
ततःस सुचिरं ध्यात्वा प्रोवाच वृषभध्वजम् ३४
स्त्रियमेकां परित्यज्य नान्येभ्यस्तु वधो मम
तथास्मिंस्तावकेतीर्थे यः कश्चिच्छ्रद्धया नरः ३५
करोति स्नानमव्यग्रं त्वां पश्यति ततः परम्
तस्यस्या त्त्वत्प्रसादेन संसिद्धिः सार्वकामिकी ३६
सर्वोपद्रवनाशश्च तेजो वृद्धिश्च शंकर
श्रीमहादेव उवाच
कार्तिकस्य चतुर्दश्यां तीर्थे स्नात्वाऽत्र मामके ३७
विलोकयिष्यति प्रीत्या मम लिङ्गं ततः परम्
भूतमेतपिशाचादि संभवास्तस्य तत्क्षणात्
दोषा नाशं प्रयास्यन्ति तथा रोगा ज्वरादयः ३८
एवमुक्त्वाथ देवेश स्तत श्चादर्शनं गतः
महिषोपि निजं स्थानं प्रजगाम ततः परम् ३९
स गत्वा दानवान् सर्वान् समाहूयततः परम्
प्रोवाचा मर्षसंयुक्तः सभामध्ये व्यवस्थितः ४०
पिता मम पितृव्यश्च ये चान्ये मम पूर्वजाः
दानवा निहता देवैर्वासुदेवपुरोगमैः ४१
तस्मात्ता न्नाशयिष्यामि देवानपि महाहवे

अहं त्रैलोक्यराज्यं हि ग्रहिष्यामि ततःपरम्  ४२
अथ ते दानवाः प्रोचुर्युक्तमेतदनुत्तमम्
अस्मदीयमिदं राज्यं यच्छक्रः कुरुते दिवि  ४३
एवं ते दानवाः सर्वे कृत्वा मंत्रविनिश्चयम्
मेरुशृगं ततो गत्वा सभृत्यबलवाहनाः  ४४
अथ शक्रादयो देवा दृष्ट्वा तद्दानवोद्भवम्
अकस्मादेव संप्राप्तं बलं च शस्त्रसंयुतम्  ४५
युद्धार्थं तेपुरद्वारि निर्ययुस्तदनंतरम्
आदित्या वसवो रुद्रा नासत्यौ च भिषग्वरौ  ४६
विश्वेदेवास्तथा साध्याः सिद्धा विद्याधराश्च ये
ततः समभवद्युद्धं देवानां सह दानवैः  ४७
मिथः संभर्त्स्यमानानां मृत्योः कृत्वा निवर्तनम्  ४८
एवं समभवद्युद्धं याव द्वर्षत्रयं दिवि
रक्तनद्योऽतिविपुलास्तत्रातीव प्रदुद्रुवुः  ४९
अन्यस्मिन्दिवसे शक्रं दृष्ट्वै रावतस्संस्थितम्
सुशुक्लेनातपत्रेण ध्रियमाणेन मूर्धनि  ५०
देवैः परिवृतं दिव्यशस्त्रपाणिभिरेव च
ततः कोपपरीतात्मा महिषो दानवाधिपः  ५१
महावेगं समासाद्य तस्यैवाभिमुखो ययौ
शृंगाभ्यां च सुतीक्ष्णाभ्यां ततश्चैरावतं गजम्  ५२
विव्याध हृदये सोऽथ चक्रे रावं सुदारुणम्
ततः पराङ्मुखो भूत्वा गजोऽयं नृप रावणः  ५३
अभिदुद्राव वेगेन पुरी यत्रामरावती
अंकुशोत्थप्रहारैश्च क्षतकुंभोपि भूरिशः  ५४
महामात्रनिरूद्धोपि न स तस्थौ कथंचन
अथाब्रवीत्सहस्राक्षो महिषं वीक्ष्य गर्वितम्  ५५
गर्जमानांस्तथा दैत्यान् क्ष्वेडनास्फोटनादिभिः
मादैत्य प्रविजानीहि यन्नष्ट स्त्रिदशाधिपः  ५६
एष नागो रणं हित्वा विवशो याति मे बलात्
तस्मात्तिष्ठ मुहूर्तं च यावदास्थाय सद्रथम्  ५७

नाशयामि च ते दर्पं निहत्य निशितैः शरैः
एतस्मिन्नंतरे प्राप्तो मातलिः शक्रसारथिः ५८
सहस्रैर्दशभिर्युक्तो वाजिनां वातरंहसाम्
तथा मातलिना चाश्वाः प्रतोदेन समाहताः ५९
उत्पतन्त इवाकाशे सत्वरं संप्रदुद्रुवुः
अथ चापं समारोप्य सत्वरं पाकशासनः ६०
शरै राशीविषाकारैश्छादयामास दानवम्
ततः स वेगमास्थाय भूयोऽपि क्रोधमूर्छितः ६१
अभिदुद्राव वेगेन स यत्र त्रिदशाधिपः
ततस्तान् सुहयां स्तस्य शृंगाभ्यां वेगमाश्रितः ६२
दारयामास संक्रुद्ध आविध्याविध्य चासकृत्
ततस्ते वाजिन स्रस्ताःसंजग्मुः क्षतवक्षसः ६३
रक्तद्रवितसर्वाङ्गा माग मैरावतस्य च
ततः शक्ररथं दष्ट्वाऽभिमुखं मुरसत्तमाः ६४
सर्वे प्रदुद्रुवुर्भीता स्तस्य मार्गमुपाश्रिताः
ततस्तु दानवाः सर्वे भग्नान् दृष्ट्वा रणे सुरान् ६५
शस्त्रवृष्टिं प्रमुंचन्तो गर्जमाना यथा घनाः
एतस्मिन्नंतरे प्राप्ता रजनी तमसावृता ६६
न किंचित्तत्र संयाति कस्यचिद् दृष्टिगोचरे
ततस्तु दानवाः सर्वे युद्धान्निर्गत्यं सर्वतः ६७
मेरुशृगं समाश्रित्य रम्यं वासं प्रचक्रमुः
विजयेन समायुक्तास्तुष्टिं च परमां गताः ६८
कथाश्चक्रुश्च युद्धोच्छ्रा युद्धं यस्य यथाऽभवत्
देवाश्चापि हतोत्साहरः प्रहारैः क्षतवक्षसः ६९
मंत्रं चक्रुर्मिथो भूत्वा बृहस्पतिपुरः सराः
सांप्रतं दानवैः सैन्यमस्माकं विमुखं कृतम् ७०
विध्वस्तं सुनिरुत्साह मक्षमं यज्ञकर्मणि
तस्मात्त्यक्त्वा प्रवेक्ष्यामः पुरीं चैवामरावतीम् ७१
ब्रह्मणः सदनं यत्र न स्याद्दानवजं भयम्
एवं ते निश्चयं कृत्वा ब्रह्मलोकं ततोगताः ७२

ततः प्रातः समुत्थाय दानवास्ते प्रहर्षिताः
शून्यं शक्रपुरीं दृष्ट्वा विविशुस्तदनंतरम् ७३
अथ शाक्रपदे दैत्यं महिषं संनिधाय च
प्रणेमु स्तुष्टिसंयुक्ता श्चक्र श्चैव महोत्सवम् ७४
जगृहुर्यज्ञ भागांस्ते सर्वेषां त्रिदिवौकसाम्
देवस्थानेषु सर्वेषु देवताभिमताश्च ये ७५

इति श्रीबह्निपुराणे नांदीमुखोत्पत्तौ देवसेनापराजयो नामैकोनपंचाशत्तमोऽध्यायः

## अध्याय ५०

ब्रह्मोवाच
एवं शक्रादयो देवा जितास्तेन रणाजिरे
महिषेण ततो राज्यं त्रैलोक्ये क्रियते हि तत् १
यत्किंचित्त्रिषु लोकेषु सारभूतं प्रपश्यति
गजवाणरथाश्वादि सर्वं गृह्णाति सोऽसुरः २
एवं प्रर्तमानस्य तस्य देवाः सवासवाः
वयार्थं मिलिताश्चक्रुः कथाः दुःखसमन्विताः ३
एतस्मिन्नंतरे प्राप्तो नारदो मुनिसत्तमः
दृष्ट्वा तं माहिषं सर्वं व्यवहारं मदोत्कटम् ४
ततश्चकथयामास सर्वं तेषां सविस्तरम्
तस्य संचेष्टितं भूरि लोकत्रयप्रपीडनम् ५
अथ तेषां महाकोपो भूय एवाभ्यवर्धत
नारदस्य वचः श्रुत्वा तादृग् लोककथोद्भवम् ६
तेषां कोपोद्भवो धूमो वक्त्रद्वारेण निर्ययौ
येन दिङ्मंडलं सर्वं तत्क्षणा त्कलुषीकृतम् ७
एतस्मिन्नंतरे तत्र कार्तिकेयः समभ्ययात्
पप्रच्छ च किमेतद्धि देवानां कोपकारणम् ८
येन कालुष्यतां प्राप्तं दिक्चक्रं सकलंमुने
नारद उवाच
एतेषां सांप्रतं स्कन्द मया वार्ता निवेदिता ९

त्रैलोक्यं दानवैः सर्वैर्यथा नीतं महोत्कटैः
स्त्रीरव मश्वरत्नं वा न किंचित्कस्य चिद्गृहे १०
ते दृष्ट्वा नैव मुञ्चन्तिदुर्निवार्या महोत्कटाः
तच्छ्रुत्वा कार्तिकेयस्य कोपस्तु समजायत ११
वक्र मार्गेण देवानां तथा कोपः समागतः
एतस्मिन्नंतरे जाता तत्कोपान्ते कुमारिका १२
सर्वलक्षणसंयुक्ता दिव्यतेजोन्विता शुभा
कार्तिकेयस्य कोपेन कोपे मिश्रे दिवौकसाम् १३
यस्माज्जातात्र साकन्या तस्मात्कात्यायनीशुभा
ततस्तस्या ददौ वज्रमायुधं त्रिदशाधिपः १४
शक्तिं स्कंदः सुतीक्ष्णाग्रां चापं देवो जनार्दनः
त्रिशूलं च महादेवः पाशं च वरुणः स्वयम् १५
आदित्यश्च शितान् बाणांश्चन्द्रमाश्चर्म चोत्तमम्
निस्त्रिंशं निर्ऋृतिस्तुष्ट उल्मुकं च हुताशनः १६
वायुश्च क्षुरिकां तीक्ष्णां धनदः परिघं तथा
दंडं प्रेताधिपो रौद्रं वधाय सुरविद्विषाम् १७
द्वादशैवं समालोक्य सायुधानि द्विजोत्तम
कात्यायनी ततश्चक्रे भुजद्वादशकं तथा १८
जग्राहं च द्रुतं तानि सुवस्त्राणि दिवौकसाम्
यस्माज्जातात्र साकन्या तस्मात्सा लोकविश्रुता १९
ततः प्रोवाच तान्सर्वान् संप्रहृष्टतनूरुहा
यदर्थं विबुधश्रेष्ठाः सृष्टा तद्ब्रूत मा चिरम् २०
सर्वं कार्यं करिष्यामि युष्माकं नात्र संशयः
देवा ऊचुः
महिषो दानवो रौद्रः समुत्पन्नोऽस्ति सांप्रतम् २१
अवध्यः सर्वभूतानां मानुषाणां विशेषतः
मुक्त्वैकां योषितं तेन त्वमस्माभिर्विनिर्मिता २२
तस्मात्वं सांप्रतं गच्छ विं--ख्यं पर्वतोत्तमम्
तपस्तत्र कुरुष्वोग्रं तेजो येनाभिवर्धते २३
ततस्तु तेजः संयुक्तां त्वां ज्ञात्वा वयमेवहि

अजेयां त्वां करिष्यामो युद्धे तेन दुरात्मना २४
ततस्त्वच्छस्त्रनिर्दग्धः पंचात्वं संप्रयास्यति
वयं च त्रिदशैश्वर्यं प्राप्स्यामश्च हतद्विषः २५
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ कात्यायनी प्रादुर्भावो नाम
पंचाशत्तमोऽध्यायः

## अध्याय ५१

ब्रह्मोवाच
देवानां च वचः श्रुत्वा ततः स परमेश्वरी
प्रोवाच वाहनं किंचिद्देवा यच्छन्तु मे द्रुतम् १
ततः सिंहं ददौ गौरी यानार्थं विकृताननम्
तमारुह्य प्रतस्थे सा ततो विध्यं नगं प्रति २
तस्मैकं शृंगमास्थाय रम्यं श्रेष्ठ द्रुमान्वितम्
फलमूलसमाकीर्णं तालमंडपमंडितम् ३
तपस्तत्रा करोत्साध्वी तीव्रव्रतपरायणा
संयम्येन्द्रियवर्गं स्वं ध्यायंती च महेश्वरम् ४
यथा यथा तपोवृद्धिस्तस्याः संजायते द्विज
तथा रूपं च कान्तिश्च शरीरे प्रतिवर्धते ५
एतस्मिन्नंतरे प्राप्तास्तत्र दैत्येश्वरेश्वराः
ते तां दृष्ट्वा व्रतोपेता मत्यद्भुतवपुर्धराम् ६
गत्वा प्रोचुः स्वनाथस्य महिषस्य दुरात्मनः
चरा ऊचुः
भ्रममाणैर्धरापृष्ठे दृष्टाऽपूर्वा कुमारिका ७
विंध्याचलेऽद्य चास्माभिर्भुजैर्द्वादशभिर्युता
नानाशस्त्रधरैर्दीप्तैर्वर्मच्छादितगात्रका ८
न देवी न च गंधर्वी नासुरी नागकन्यका
तादृक्रूपा पुराऽस्माभिः काचिद्दृष्टा नितम्बिनी ९
न विघ्नो यन्निमित्तं सा तपश्चक्रे नितम्बिनी
स्वर्गकामार्थकामा वा पतिकामाथवा विभो १०
ब्रह्मोवाच

तेषां तद्वचनं श्रुत्वा महिषो दानवाधिपः
कामदेववशं प्राप्तः श्रवणादपि तत्क्षणात् ११
ततस्तानग्रतः कृत्वा सैन्येन महता वृतः
जगाम कौतुकाविष्टो यत्रास्ते सातु कन्यका १२
यथामृत्युकृते मंदः शृंगालः सिंहवल्लभाम्
वने सुप्तां सुविश्वस्तां सर्वत्राप्यकुतोभयाम् १३
तस्याः संदर्शनेनैव ततः कामशरैर्हतः
स दानवप्रधानश्च तत्क्षणादेव भोद्विज १४
अथप्राह प्रियं वाक्यमेकाकी तत्पुरः स्थितः
धृत्वा दूरतरे सैन्यं तस्या रूपेण मोहितः १५
विरुद्धं यौवनस्यैतद्व्रतं ते चारुहासिनि
तस्मादेतत्परित्यज्य त्रैलोक्यस्वामिनी भव १६
अहं हि महिषो नाम दानवेन्द्रो यदि श्रुतः
मया येन सहस्राक्षो द्वंन्द्वयुद्धे विनिर्जितः १७
त्रैलोक्यं सकलं मत्तं सांप्रतं चवशे स्थितम्
तस्मात्त्वं भव सुश्रोणि भार्या मम सुवल्लभा १८
सहस्रं मम भार्याणा मन्य दस्ति सुशोभनम्
तत्सर्वं तव भृत्यत्वं सांप्रतं प्रकरिष्यति १९
अहं चापि तवात्यन्तं दासभावं समाश्रितः
वर्तिष्ये किल सुश्रोणि प्रदत्ताशेषसंभवः २०
वह्निरुवाच
तस्य तद्वचनं श्रुत्वा ततः सा परमेश्वरी
प्रोवाच भर्त्स्यमानं तं कोपसंरक्तलोचना २१
धिक् धिक् पापसमाचार कुमारव्रत धारिणीम्
कामोपहतचित्तात्मा किं मामेवं प्रभाषसे २२
अहं तव वधार्थाय निर्मित्ता विबुधोत्तमैः
तस्मात्त्वां नाशयिष्यामि स्मरेष्टं यद् हृदिस्थितम् २३
यद्येवं तद्वरारोहे युक्तास्याच्च कुमारिका
प्रार्थनीया भवेदत्र सर्वेषां प्राणिनां यतः २४
स्वर्गार्थं क्रियते धर्मस्तपश्च वरवर्णिनि

येन भोगाः प्रभुज्यंते ये दिव्या ये च मानुषाः २५
तस्माद्देहि ममात्मानं गंधर्वेण सुशोभने
त्रिवाहेन यतोऽन्येषां सप्रधानः प्रकीर्तितः २६
एवं प्रवदतस्तस्य सादेवी क्रोधमूर्छिता
तद्वत्क्रान्तं समुद्दिश्य शरो देव्या विमोचितः २७
विवेश वदनं तस्य वल्मीकं पन्नगो यथा
अथ तैर्मार्मणैर्विद्धः स करालं नदंस्तथा २८
शुश्राव रुधिरं भूरि गैरिकं पर्वतं यथा
ततः कोपपरीतात्मा निर्वृत्याथ शनैः शनः
स्वसैन्यं त्वरितो भेजे कामेन च वशीकृतः
प्रोवाच सैनिकान्सर्वान् दुष्टा स्त्रीयं प्रगृह्यताम् ३०
यथा न त्यजति प्राणान् प्रहारैर्जजरीकृता
एषा मम न संदेहः प्रियाभार्याभविष्यति ३१
यदि वः शसपातेन पंचत्वं नैव यास्यति
एष मुक्तास्तदा तेन दानरा युद्धदुर्मदाः ३२
दुद्रुवुः सन्मुखा स्तस्या मुचंतो निशिताञ्शरान्
तान् सर्वांस्ताडयामास सर्वमर्मसु तत्क्षणात् ३३
अथ तीक्ष्णैः शरैर्दैत्या निहता दानवास्तथा
एके पंचत्वमापन्ना गतास्ते दिक्षु संहताः ३४
ततः सैन्यं समालोक्य तद्धक्तं च तदा रणे
कोपाविष्टस्ततो दैत्यः स्वयं तां समुपाद्रवत् ३५
यच्छञ्शृंगप्रहारांश्च तस्याः शतसहस्रशः
गर्जितं विदधञ्चायं शरदभ्रसमं मुहुः ३६
एतस्मिन्नंतरे देवी साट्टहासकुतस्वरा
त्रैलोक्यविवरं शीघ्रं यच्छब्देन प्रपूरितम् ३७
एवं तस्या हसन्त्याश्च वक्त्रान्ता दथ निर्ययुः
पुलिंदाः शबरा म्लेच्छास्तथान्येऽरणवासिनः ३८
शकाश्च यवनाश्चैव शतशस्तु वपुर्धराः
धर्मस्थगितगात्राश्च यमदूता इवा पराः ३९
ते प्रोचुर्यदि नो ब्रूहि येन सृष्टा वयं क्षितौ

कार्येण क्रियते कृत्स्नं येन शीघ्रं वरानने ४०
देव्युवाच
एताँस्तस्य सुदुष्टस्य सैनिकान् वलगर्वितान्
सूदयध्वं द्रुतं वाक्यादस्मदीपाद्यथेच्छया ४१
अथ ते तद्वचः श्रुत्वा वल्गन्तोऽसि धनुर्धराः
दैतेयवल मुद्दिश्य दुद्रुवुर्वेगमाश्रिताः ४२
ततस्तेषां महायुद्धं मिथोजज्ञे सुदारुणम्
नात्मीयं न परं तत्र केनचिज्ज्ञायते क्वचित् ४३
अथ ते दानवाः सर्वे बोधैर्देवीसमुद्भवैः
भग्ना व्यापादिताश्चान्ये प्रहारैर्जर्जरीकृता ४४
ततो भग्नं बलं दृष्ट्वा महिषः क्रोधमूर्छितः
तामुवाच क्रुधा देवीं वचनैः परुषाक्षरैः ४५
आः पापे स्त्रीनिमित्तेन न हतासि समा युधि
तस्मात्पश्य प्रभावं मे बलं वेत्स्यसि नान्यथा ४६
एव मुक्त्वा विशेषेण प्रहारांस्तान् प्रचिक्षिपे
विपाणाभ्यां महावेगं भर्त्समानो मुहुर्मुहुः ४७
ततोऽभ्यासगतं दृष्ट्वा सा देवी दानवं च तम्
आरुरोहाथ वेगेन पृष्ठदेशेऽथ कोपतः ४८
ततश्चुक्रोश दैत्योऽसौ व्योममार्गं समाश्रितः
पृष्ठमागेविनिर्भिन्नो रुधिरौधपरिप्लुतः ४९
एतस्मिन्नंतरे सिंहः स तस्या ज्योतिरुद्भवः
जग्राह पश्चिमे भागे दंष्ट्राग्रैर्निशितै रिव ५०
ततो निश्चलतां प्राप्तः पदाक्रान्तश्च दानवः
अकरोद्भैरवान्नादान् न शक्तश्चलितुं पदम् ५१
एतस्मिन्नंतरे प्राप्ताः सर्वे देवाः सवासवाः
व्योमस्थां ये तदा प्राचुर्देवीं हर्षसमन्विताः ५२
एतस्य शिरसश्छेदं शीघ्रं कुरु सुरेश्वरि
खड्गेनानेन तीक्ष्णेन यावन्नोयाति चान्यतः ५३
सा श्रुत्वा वचनं तेषां देवी कोप समन्विता
खड्गं व्यापारयामास कंठे तस्या तिपीवरे ५४

स तेन खड्गघातेन कंठः पीनोऽतिनिष्ठुरः
द्विधा जज्ञेऽथ दैत्यस्य दधत्तुष्टिं दिवौकसाम् ५५
द्वादशार्कप्रतीकाशो वक्रान्तश्चर्मखड्गधृक्
गर्त्सयन् तां महादेवीं खड्गोद्यतकरां तदा ५६
खड्गं व्यापारयन् गात्रे तरयाःबालार्क संनिभम्
ततः केशेषु चाधाय यावत्सोऽपि प्रचिक्षिपे ५७
प्रहारं गात्रनाशाय तावदूचे स दानवः
दानव उवाच
जयदेवि जयाचिन्त्ये जय सर्वसुरेश्वरि ५८
जय सर्वगते देवि जयसर्वजनप्रिये
जयकामप्रदे नित्यं जय त्रैलोक्यसुंदरि ५९
जय त्रैलोक्यरक्षार्थमुद्यते ह्यकुतोभये
जय देवि कृतानयै जय दैत्यविनाशिनि ६०
जय क्लेशच्छिदे कान्ते जय भक्तविमोहदे
त्वं सृष्टिस्त्वं वरादेवी त्वं लक्ष्मीस्त्वं सरस्वती ६१
त्वं स्वाहा स्वधा पुष्टिस्तुष्टिर्मेधा धृतिः क्षमा
तस्मात्कुरु प्रसादं मे माणान् रक्ष दयां कुरु ६२
प्रणतस्य मुदीनस्य दीनस्य च विशेषतः
अहं दुर्वाससा शप्तो हिरण्याक्षसुतो बली ६३
महिषत्वं समानीतस्त्वया देवि विमोक्षितः
तस्माद्दर्पप्रमुक्तोद्य त्वया दानवसंभवः ६४
किंकरत्वं प्रयास्यामि सांप्रतं ते सुरेश्वरि
जय सर्वगते देवि सर्वदुष्टविनाशिनि ६५
इति तस्य वचः श्रुत्वा कृपणं सा सुरेश्वरी
कृपाविष्टाब्रवीद्वा--- ततो व्योमस्थितान् सुरान् ६६
किं करोमि दया जाता ममैन प्रति हे सुराः
तस्मान्नाहं हनिष्यामि दानवं दीनजल्पकम् ६७
विमुखं शस्त्ररहितं तवास्मीति प्रवादिनम्
अपि मे पितृहन्तारं न हन्यां रिपुमाहवे ६८
देवा ऊचुः

न चेन्मारयसि देवि त्वमेनं दानवाधमम्
नाशयिष्यति तत्कृत्स्नं त्रैलोक्यं सचराचरम्  ६९
एष व्यर्थः श्रमः सर्वस्तथास्माकं भविष्यति
तवसंभूतिसंभूतस्तव क्लेश स्तथा खिलः  ७०
देव्युवाच
नाहमेनं हनिष्यामि त्यद्दयापि च तथा सुराः
एनं कचग्रहे कृत्वा धारयिष्यामि सर्वदा  ७१
देवा ऊचुः
साधु साधु महाभागे सत्यमुक्तं स्वया वचः
एतद्धि युज्यते कर्तुं कालेऽस्मिन् विदशेश्वरि  ७२
सांप्रतं भर्त्यलोके त्वं रूपमेतत्समाश्रिता
शस्त्रोद्यनकरा रौद्रा महिषोपरिसंस्थिता  ७३
अत्राप्स्वसि परां पूजां दुर्लभाममरैरपि
यस्त्वामेतेन रूपेण संस्थितां पूजयिष्यति  ७४
युद्धबाले समुत्पन्ने भक्तो भक्तिसमन्वितः
प्रस्थानं वा प्रवेशं वा यः करिष्यति मानवः  ७५
त्वां स्मृत्वा प्रणिपत्याथ पूजयित्वा विशेषतः
तस्य संपत्स्मृते सिद्धिः सर्वकृत्येषु सर्वदा  ७६
इह कापुरुषस्यैव किं पुनः --- च
आश्विनस्य सिते पक्षे नवम्यां वाष्टभीदिने  ७७
पूजयिष्यति यो मर्त्यः त्वां च सद्भिः समन्वितः
तस्य संवत्सरं यावत्समग्रं सुरसुंदरि  ७८
न भवेद्वा क्वचिद्रोगे न भयं न पराभवः
नाप--- र्न चौरादिसमुद्भूतउपद्रवः  ७९
सूत उवाच
एवमुक्त्वा ततो देवास्तां देवी हर्षसंभवाम्
अनुज्ञातास्तथा जम्मुः स्वां पुरीममरावतीम्  ८०
तत्र गत्वा चिरात्प्राप्यं स्वं राज्यं पाकशासनः
पालयामास संहृष्टस्त्रैलोक्यं हतकंटकम्  ८१
लोकाश्च सुखसंपन्नाः सर्वे जातास्ततः परम्

यज्ञभागभुजो देवा भूयो जाता जगत्त्रये ८२
ततः परं च सा देवी त्रैलोक्ये ख्यातिमागता
सर्वक्षेत्रेषु तीर्थेषु स्थानेषु च विशेषतः ८३
एतस्मिन्नंतरे जातः सुरथो नाम भूपतिः
आनर्तस्तेन संभक्त्या क्षेत्रेऽत्रैव विनिर्मिता ८४
वक्राङ्गीरांनिधाने च तपः कृत्वा सुदुश्चरम्
माहेयीं प्रतिमां पूज्य पूजाहोमविधानतः ८५
दत्वा वरं च सा देवी तेजोरूपा समाविशन्
वक्राङ्गीं लोकविख्यातां देवैः संपूजितां सदा ८६
यस्तां पश्यति सद्भक्त्या चैत्राष्टम्यां सितेऽहनि
स पुत्रान् वत्सरं यावत्कृतार्थः स्यान्नसंशयः ८७
पुत्रपौत्रादि सुसुखं प्राप्यते च न संशयः
भुक्त्वा भोगान् यथा कामं ततः सायुज्यमाप्नुयात् ८८
नांदीमुखस्तु यो विप्रस्तस्याः पूजां विना च यत्
भस्मीभवति तत्कर्म कृतं चेद्विधिना द्विज ८९

इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ वक्रांगीमाहात्म्यं नाम
एकपंचाशत्तमोऽध्यायः

## अध्याय ५२

ब्रह्मोवाच
कृते नांदीपुरं प्रोक्तं विधियज्ञालयं ततः
द्वापरे शक्रगुप्तं च कृतं चैव कलौ युगे १
चतुर्विंशति गोत्राणां भूसुराणां गृहाणि च
त्रीणि चैव सहस्राणि तथा पंचशतानि च २
कृते नांदीमुखाः प्रौक्तास्त्रेतायां यज्ञकारकाः
द्वापरे हृतसंस्थाना नंदवाणाः कलौ स्मृताः ३
एवं मे कथितं ब्रह्मन् यत्पृष्टमिह च त्वया
ब्राह्मणाः कलिना ग्रस्ताः शापोपहतचेतसः ४
एकदा तिकरालोग्रा तर्जयन्ती जनानिह
राक्षसी विकृताकारा पिंगकेश्यतिलोभशः ५

रक्तनेत्रा दीर्घनखा लोला सस्थूलकोदरा
लंबस्तनी सुदेशंतमाजगामाशुचारिणी ६
तां भीमां ते तदा दृष्ट्वा त्रस्ताः सर्वे द्विजोत्तमाः
जेजिरे ते दिशो विप्राः पलायनपरायणाः ७
एकदेशं समागम्य ब्राह्मणा वेदवादिनः
पूजयांचक्रिरे विप्राः स्तवेनानेन चांविकाम् ८
दुःखदारिद्र्यरोगघ्नीं भवानीमपराजिताम्
नाना द्रविणहोमैश्च पूजाभिः स्तवनैस्तथा ९
पूजिता सा महालक्ष्मीः साक्षान्महिषमर्दिनी
तेषाभाविरभूद्ब्रह्मन् वरदा सिंहवाहनी १०
मरीचिरुवाच
स्तवराजं किमेत्तद्धि गुह्याद्गुह्यतरं विभो
यस्य स्मरणमात्रेण साक्षाच्च जगदंबिका
आविर्भूता परा ब्रह्मं स्तन्मे वद सुरोत्तम ११
ब्रह्मोवाच
मंत्रराजमिदं ब्रह्मन् सारं मंत्रेषु सर्वतः
उद्धृत्य कथयिष्यामि गुह्याद्गुह्यतरं द्विज १२
ॐ ह्रीं नमः ॥ कृष्णवाससे शतसहस्रकोटि सिंहवाहने सहस्रवदने
महाबले १३ अजिते अपराजिते श्री श्रीप्रत्यंगिरे सर्वस्यैव
पराक्रमविध्वंसिनी परमंत्रच्छेदनी सर्वभूतदमनी सर्वाहितान् वंध वंध सर्व
विघ्नान् छिंधि छिंधि निकृंतय निकृंतय सर्वदुष्टान् भंजय भंजय ज्वल जिह्वे
करालवक्त्रे सर्वयंत्रान् स्फोटय स्फोटय शृंखलान् त्रोटय त्रोटय १४
एभिर्मितं कार्यं साधय साधय श्रीप्रत्यंगिरे नमोस्तुते १५ वासुदेव संकर्षण
प्रद्युम्न अनिरुद्ध अनंताय सहस्रशीर्षाय क्षीरोदार्णव शायिने शेषभोगपर्यंकाय
असुरान् छिंधि छिन्धि स्वाहा १६
एवं साथ स्तुता ब्रह्मन् वक्रांग्याश्च शरीरतः
शंखचक्रधरा देवी प्रादुरासीन्महामुने १७
तस्याः संदर्शनादेव राक्षसी प्रलयं गता
जयशब्दो महानासीत् ब्राह्मणानां गृहे गृहे १८
तदा तां पूजयामासुः पुष्पैर्नानाविधैर्मुने

संजातहर्षास्तत्पत्नयो गीतवादित्रसंयुताः १९
ता स्तु वर्धापयामासुः पुष्पैर्मुक्तासमन्वितैः
एवं हर्षसमाकीर्णं नगरं सर्वतो द्विज २०
तदातुष्टा जगद्धात्री तानुवाचाथ हर्षिता
नांदीमुखास्तु ये विप्राः पूजयिष्यन्ति नित्यशः २१
वृद्धौ विशेषतो मां च दैवे पित्र्येऽपि कर्मणि
महाव्याधि स्तथा कष्टं दारिद्र्यं चापि दुर्गतिम् २२
नाशयिष्याम्यहं क्षिप्रं तेषां संनिहिता सती
रौक्मीं वा राजतीं वापि मामकीं प्रतिमां शुभाम् २३
पूजयिष्यन्ति ये नित्यं तेषां संनिहिता ह्यहम्
एवमुक्त्वा तदा देवी तत्रैवान्तरधीयत २४
ब्राह्मणास्तत्कृतोत्साहास्तदा जग्मुर्गृहानिति
ब्रह्मोवाच
तस्मिँस्तीर्थे द्विजश्रेष्ठ पुष्करं तीर्थमुत्तमम् २५
यत्र संस्नानमात्रेण सर्वपापैः प्रमुच्यते
यत्र चीर्णं तपश्चोग्रं गालवेन माहात्मना २६
तपसस्तत्प्रभावेण सर्वे देवाः सवासवाः
समाजग्मुर्मुनिश्रेष्ठा ऋषयो ये तपोधनाः २७
ब्रह्मणा संयुता स्तत्र देवकार्यार्थमुद्यताः
दृष्ट्वाद्भुतमिदं कर्मं गालवस्य महात्मनः २८
चकितो देवराजोऽसा वानिनाय च तां स्तदा
ब्रह्मणा च युताः सर्वे तत्रक्षेत्रे द्विजोत्तम २९
ऊचुस्ते तं तपस्यन्तं गालवं मुनिसत्तमम्
तपसा संपरिक्लिष्टं कृशमेकान्तवासिनम् ३०
ध्यानोन्मिषितमर्वाङ्गं नेत्रान्तकृतनासिकम्
ध्यायन्तं सच्चिदानंदं परं निर्वाणदायकम् ३१
तं मुनीन्द्रं च संदृष्ट्वा ब्रह्मा लोकपितामहः
उवाच श्लक्ष्णया वाचा वरं वरयतामिति ३२
दृष्ट्वा ता नागतानेव सर्वान् देवान् सवासवान्
पाद्यार्घ्यादिपुरस्कृत्य प्रोवाच परया गिरा ३३

यदि देवो वरो गह्यं वरार्होहं सुरोत्तमाः
तदा मां महतीं सिद्धिं दत्त मुक्तिसहायिनीम् ३४
नांदीमुखानां विप्राणां तीर्थमेतत्सुदुर्लभम्
युष्मत्प्रसादाच्च सुरास्तीर्थमेतत्सुपावनम् ३५
जायते च भवद्भिस्तत्कर्तव्यं चेत्कृपा मपि
ऊचुस्ते हर्षसंप्लुष्टा स्तेनोक्तास्ते तदा सुराः ३६
तत्तपोविद्रवीभूतास्तथास्त्विति महामुने
अस्मिंस्तीर्थे तु यः स्नानं श्राद्धंचापि करिष्यति ३७
दानं वापि विशेषेण तदत्यन्तं भविष्यति
कार्तिक्यां पूर्णिमायां च यस्तु श्राद्धं करिष्यति ३८
गयाश्राद्धसमं तस्य भविष्यति न संशयः
गंगायमुनयोर्मध्ये स्नानेनैव शतेन च ३९
यत्पुण्यं लभते मर्त्यस्तदेकेन भविष्यति
एवमुक्त्वा सुराः सर्वे गतास्ते च यथागतम् ४०
ब्रह्मोवाच
एवं ते कथितं ब्रह्मं स्तीर्थं परमशोभनम्
यत्र नांदीपुरे दिव्ये लक्ष्मीनाथ स्तथा शिवः ४१
सदा संनिहितौ विप्र दृश्येते तौ सकांतकौ
तत्तीर्थस्य प्रभावेण विप्रा नांदीमुखास्तदा ४२
शक्रादी नवमन्येरन्न ज्ञात्वा शापकारणम्
लक्ष्म्या मदेन चोन्मत्ता मायोपहतचेतसः ४३
तदा ते देवकोपेन यताः सर्वे दिशोदश
नंदेनापि समानीताः कियत्कालांतरं गते ४४
न तथा ते कलावेव तत्र संस्थानकामुकाः
विद्यावीर्येण संहीनाश्चंचला हतबुद्धयः ४५
नदा ते कारणं ज्ञात्वा शापस्यातिविमोहिताः
न तच्छ्रदधिरे विप्राः स्थानमेव समाहिताः ४६
आपूर्य शकटांस्ते च गताः स्वजीविकाकृते
क्षत्रियांस्तेप्युपालभ्य तिष्ठन्ति द्रविणेप्सवः ४७
कालं निर्वाहयांचक्रुः कलावेकान्तवासिनः

शापेनापि परिभ्रष्टाः स्थानात्सर्वे द्विजोत्तमाः ४८
विष्णुभक्तिपराश्चैव क्रयविक्रयकामुकाः
एवं ते कथितं वत्स पुराणं वेदसंमितम् ४९
नांदीमुखानां विप्राणां वह्निना य त्पुरोदितम्
यः शृणोति नरो भक्त्या श्रावयेद्वा समाहितः ५०
अश्वमेधायुतं पुण्यं लभते नात्र संशयः
एतत्पुण्यकथां श्रुत्वा विप्रायार्थविदेतुयः ५१
लिखापयित्वा योदद्या द्वस्त्रकांचनसंयुताम्
कापिलामथवा श्वेतां कृष्णां कृष्णस्तनां हिवा ५२
तद्युतां योददातीह वंशस्तस्य न हीयते
एतत्पुण्यकथां श्रोतुं शृणु वै नियमान् द्विज ५३
एकक्भुतेन नक्तेन तथैवायाचितेन च
शृणोति यो नरो भक्त्या तस्य पुण्यफलं पृथक् ५४
एकभुक्तेन धान्यस्य राशिः स्याज्जन्मजन्मनि
नक्तेन शृणुयाद्योवै स नरो धनवान् भवेत् ५५
अथाचितेन चान्नेन ह्यश्नन्यः शृणुयान्नरः
जन्मन्यनंतरे सोहि सूर्यलोके महीयते ५६
अपुत्रो लभते पुत्रान् धनविद्यान्वितान् किल
घृतदीपं प्रकुर्वन्ती शृणुयाद्भक्तिसंयुता ५७
सौभाग्यं लभते सा हि जायते पतिवल्लभा
वैशाखे मासि वै चैव वर्षे वर्षे शृणोति या ५८
अपुत्रा लभते पुत्रान् निर्धना धनसंयुता
वन्ध्यापि धारयेद् गर्भं मृतवत्सा तु जीवितम् ५९
पुत्रं लालयते ब्रह्मन्नुपवासपरा यदा
श्रावणे मासि संमाप्ते ये शृणवन्ति कथामिमाम् ६०
कैलासे स वसेदिन्द्रलोकं माधे च यैः श्रुतम्
आश्विने मासि संप्राप्ते प्रतिपत्तः कथामिमाम् ६१
नवरात्रं जिताहारो यः शृणोति नरस्तथा
नारी वा क्षेममारोग्यं पुत्रपौत्रादिसंततिम् ६२
धनधान्ययुतः सोहि दीर्घायुः शत्रुहीनताम्

समाप्नोति यथा स्वर्गं गमिष्यति न संशयः ६३
वक्रांग्या स्तु प्रसादेन राजमानं च लभ्यते
कथान्ते वाचकं यस्तृ पूजयेद्भक्तिभावतः ६४
गोभिः सुवर्णैर्वस्त्रैश्च ह्यन्नैः साज्यैः सशर्करैः
तांबूलवीटिभिश्चैव क्रमुकैलालवंगकैः ६५
जातीफलैश्च तत्पुष्पैः स भवेन्नाकनायकः
कथांकृत्वा द्विजान् यस्तु भोजयेद्भक्तिभावतः ६६
ब्रह्मलोकमवाप्नोति ब्रह्मणा सहमोदते
कथान्ते विष्णुमंत्रिणं होमं कुर्याद्यथाविधि ६७
सप्तशत्या त्रिकुमारी र्भोजयेद्भक्तिभावतः
वक्रांग्या जायते तुष्टिर्धनगोत्रस्य वृद्धिदा ६८
कार्तिके मासि संप्राप्ते प्रातः स्नात्वा शुचिव्रतः
कथामेतां शृणोतीह स वै विष्णुपुरं व्रजेत् ६९
एतत्पुण्यकथां श्रुत्वा यः प्रयच्छति भक्तितः
रौक्मीं साप्रतिमां कृत्वा लक्ष्मीनारायणात्मनोः ७०
भुक्त्वेह सुखजालं स प्रान्ते सायुज्यभाग्भवेत् ७१
इति श्रीवह्निपुराणे नांदीमुखोत्पत्तौ गालवाख्यानं नाम द्विपंचाशत्तमोऽध्यायः
समाप्तमिदं नांदिमुखाख्यं नांदीपुराणम्

## नान्दीपुराण माहात्म्यम्
### अध्याय १

लीलापद्मं दधानं निजकरकमले लोचनैरुल्लसंतं ।
संताना कल्प वृक्षसुकुसुमचयानेकमाला वहंतं ॥
नित्यं शांतं विमलवपुषं सुस्वरूपं धरंतं ।
वन्दे तं वीरनाथं पृथुतरनतयापद्मयासेव्यमानं १
खंब्रह्मसारं स्तुतविप्र वर्णं गुणार्णवं संश्रित सौख्यकारं ।
वेदादि विख्यात समान रूपं मेरुं गिरीणामिव चकृवांसं २
अथ चतुर्दशोपदेश माह
मरीचिरुवाच
चतुराशीति ब्राह्मणानां ज्ञातीनां च परंतप

निर्मितस्थान नामानि शासनानि बुधैरिह १
सर्व माकरार्य मे तात स्थापनान् द्विजसत्तमान्
कथं नांदीमुखा विप्राः कलौ वाणिज्य वृत्तयः २
इति ब्रुवंतु मे देवाः ऋषीणां धाम नाम च
कलौयुगे महाघोरे स्वस्थानात् भ्रष्टकर्मणः ३
एषां किमिति सामर्थ्यं वृद्धौ नांदीमुखास्थिताः
अग्निहोत्र परानित्यं ब्रह्म घोष रताः सदा ४
नांदीमुखान् विना वत्स उत्सवा न भवंति च
गमनं त्रिषु लोकेषु विमाने पुष्पवाहने ५
कलौयुगे महाघोरे कथं वाणिज्य वृत्तयः
अभिधाने मुखानांदी इति संज्ञां विहाय च ६
ते कथं सशुभाविप्रा नंदबाणा इति स्मृताः
भविष्यंति स्थान भ्रष्टा ब्रह्मघोषविवर्जिताः ७
पूर्वं विहाय तां संज्ञां नंदवाणेति भाषितं ८
ब्रह्मोवाच
जपतां विप्रवर श्रेष्ठ शृणुवत्सयथातथं
तपोभ्रष्टां महामूर्खा अग्निहोत्रविवर्जिताः ९
तथापि पुष्यवर्तित्वं विप्राणां पोषणाय च
भुंजते विप्रसाहस्त्रं पुराय कोशस्य धारिणः १०
मरीचिरुवाच
नांदीमुखाः कथंजाताः किं कार्यं धाम नाम च
केनचीर्णं परा पूर्वं कस्यस्थानेषु स्थापिताः ११
हंसाइव विमानस्थाः संयुक्ता भुवनत्रयं
येषांयज्ञाद्युत्सवेषु वृद्धि श्राद्धादि कर्मसु १२
क्रतुहोमेतथा यज्ञे राजसूये तथैव च
नांदीमुखान् विनानुज्ञां न भवंति कदाचन १३
संतुष्टो सि महादेव सत्येन तपसापि वा
एषां स्थानानि विस्तीर्य केनैव स्थापिता पुराः १४
ब्रह्मोवाच
शृणु वत्स महाप्राज्ञ ब्राह्मणानां महात्मकं

कृतयुगे समायाते सृष्टि निर्वाणं निर्मितौ १५
स्वभावेषु तपोरुद्र मयि संज्ञासमागता
मुखे विकसिते जंभा मम परमास तिष्ठतः १६
संप्राप्ते सप्तमे मासे किमुत्पन्नं च कौतुकं
महाबलो महाप्राज्ञो दानवानां नराधिप १७
अष्टा दशशते संख्ये योजने जल संयुतं
पतितं विंदु माणिक्यं दुर्गे पश्चिम सागरे १८
प्राकारं शीशकयुक्तं परिखा अग्नि पूरितं
मणिभिः कोष्ट संयुक्तं दिव्यमाणिक्य मंदिरं १९
शंखोद्धार पुरी रम्या शंखासुर महासुरः
किं कृतं तेन पापेन मया मुखे विकासिते २०
हृताश्च वेदाश्चत्वार उत्सृष्टं मम चेतनम्
मतिनष्टो स्म्यहं वत्स ज्ञान नष्टस्तथैव च २१
गवां वत्स वियोगे न धावतोहं विभागतः
उपवेदान् पठतो मे विह्वली भूत चेतसः २२
गतो बहुतरः कालः वर्णावर्ण विवर्जिताः
विवेकज्ञान रहिता लोकास्ते धर्म वर्जिताः २३
षष्ठि द्वादश साहस्रं वर्ष संख्या तथैव च
वेदैर्विवर्जिता पृथ्वी जातोहं जाड्यतायुतः २४
षंड धर्म प्रवर्तेते मुद्गलो धर्मत स्तथा
अनाचार रता लोका वर्तंते वेदवर्जिताः २५
शृणु वत्स महाप्रज्ञ दिविस्थः कौतुकं वचः
ब्रह्मविष्णवोश्च रुद्रस्य चेंद्र भाग स्तथैव च २६
अद्यापि त्रिदिवेनैव रुद्र भागोऽपि दृश्यते
विष्णु भागो इंद्र भागः सुरभिर्धूप चंदनेः २७
कथं पृथ्वी महादुःखा सर्व भूत्याथवा भवेत्
कारणं नैवजानंति ज्ञानिनो देवताः कथं २८
कृष्ण उवाच
सत्यलोके अनाचारः श्रुति धर्म विवर्जितः
त्रिलिता देवताः सर्वा ब्रह्मणः पार्श्वतो गताः २९

नवेत्ति ब्राह्मणो वेदं उपवेद परायणः
श्रुति चोरस्ततो ब्रह्मा न जानाति कुतोगतः ३०
विष्णुस्तदा शिवं वीद्त्य शिवेन स निरीद्तितः
ज्ञान्दृष्ट्या विदित्वा च परस्पर मभाष्यत ३१
जगज्जड मया जीव्यं जित पूर्वं जिनेन च
कथयस्व महावीर्य किं कर्त्तव्यं मयाधुना ३२
वेदं विना न यज्ञादि देवतानां प्रतर्पणं
स रद्तति जगद्विश्वं जैन धर्मः प्रवर्तते ३३
कृत्वा मीनावतारं च विलोक्यसप्तसागरं
द्तीरो दतनयां दृष्ट्वा सकृष्णो जगतां पतिः ३४
गृहीत्वा दद्तिणेहस्ते इमां च वर वर्णिनीं
इत्युक्त मादि देवेन वारिधिस्तुवचो ब्रवीत् ३५
पितृवाक्येन स्वेनैव करिष्यामि स्वयंवरं
द्तीरोद तनये देवी विदितंशंखपूर्यथा ३६
दुर्गो परिभ्रमेच्चक्रं ज्वलत्सु परिखा वृतं
सूद्त्म रूप कृतं देवं कंठे मणि विभूषितः ३७
द्वादश क्रोश मल्पंकं शंखासुरोपवेशने
पद्मावती महाराज्ञी ग्रानयामि च वालकं ३८
गृहीत्वा मो--- बंध टत्संगे तत्र वालकं
चतुर्दशवनानांतु भारेण भुवने पति ३९
भग्नंपर्यककं तत्र पततातेन पीडितः
पीडितो मृदितो दैत्यः शंखासुर महाबलः ४०
हाहेति रुदितं सर्वैः ग्राक्रंदयति राद्तसी
नजग्राहोच्छेपितान् वेदान् सरस्वत्या रसंपिबेत् ४१
प्रद्तालिता वेदवत्या वेदान् धाता ततोगृहीत्
विष्णु वाक्य प्रसन्नो सौ शंखचक्र गदाधरः ४२
संप्राप्य मंडले लद्त्मीं द्तीरसागर मंडले
ग्रागता देवताः सर्वे गण गंधर्व यद्तकाः ४३
क धरण्यां स मारुह्य पिता वचन मब्रवीत्
ग्रयं स्वयंवरः पुत्रि वरं वरय वर्णिनि ४४

इत्युक्ता च जलनिधिं लक्ष्मीर्वचन मब्रवीत्
धाता चतुर्मुखो वृद्धः सविता ताप संयुतः ४५
पवने अस्थिरत्वं च स्थित्वा सुरगुरु सदा
पंच वक्त्र महाक्रूरो भस्मी च व्यालसेवितः ४६
बहुकन्यापति श्चंद्रो निरीक्ष्यजगतां पतिं
आदि विष्णो स्तवः कंठे वनमाला च धारिता ४७
सामाला महालक्ष्म्या आदि विष्णो र्जगत्पतेः
तदाप्रहर्षिता देवाः नरायक्षासपन्नगाः ४८
आहूता ऋषयः सर्वे देवमानुष किन्नराः ४९

इति श्री वह्निपुराणे चतुराशीति साहस्त्र्यां संहितायां ब्रह्ममरीचि संवादे
ब्रह्मखण्डे नांदीमुखवर्जने नंदवाणा महात्म्ये प्रथमोऽध्यायः

## अध्याय २

ब्रह्मोवाच
कृष्ण परिग्रहे विप्रैः वृद्धि श्राद्धंप्रकल्पितं
ततस्तत्र नांदीमुखानंदवाणा इति स्थिता १
पूर्वाचारं परित्यज्य सृष्टि निर्माण निर्मितौ
स्थापितं धर्मपुण्येन विवेक विविधैः पुरा २
ये केचित् तपो रूपा अयोनि ऋषि संभवा
समानीता महाविप्रा वेदशास्त्रपरायणाः ३
कश्यपस्यकुले जाता जपंतो मानसे सरे
नांदी वर्द्धन नगरे सरयु चंद्र भागयोः ४
उदीच्या ऋषयः सर्वे रथापिता ब्रह्मणा पुरा
स तन्मध्ये पवित्रस्य शरीर धारिणा द्विजाः ५
चतुराशीति स्थानानां विप्राणां स्थाननिर्मित
पावना धर्म पूताश्च सर्व यज्ञ फलप्रदा ६
चतुराशी स्थानकानां आदि निर्माण निर्मितं
उदीच्या भेद संयुक्ता चतुर्विंशति रेव च ७
सारस्वतास्त्रिभिर्भेदै कर्णोजा पंचभिस्तथा
नंदनिका भेदाश्चत्वारः पुष्कराणां त्रयस्तथा ८

गयावाले पंडकानां वारार्धे भ्येमेव च
खेटाग्रामोटकात्रीणी आटापर्टकक स्तथा ९
तैलंगा भेदैरष्टाभिः भरद्वाजा स्तु सप्त च
कर्णाटापल्लिबालानां भेदाएकादशैव च १०
त्रिविधा चतुर्विधामोडा नागरा श्चैवविंशतिः
मंयुवा आर्णवालाश्च वालखिल्या स्त्रिधामताः ११
कंडूलके त्रिभिः प्रोक्तं वायवे याश्च दीक्षिताः
पालिबाले भेद मेकं पालिपोणि पृथक्पृथक् १२
दशतुरापूर्णकीर्णां दीक्षिता भृगुमालयः
अग्रवाल्पल्लीबालाश्च दाधीचा वारिकास्तथा १३
खंडेलशिखपल्लीक वालांतस्तास्त्रिभेदतः
संनाटच्य मोचकागोडा गुर्जमोडा त्रिधामता १४
श्रीगौडाः श्रीमालश्च इति भेदाः परस्परं
सतीपुरात्रिभिर्भेदैः रोहबालाद्विधातश्रा १५
एतेषां स्थान नामानि भेद संख्यां च मे वद
शेषस्य शासना प्रोक्तां लोकस्थां च प्रवक्ष्यते १६
चतुराशीति स्थानानां ब्रह्मस्थानेषु स्थापनां
तस्याहि तृतीयंस्थानं नांदिनगरमुत्तमं १७
नांदीमुखाभिधानेन नंदवाणा कलौयुगे
शृणु वत्स महाप्राज्ञ नांदि नगर मुत्तमम् १८
आदि विष्णु र्महालक्ष्मी वद्रिकाश्रम निर्मितं
विश्वकर्मा तथाहूतो विष्णुना प्रभविष्णुना १९
सप्तद्वीप वर्तीपृथ्वीं विलोक्य स्थान मुत्तमं
चतुर्विंशविधाने न मूर्तीनां च समानयः २०
स्थापय त्वं महाविप्रान् ऋषीणां ऋषि संभवान्
तपोमूर्तिमहातेजा वेदेशास्त्रपरायणाः २१
प्रवरैश्चैव संयुक्ताश्चतुर्विंशतिगोत्रजाः
विश्वकर्मा व्रजच्छीघ्रं विलोक्य स्थान मुत्तमं २२
विष्णुवाक्यस्य वेगेन भ्रमितोमहि मंडले
विलोक्य आगतः शीघ्रं तदावै विष्णुसंनिधौ २३

करसंपुट संयुक्तः विश्वकर्मा उवाच ह
देवदृष्टां स्थानसर्वं ऋषीणां ब्राह्मण स्तथा २४
रम्यं देवाभिगंस्थानं किंकरोमि जगत्पते
श्रीकृष्ण उवाच
न विप्र अर्थितं स्थानं विश्वकर्मा विलोक्य सः २५
नांदिमुखा महाविप्रा तत्रस्थान मनुत्तमं
विष्णवेतु इदं वाक्यं विश्वकर्मा ब्रवीदिदं २६
विंध्यस्य पश्चिमे भागे मरुस्थली महायशः
स्वर्गपुरया करेमध्ये सुवीरे कपालेश्वरे २७
त्रिकोणस्थान कं पूर्वं मरुस्थल्याग्नि माश्रितः
पृथिवी मरुस्थली सरः उरसारं यथास्त्रीयः २८
रामेण शोपितो बाणैः दुर्वास ऋषि शापतः
मंडपस्य पदेपूर्वात् आग्नेयादक्षिणे कुले २९
त्रिकोणं योगिनीचक्रं पुरीवै कालका तथा
तपस्वेद समुत्पन्नौ दैत्यौ वै मधुकैटभौ ३०
विश्वेदेवा पंचमूर्तिः विष्णुरूपा महाबलाः
तस्यतीरे महारम्यं कासारं काननं वनं ३१
द्वात्रिंशद्योजनं संख्या रम्यं पद्मसरोवरं
विश्वकर्माण माहृत आदिदेश हि शीघ्रतः ३२
विश्वकर्मन् मदीयं त्वं वाक्यं कुरु सुसत्वरं
नवयोजन विस्तीर्णं उच्चस्थं पंचयोजनं ३३
काश्मीरं दिव्यप्राकारं षष्ठिद्वादशकोष्टकं
योमन विंशक संयुक्तं क्रोड मध्ये सुविस्तरं ३४
पंचशतं च अश्वाश्च कोष्टोपरि स्थिताः सदा
रक्षार्थं तु प्रयत्नेन नांदीमुखद्विजन्मनाम् ३५
भविष्यंति कलौ मध्ये नंदवाणा इति ख्वताः
प्रसादेन महालक्ष्म्याः नारायण पदाश्रयाः ३६
हेम कलश संयुक्ता सर्वे हेमालयास्तथा
सजलाः शंभुशरणाः शोभनांगनमंडलाः ३७
उदक भैरवं यंत्रं निष्पाण मेघदंदुभिः

पंच भू मंत्रि भूमिश्च सप्तभूमेक विंशति ३८
अश्वशाला गजशाला कामधेनु निवासकं
पाठशाला शयनशाला दोलाभ्रमरपल्लवं ३९
संकेतं देवपूजायां पद्मपाद्यादिकं तथा
अंतरं त्रिकुटी भित्तौ नांदीमुख्यस्य चार्थिनः ४०
कपाटा र्गलसंयुक्तं गवाक्ष जाल मंडपं
तोरणे तोरणे रंभा मुकुटस्तं भमंडपे ४१
वापीकूपतडागादि आरामश्च गृहे गृहे
विमानान् हंससंयुक्तान् पत्नयेकछत्रचामरान् ४२
हेम्ना विरचिता वध्वा दीर्घीका गृहमाश्रिताः
परिवृतं महावृक्षैः रोपितं राजचंपकैः ४३
घृतकुल्या मधुकुल्या अग्निकुंडागृहे गृहे
सुगंध केतकी जाती पटला मरुवकास्तथा ४४
सुवर्ण केतकी जाती मोगरा रजपंचकैः
कल्पवृक्षः कामधेनुः क्षीराब्धी रत्नसंयुतं ४५
एवं नांदीमुखा विप्राः स्थापनीयाः प्रत्नतः
कृष्णस्य वल्लभा ये ते नंदवाणाः कलौ युगे ४६
आराम हारवाणिज्य वस्त्रं पात्रं निजेच्छया
चीर हीरागरं पात्रं एकैकस्य च विंदुके ४७
द्वात्रिंशत् षोडशकं संख्या मलनिक्षालिकास्तथा
कलिकानेक शालायां चत्वरं क्षालनाय च ४८
नीवार वाटिका रम्या कोष्ठे कोष्ठे पुसंभृतं
हेमागारं वज्रयुक्तं कर्तव्यं नंदवाणके ४९
दुर्गात्प्रकोष्ठकस्यो र्ध्वं ध्वजादंडैः सुशोभिताः
कोणे कोणे मतादिव्य नील वदूर्यशोभितं ५०
नांदीमुख महा स्थानं धर्म कामार्थ संभवं
स्थापनीयाः प्रयत्नेन नांदीमुखा भिधानतः ५१
पवित्र मीदृशं स्थानं न भूतं न भविष्यति
महालक्ष्म्याश्च विष्णोश्च भानंद कीर्ति वद्ध नं ५२
इत्याकर्ण्य महाविष्णोः पूर्वोक्तं विश्वकर्मणः

विष्णुप्रसादितं वाक्यं विश्वकर्माभि वंदितं ५३

इति श्री वह्निपुराणे चतुराशीति साहस्त्र्यां संहितायां ब्रह्ममरीचि संवादे ब्रह्मखंडे नांदीमुखवर्जने नंदवाणा महात्म्ये विश्वकर्मणे शिक्षाप्रदान नाम द्वितीयोऽध्यायः

## अध्याय ३

मरीचिरुवाच
कस्मिन्वैसमये नगरी विश्वेदेवाश्च पंचभि
नंदं विहायदिव्यानां नांदीमुखस्य योजनं १
मरीचि मुनिना प्रोक्तः ब्रह्मा वचन मब्रवीत् २
ब्रह्मोवाच
अथाप्यनंतरं वत्स सर्वदेवाधि देवता
विश्वकर्मा भि संयुक्तो भगवन् वज्रतः सुखं ३
सगतः कालका कोणे त्रिकूटे कमलापदे
तप्यंति तपो रुढा नंदिनी सह देवताः ४
सदृष्ट्वा विश्वकर्माणं मघवा वाक्यमब्रवीत्
नवनंद निदेशो वै विश्वेदेवा च देवताः ५
भवतापोद्भवज्येष्ठो शीघ्रेणात्र समागतः
इति संनह्यतान् सर्वान् सद्यो वैतप आरभे ६
पुनर्ह्यवोचत्वाक्यं तु विश्वकर्माण मेकराट्
इन्द्र उवाच
वैकुंठाधिपते राजा दपिदुग्धो भुजावलैः ७
गृहीत्वा सर्वरत्नानि लक्ष्मी विवाहितासुखं
वृद्धिश्राद्धे सुसंकल्पः ऋषीणां स्थानमुत्तमं ८
अत्रस्थानं हि ते भूमिः नांदीमुखाश्च ब्राह्मणान्
अन्यदेशे न च धरा पवित्रा च महायशः ९
नंदवाणा विधानेन नंदिना द्विजशासनं
भवद्भिः त्यज्यतां शीघ्रं ब्राह्मणस्थानमुत्तमं १०
गच्छन्तु स्वेच्छया सर्वे प्राकारंतु महाप्रभं
इत्याकर्ण्य महादेव्या नंदिनीभव नंदिका ११

विदिता देवताः पंच शप्ताह क्रोधरूपिणी
को सौ देवो जगन्नाथ इन्द्र ब्रह्मादयस्तथा १२
जंबूकोमदनोन्मत्तो व्याघ्रीणां स्तत्रमर्दति
ततः प्रवर्धते युद्धं उग्रं प्लोहकटाकटी १३
इन्द्र ऐरावता रूढो वज्रडस्तो महाबलः
निर्दयं युध्यते क्रूरः तदा भवति कौतुकं १४
कालकाम विश्वेदेवा संप्राप्ता मघवन्प्रति
उग्ररूपो महाकृष्णः सधूम्रो रक्तलोचनः १५
आकाशतनयं वीरं स्तंभ दीनं च निर्मितं
कीदृशं सस्फुटं व्योम क्वाकाशे निगितं पुरा १६
क्वाकाशस्तनय क्रुद्धः गदाहस्तो महाबलः
आज्यपाः सोमपाश्चैव विश्वेदेवाः समागताः १७
अयुध्यंत महाक्रूराः सह ते विश्वकर्मणा
पुरूरवार्द्र विश्वेदेवाः युध्यंते कोटि भैरवान् १८
तट् तटंति महानादं हाहाकाराति कंपितं
सिंहनादो महानासीत् कंपते मेघ पर्वतः १९
कालकस्य महाक्रोधः युद्धे पर्वत मायुतं
नंदनी च महादेव्या डमरू नाद भैरवा २०
शंखं दध्मौ महाविष्णु र्द्वारकायां मुदावहं
इन्द्रेण प्रेषितो दूतः संप्रोक्तश्च जगत्पतिः २१
वृत्तान्तं कथिनं सर्वं लक्ष्मीनारायणाय च
आकर्ण्य प्रेपयामास शीघ्रं सैन्यं महाबलं २२
शंख चक्र गदा पद्म शार्ङ्ग धन्वाहलायुधः
पांचजन्यं पूरयित्वा वींद्रा रूढोऽभवत्तदा २३
पीत वस्त्र महाकायो दिव्यांगश्च महातपाः
कोटिसूर्य प्रतीकाशः महालक्ष्म्या समन्वितः २४
रथकोटि रजाकोटि गजाश्व पत्तयस्तथा
गर्जितं पांचजन्येन देव दुंदुभिना तथा २५
कौतुकं शब्द शब्देन वाजित्रं च प्रथक् प्रथक्
रणत्कार समायुक्त गर्जितं च महांबरं २६

चंद्रसूर्य समाकारौ चामरौ यस्य मस्तके
स्वसैन्येन समायुक्तः नांदीमुख्यस्य योजने २७
जगन्नाथे समायाते सोमपाः पितरस्तदा
सहस्र शीर्ष रूपाश्च कोटिहस्ताः सुरा ययुः २८
चक्रहस्तः हरिर्युध्यन् विस्मितो दशधात्मनः
उवाच युध्यतो योधान् जगन्नाथो महाबलः २९
शुध्यतां सदयं शंखः निवर्ते त महाहवः
मम वाचं महाधीरा वीराः शृणुत सत्वरं ३०
त्यजंतु आयुधान् सर्वान् आगच्छंतु ममाग्रतः
पुरुरवार्द्र विश्वेदेवा श्रुत्वा शीघ्र समागताः ३१
नांदौ च वृद्धिश्राद्धेषु पुण्य कालेमहोत्सवे
तवनामा निधानेन तव देवत दैवतः ३२
कर्तव्यं पुण्यभावेन स्वय मासननिश्चलं
अधिदैवंततः पंच पंचपर्वसु पूजितं ३३
नवदेवं ततो श्राद्ध नंदिनी नव मातरः
कालकाम युतं तस्य सुषट् पुरुष संयुतम् ३४
नवदैवं ततः श्राद्धं युग्मरूपा कलौयुगे
कर्तव्याश्च प्रयत्नेन चतुराशी तिमानिना ३५
करिष्यंति महापूजा ममभक्ताः सनातनाः
इति वाक्य महाविष्णुः विश्वेदेवा श्रुणुत ३६
करसंपुटकं कृत्वा ते नत्वा कृष्णपादुके
विश्वेदेवा ऊचुः
देहि वाचं महाविष्णो नित्यपूजासनातनं ३७
आसने हव्यकव्यानां अस्ति स्वस्ति तथैव च
वृन्ति नांदीमुखेपूजा श्राद्धं च यज्ञकर्मसु ३८
युगेयुगे सदाचारः कृष्णवाचश्चशाश्वतीः
तदुक्तं हि तत्र स्थितिः विश्वेदेवासदैवतं ३९
विष्णु भृकुटी संजाता विष्णुरूपा महाबलाः
तदाकर्ण्य महाविष्णुः अस्तुअस्तु तदाब्रवीत् ४०
वचनं प्रतिष्ठितं स्थाप्य विश्वेदेवा महाबलाः

विष्णुरुवाच
यावन्मेरुर्ध्रुवः स्थायीव्योमनक्षत्रमेदिनी ४१
सप्तैते सागराः पूर्णाः विश्वेदेवाः प्रतिष्ठिताः
वाचं कृपान्वितां श्रुत्वा प्रसिद्धा महिमंडले ४२
भविष्यति महापूजा ऋृषीणां नंदीवर्धाने
ततः प्रहर्षितैर्देवैः पुष्प वृष्टिः मुदाऽक्षरन् ४३
पूर्वोक्तं च महादुर्गं निर्मितं विश्वकर्मणा
हिमालये यथा हेम अभ्रंलिद् प्रांशुवर्णकम् ४४
दृश्यते च महादुर्गः निर्मितो विश्वकर्मणा
हंसादि पक्षिभिः कीर्णं चक्रवाका नुनादितं ४५
दृश्यते च महादुर्गः काश्मीरे परिखा वृभः
सरोवराणि रम्याणि पुष्पच्छाया सुशीतला ४६
आदि विष्णुर्महालक्ष्मीः प्रहृष्टौ विश्वकर्मणे
पंचांग प्रददौ तस्मै संतुष्टो जगदीश्वरः ४७
यदृच्छया च संजातं केवलं विश्वकर्मणा
सूत्रधारः गहाचैत्यं प्रासादं दुर्गमंदिरं ४८
कासारकूपोपवन युक्तं चत्वरसंयुतं
सगवाक्षं च प्रासादं नांदीपुर वरंत्विदं ४९
इन्द्रस्य शृणवतः विष्णुर्विश्वकर्माणमाह्वयत्
इमान् नांदीमुखान् सर्वान् ऋृषीन् गोत्रोत्तमान् सतः ५०
हिमालयं गच्छ शीघ्रं श्रुत्वा वै वायुवेगतः
विष्णु वाक्य हितार्थश्च संप्राप्तो मानसेसरे ५१
गच्छतु सोत्तरे भागे विमानारूढ देवताः
ऋृषिस्थानं तु संप्राप्य विश्वकर्मा करांजलिः ५२
ऋृषीणां शृणवतां नत्वा विष्णुवाक्यमतोब्रवीत्
शृणवंतु ऋृषयः सर्वे विश्वकर्मा ब्रवीम्यहं ५३
अतीतं सुंदरं कार्यं तेषा मद्य महाफलं
निश्चितं स्थानमेतद्धि नांदीमुखमितिस्थितं ५४
वैकुंठाधिपतिर्विष्णुर्लक्ष्मीं प्राप्तो महाबलः
विवाहिता महालक्ष्मीः --द्धि श्राद्धं च निर्मितं ५५

नांदीमुख महास्थानं स्थापितं पुण्यसंभवात्
तत्र शीघ्रं हि गंतव्यं येषांतुष्टो ह्युमापतिः ५६
सपत्नीकाः सपुत्राश्च तप्यंतु तपउत्तमं
तन्मध्ये पंचगोत्राणां आगता विष्णुपार्श्वतः ५७
कश्यापाश्च भरद्वाजा भृग्वैकायनगौतमाः
एते ऋृषि कुलेजाताः संप्राप्ताः मानसेसके ५८
गंगातीरे यजन् सर्वे तेपुश्च शिव संन्निधैः
सपत्नीकाः सदाचाराः स्वगोत्राकुलदीपकाः ५९
तन्मध्ये दशगोत्राश्च आगता विष्णु सन्निधौ
अयोध्यायां यज्ञकर्त्ता सपत्नीको महायशाः ६०
तेषाम् च त्रीणि गोत्राणि आगता मंदिवर्द्धने
एक गोत्रो महाविद्यः मथुरायां गतोद्विजः ६१
भूभुक्षेत्रे महाराज्ञे एक गोत्रः समागतः
चतुर्गोत्रास्तथा विप्रा संप्राप्तासिंधुमंडले ६२
बृहस्पति पदे वत्स आगताविष्णु संनिधौ
नांदीमुख महास्थाने चतुर्विंशति गोत्रजाः ६३
संस्थाप्यादि देवश्च नांदीमुख्यान् सुब्राह्मणान्
इच्छाभोगाः महास्थानाः संकल्प सिद्धयो द्विजाः ६४
सदाचाराः सुविद्वांसो रूपवृंतो यशस्विनः
भविष्यंति कलौमध्ये नंदवाणाभिधानतः ६५
चतुस्तंभे महादीक्षाः एकैकस्य च गोत्रिणः
नंदघोषं महादैत्यं जित्वा हत्वा च तं रणे ६६
तदीयं स्थानं माहृत्य महासमृद्धि संयुतं
दासीदास गणंसिद्धं स्वपरीवार संयुतं ६७
एकैकस्य च गोत्राणां दत्तवान् जगदीश्वरः
तत्रकालात् सुनष्टान्वैवेदान् विप्राश्चलेभिरे ६८
इन्द्राणी नदीतीरे न्यवसं स्तत्रवै द्विजाः
द्विजाँल्लोभयितुं तत्र नगरे नांदिने शुभे ६९
अनेकदान संयुक्ता रत्नैश्च विविधैस्तथा
प्रार्थिता अपिते विष्णोः नैवामन्वत दानजं ७०

विप्रा ऊचुः
नांदीमुखं महास्थानं देहि भागं जगत्पते
आक्रम्यतां महापच्छाः विहायस्वमतं तथा ७१
इन्द्राणीमब्रवीद्विष्णुः नैतेलोभ्यात्रतःपरं
मया स्थानं हृषीकेशं संकल्प्य यज्ञसिद्धये ७२
चतुर्विंशति विप्रेभ्यो मुख्यदास्यामि चासनं
अनुगृह्य द्विजान् सर्वान् गृहंगच्छ च सत्वरं ७३
इतिवाक्यात् महाक्रुद्धा दुर्वाक्यमवदन् द्विजः
अयुक्तं च कृतं देव दिव्यविष्णुसमीपतः ७४
क्रुद्धाश्च देवताः सर्वाः ब्रह्मशक्रपुरोगमाः
नंदबाणा स्ततः शप्ताः इन्द्राद्यैश्च सुरोत्तमैः ७५
इन्द्रादय ऊचुः
गृहंगच्छत पापिष्ठाः दुराचाराश्चक्रोधनाः
दुर्वाक्याश्च महाविष्णोः विद्याहीना भविष्यथ ७६
भ्रमंतु स्थान भ्रष्टाश्च मूर्खा वृषभ खेटकाः
संशप्ता स्तेगताः सर्वे नांदीमुख्याः प्रहर्षिताः ७७
अथाप्यनंतरं वत्स नंदबाणा भिधानतः
हर्षिताश्च महानंदे ब्रह्मस्थानेषु स्थापिताः ७८
तन्मध्ये च महाक्रूरः कालिको नामनामतः
अलोभार्थोऽधि भागःस्यात् नमे न्नैवकदाचन ७९
असंधानं गतः सैवं गतः सोबास मात्मजं
दैत्यालये गतः सोऽपि कालको वैश्वदेवतः ८०
कृष्णेन भव्यं कथितं सुखं गच्छ निजालयम्
चतुर्विंशति गोत्राश्च ऋषयस्ते समासत ८१
काश्यपः कश्यपश्चैव कौत्सश्च कौशिक स्तथा
भार्गवा गौतमाश्चैव भरद्वाजा श्चमुद्गलाः ८२
कात्यायना वैजवापाश्चंद्रादित्या स्तथैव च
शांडिल्याश्च वशिष्ठाश्च जातूकर्ण्याश्च अत्रिपाः ८३
कौंडिन्या श्चौदंवराच वत्सा श्रांगीरसा स्तथा
पराशरा महानंदी आपोंगिरस उद्वलाः ८४

औदवत्साश्च गार्ग्याश्च चतुर्विंशति गोत्रजाः
श्रीकृष्ण उवाच
सर्वे ब्राह्मण मध्येतु एकचित्त समन्वितः  ८५
भवतां मध्यतः स्थाप्यः मेरुः शिखरिणा मिव
सुस्मेर वदनो वीक्ष्य आदिविष्णुर्जगत्पतिः  ८६
चंद्रादित्यसगोत्राय आह कृष्णश्च सन्निधौ
संकल्पंतु ततः कुर्यात् चंद्रादित्य सगोत्रिणः  ८७
चंदादित्यो महर्षिश्च मूले वै स्थाप्यतां सदा
मूल विद्यांददौ तस्मै नगरे राजधारिणे  ८८
मृत्युसंजीविनीं विद्यां चंद्रादित्यस्य गोत्रिणे
अपराजितां महाविद्यां सर्वकामफलप्रदां  ८९
ब्रह्मिविद्या महासिद्धि दायकां वाक्यसिद्धिदां
वेद पारायणी संख्या मूलपारायणोद्भवां  ९०
ददौ तस्मै जगन्नाथो नांदीमुख्याय ब्रह्मणे
हेमागारं चसामत्रं ऋृषिपत्नी विभूषणं  ९१
संकल्पेन महासिद्धिः सर्वज्ञान निधानतां
गमनं त्रिपुलोकेषु मूल विद्यो परिस्थितिः  ९२
तवासनं विना कर्म न भवेद्धि कदाचन
चतुराशीति विप्रेषु क्रतु कर्म समाचर  ९३
तव वाक्यानुवादेन सिद्धिः सर्वत्र जायते
भोगान् सुविपुलान् सर्वान् यथा वोमन इप्सितान्  ९४
कुरुध्वं विपुलं राज्यं ब्राह्मणा ब्रह्मशासने
नांदीमुख महास्थानं स्थापित मादि विष्णुना  ९५
भ्राजत्सुवर्णकान् दोलान् दिव्य चंदनचर्चितान्
मृत्युसंजीविनीं विद्यां दत्वा विष्णुर्महायशः  ९६
मृत्युंजय महामंत्रं चंद्रादित्यस्य गोत्रिणे
भुंक्ष्वं भोगान् सुविपुलान् मनीषिषुत्वमग्रणीः  ९७
ब्राह्मणानां महास्थानं आदिविष्णुर्जगत्पतिः
संस्थाप्य नांदीमुख्यान्वै युगे सत्ये पुरा मुने  ९८
गृहे गृहे सदाचाराः अग्निहोत्रं सदीक्षितं

आवसथ्यं यज्ञकर्म लक्षहोमः पराःकथाः ९९
ब्रह्मघोष श्चतुर्वेदा स्तर्क मीमांसका स्तथा
आगमा निगमा शास्त्र मष्टौ व्याकरणानि च १००
देवार्चन महास्थानं आरामं यत्र मंदिरं
फलपुष्पा नतावृक्षा देवपूजोपयोगिनः १०१
भेरी मृदंग वादित्रैः शंख दुंदुभि वादिभिः
वरकामिनी संहृष्ट गीतगानैः सुसुंदरं १०२
स्यापिता हृष्टपुष्टाश्च तुष्टो लक्ष्मीपतिः स्वयं
तथास्तु इति विप्रेभ्यः विष्णुर्वचनमब्रवीत् १०३
तस्मिन् काले महाविष्णुं नांदीमुख्यश्च ब्राह्मणः
करयो संपुटं कृत्वा अस्तौषीत् कमलापतिं १०४
देव देव महादेव जगद्व्यापिन् जनार्दन
लक्ष्मीपते महाविष्णो सृष्टि संहारकारक १०५
परात्पर तर पूर्व पुराण पुरुषोत्तम
आचारं च विचारं च क्षमस्व करुणानिधे १०६
नविदंति सुराः पारं पूर्णकाम दयानिधे
धारत्रिभुवना धार संसार मोहनाशक १०७
ज्योतीरूप जगन्नाथ वीतपीतांबराधर
नमोनमो जगद्व्यापिन् जगतां जीवन प्रभो १०८
दयामय महाविष्णो भक्तचिंतामणे प्रभो
षणनाद महाविष्णो पंचनाद परायण १०९
गोपाल कामधेनूनां रक्षार्थं काम संवर
ब्रह्मण्य पृथिवीपाल ब्राह्मणानां हितार्थक ११०
त्वंमाता त्वंपितानाथ त्वं मित्रवांधवाश्रयः
जीवात्म रक्षणे राम ऋषिः सिद्धि फलप्रदः १११
अनाथनाथ देवेश जगतां मंगलं कुरू
कल्पवृक्ष महाविष्णो भक्तवत्सल पापहृत् ११२
शंखचक्र गदापद्म शार्ङ्ग पाणे जगद्गुरो
संकष्टे तप्यमानावै स्थिताश्च गहनेवने ११३
सपत्नीका वनेघोरे फलमूलाशनाश्रयाः

ऋतुगा ब्रह्मचर्याश्च भूमिशय्या तृणाधराः ११४
वल्कलांबर संवीताः श्रुतिधर्म परायणाः
इति स्तुवद्धः विप्रेभ्यः संतुष्टो जगतां पतिः ११५
संतुष्टे च जगन्नाथे लब्धं राज्यं च गौरवं
प्राप्तं तवप्रसादेन इच्छाभोगः यथासुखं ११६
कृपया त्वं महाविष्णो प्रसन्नोभक्त वत्सलः
स्वस्थैर्यं च कियत् कालं राजमूत्रं विधीयतां ११७
नांदीमुखेन इत्युक्तं नंदवाणा ह्वयेन च
ऋषीणां वाच गोकर्ण्य जगदीशोऽवदत्तदा ११८
पुरमध्ये महास्थानं प्रासादं सप्त योजनं
अस्मिन्स्थाने महालक्ष्म्या आदि विष्णुर्वसाम्यहं ११९
प्रतिपूज्यः प्रयत्नेन सदृशंफलमाप्नुयात्
भवतां नांदिनां देवः भवतां रक्षणाय च १२०
कुरुध्वं च सुखं राज्यं ब्राह्मणा नांदिनेपुरे
वरं दत्वा महाविष्णुर्जगाम निजमंदिरं १२१

इति श्रीवह्निपुराणे चतुराशीति साहस्त्रयां संहितायां ब्रह्ममरीचिसंवादे नांदीमुख वर्णने नंदवाणा माहात्म्ये स्थापन विधिर्नाम तृतीयोऽध्यायः

## अध्याय ४

ब्रह्मोवाच
शृणु वत्स महाप्राज्ञ नान्दीमुख माहात्म्यकम्
गता बहुतरा वर्षा लक्षद्वादश संमिताः १
कीतिमतीपुरे रम्ये इलो राजा महाबलः
हुंकासुर महादैत्यात् प्राप्तं वैरं महद्भयं २
तेनैव सहसंग्रामे इलो राजःपराजितेः
नांदीमुख महास्थानं चंद्रादित्यं ययौ तदा ३
मृतसंजीविनी विद्या आकारिता तदाहवे
हुंकाराभिहता योधा प्राणहीनाश्च संस्थिताः ४
इलराज हतान् योधान् अभिषिच्य सुजीविताः
हुंकासर महादैत्यः तदाप्राप्तोऽति विस्मयं ५

कालका विश्वदेवास्तु हृष्टास्तिष्ठंति बाह्यतः
हुंकासुर मुवाचेदं कथयिष्यामि निश्चितं ६
नांदीमुखस्य वैरेण अन्यो विप्रः समागतः
इति श्रुत्वा महाक्रुद्धो हुंकोदैत्यो वचोब्रवीत् ७
विहायसुरसंग्रामं व्रजामो नांदिने वने
ब्राह्मणैः सहयुद्धाय दैत्यःसेन्यसमन्वितः ८
नांदीपुरे महाग्रामे द्विजैर्युद्धं समाचरत्
रुध्वा नांदीपुरं दैत्याः युयुधुस्ते भयंकरं ९
कवचान् मंगलान् वध्वा तरलामल्लिकावलिः
चंद्रादित्यस्य गोत्राणां मल्लिनाथो महामुनिः १०
गौतमः कपिलो नाम इल सैन्ये समागतः
द्वात्रिंश मुकुटान् वध्वा प्रतिष्ठा पुरमध्यतः ११
कोष्ठेषु कौतुकं वीक्ष्य विप्रः शस्त्रं नधारयेत्
वेष्टितं च महास्थानं नांदी नगरमुत्तमं १२
कालकैर्विश्वदेवैश्च पूर्वा पर विभागतः
दीक्षिताः साग्निहोत्राश्च क्षणं तत्रस्थिताअपि १३
मोचितावेद मंत्रेण भल्लान् वाणान् कुशोदकैः
कालका विश्वदेवाश्च महाक्रुद्धा दुरात्मने १४
स्थलस्तदृशमां क्षेपः वृक्षाणां परिवृष्टयः
ततो नांदीमुखा विप्रा नंदवाणा भिधानतः १५
विमीताश्च महास्थानं कालकस्यदुरात्मनः
नवदुर्या समाराध्य नांदिनीं नवदेवतां १६
महाकाली महालक्ष्मी ब्रह्माणी ब्रह्ममातरः
रुद्राणी वैष्णवी माया दुर्गा कात्यायनी शिवा १७
योगेश्वरी चादिशक्तिः भैरवी व्योममातृका
नांदीमुखी महास्थाने नंदवाणे द्विजोत्तमे १८
समाराध्य भवानीं तां युद्ध कालेषु संततं
तोपयित्वा प्रयत्नेन आगमैर्वेद मंत्रतः १९
पुराणानां स्तुतिं श्रुत्वा महामाया दयानिधिः
महास्थाने कृपां कृत्वा संप्राप्तासिंहवाहिनी २०

केचित्तु रथमारूढा हयारूढाश्च केचन
हंसयुक्त विमानानां ततोनादस्तु भैरवः २१
डमरु किल्किलाशब्दः हुंकार हुड्डुत्फट
शस्त्रमल्ल कठोराणां छादिता दिव्य चामरेः २२
नागबंधं घटी यंत्रं रथचक्रं शशिप्रथं
दुंदुभि मेघशब्दैश्च कंपिता सनगा धरा २३
त्रिशूल पट्टिशपाश करवाल त्रिशूलकैः
ढक्का नाद रणत्कार सारंगीतूर्य नादितं २४
वर्माणि ध्वजदंडाश्च पताका चल लंवितः
कालका विश्वदेवाय दुरात्मा मयकारकः २५
हुंकासुरं महासैन्ये क्रुद्धो वचनमब्रवीत्
एतन् नांदीमुखस्थानं प्राप्तं विप्रैश्च सनमैः २६
नांदीमुख महाविप्रा हेमागरु गृहे गृहे
कल्पवृक्षः कामधेनु रिच्छावस्तु समन्वितं २७
घृतकुल्पां मधुकुल्पा नांदीमुख निवेशने
वृणुवत्स महाप्राज्ञ नंदवाणस्य संस्थिताः २८
कालकविश्वदेवाय निवेद्य सर्ववस्तुषु
नांदीमुख महास्थानं नभूतं नभयिष्यति २९
भविष्यति वलात्कारे हुंकासुर सुखायवै
ततो निशाचरा क्रुद्धाः दृष्ट्वा सैन्ये च योगिनीं ३०
दुंदुभिनादवेगेन हुंकासुर पुरोगमाः
ततः परस्परं युद्धं सशरैर्मेघवृष्टिभिः ३१
ध्वांतव्याप्तं तदाव्योम ततो युद्धं सुदारुणं
कौतुकं च ततो लोके अट्टालेमंदिरोपरि ३२
कामिन्यो नंदवाणानां निरीक्षंते सकौतुकाः
अथवा नांतरं वत्स नांदीमुख्यस्तु ब्राह्मणः ३३
रथमध्ये पवित्रस्तु चंद्रादित्य सदीप्सितः
मल्लिना-- महावीरः आराधयति वै हरिं ३४
स्मृत्वा चैव महामंत्रं ध्यात्वा च जगदम्बिकां
विदितं च जगन्नाथे वैकुंठाधिपतौ ततः ३५

कमलाथाः पतिर्ज्ञात्वा महास्थानं च वेष्टितं
प्रेपितश्च महावीरः खड्गहस्तो धनुर्धरः
हुंकासुरेण संग्रामे महद्युद्ध मधीकरत् ३७
प्रवृत्ता कोटि दैत्याश्च हेमपर्वत सेधकैः
स्वर्ण गिरिः पूर्ण गिरिः गृहीतो घोर राक्षसैः ३८
लक्ष्मीपति कृपाप्तं यत वृद्धौ नांदिषुमंडपे
मंडप्यस्य महत्स्थानं द्विजानां नांदीवर्द्धने ३९
कमलापतिना दत्ते नांदीवर्द्धन सुस्थिरे
दारुणो घोर संग्रामः षरामासं च प्रवर्तितः ४०
बाणे बाणे च भल्लेषु तोभरेष्वनलस्थितः
स्मृत्वा चैव महावीरः वैष्णवीमपराजितां ४१
नांदीमुखो महाविप्रः चंद्रादित्यस्य गोत्रिणः
स्मृत्वा चैव महामंत्रं संकटे विषमे स्थितः ४२
सस्मार च महाविद्यां ऋषयोध्यान तत्पराः ।
ॐ । अस्य श्रीअपराजिता महामाया वैष्णव्या वामन ऋषिः श्रीलक्ष्मी नृसिंहो देवता सर्वारिष्ट --शन्गार्थे जपेविनियोगः ॥ सहस्त्र शीर्ष्णोऽनंताय क्षीरोदार्णव शायिने शेपभोग पर्यंकाय गरुडवाहनाय भ्रजेयाय अपराजिताय पीतवाससे वासुदेव संकर्षण प्रद्युमन् अनिरुद्ध हयशीर्ष वामन त्रिविक्रम राम राम महाबलप्रद नमोस्तुते ॥ असुर दैत्यदानव यक्षराक्षस सिद्धगंधर्व योगिनी शाकिनी डाकिनी पुरोगान् हर पच मय विध्वंसय विद्रावय शंखेन चक्रेण वज्रेण शूलेन गदया मुसलेन भस्मी कुरु कुरु सहस्त्रबाहो सहस्त्रप्रहरणा युध जय विजयस्व अं असिते सहस्त्र नेत्रोज्ज्वल विश्वरूप बहुरूप मधुसूदन महावराह पुरुषोत्तम वैकुंठ नारायण पद्मनाभ गोविंद दामोदर हृषीकेश सर्वाशुभोत्सादन सर्व देवा भयंकर सर्वभूतवशंकर सर्वयंत्रप्रभंजन सर्वग्रहनिवारण सर्वदुष्टविनाशन सर्वव्याधिप्रशमन सर्वदेवमाहेश्वर सर्वाहित प्रमर्दन सर्वकामफलप्रद नमोस्तुते स्वाहा ॥ ॐ ॥ यइमां अपराजितां परम वैष्णवीं महाविद्यां जपति पठति
स्मरति कीर्तयति धारयति तस्य अग्नि वज्रपलाश भयं न ॥ वृश्चिकं भय सर्प भय समुद्र भय श्वापदभयं न भवेत् ॥ क्वचिद् रात्र्यंधकारे

स्त्रीराजकुले वियौषधे सागरगद वशीकरणेविद्वैषणो च्चाटण वंधन भयं न भवेत् ॥ एतैर्यंत्रैरुदाहृतैः नमस्ते नमस्ते ॥ अस्तु अभयं ॥ अनघे अपराजिते स्मृतिसिद्धे पठितसिद्धे जातवेदसे नमोस्तुते नमोस्तुते ॥ ॐ नमो ध्रुवे अरुन्धति सावित्रि जातदेवेशि मानसे सरस्वति धरणि धारिणि सौदामनि मदनोन्मादिनि अदिते दिते विनते गौरि गांधारि कृष्णे यशोदे सत्यवादिनि ब्रह्मवादिनि कालिके कपालिनि निद्रे सत्यवाचिके जलगतं स्थलगतं अंतरीक्षगतं यां रक्ष ॥ सर्वोपद्रवेभ्यः भूतभयेभ्यः मां रक्ष ॥ स्वाहा ॥ यस्याः प्रपतति गर्भः वंध्यावा जातावा म्रियन्ते बालकाः काकवंध्या च याभवेत् ॥ धारयेत् सात्विमां विद्यां एतैर्दोषैर्न लिप्यते ॥ रणे राजकुले द्यूते नित्यंतस्य जयो भवेत् ॥

शस्त्र धारयते येषां सहस्त्रकांडधारिणां ।
गुल्मशूलाक्षी रोगाणां क्षिप्रंनाशयते व्यथां ॥
सर्वरोगज्वराणां च नाशिनी विषनाशिनी ।
सर्व भक्तसुखायैव कालीसर्वफलप्रदा ॥

सुरसि गौरि सुविद्ये वसुविद्ये आले ताले तमालिनि वंद्ये पवने वाराहि वैनायकि नाशयभियः संहर दुःस्वप्नान् विघ्नान्शमय राजिते संसिद्धिदे दुं-दुभिनादे मनोवेगे मानसि शंखिनि चक्रिणि वत्रिणि शूलिनि अपमृत्युविनाशिनि विश्वेश्वरि द्राविणि २ केशवदयिते पतिसहिते दुंदुभिदमनि किरात वंदिते मातंगी ॐ युं युं ॐ क्रूं ह्रूं भूः त्वरय २ यइमां द्वियत्प्रत्यक्षं परोक्ष दमय शमय मर्दय तेजय उत्सादय ब्रह्माणि माहेश्वरि पूर्वदिशि आग्नेयां चामुंडे वारुणि वायव्ये रक्षोगे प्रचण्ड विद्ये इन्द्रोपेन्द्र भगिनि विजयेप्सिते पुष्टिवर्द्धिनि कामाकुशे कामदुग्धे सर्व भूतेषु मांप्रियं कुरु कुरु आकर्षिणि २ आवेशिनि २ ज्वालामालिनि २ ज्वालामालिनी शोषणे संमोहिनि अनिल पावके महानीलपावके २ महानीले महाश्रीः महि निशेनिशे महाचांद्रि आदिरश्मे चंद्रघंटे किंकिणीनाद वाहिनि असुर मर्दिनि सुरभि सुरेनंते मनश्चिं तितकार्य सिद्धिमाधिनि स्वाहा ॥ ॐ बृहस्पति प्रणीता एषा अपराजिता महाविद्या भगवान् लक्ष्मीनृसिंहोदेवता ममचिंति-तंकार्यं तत्सिध्यतु स्वाहा ॥ ॐ गां गीं गूं गणपतये स्वाहा ॥ ॐ क्षां क्षीं क्षूं क्षेत्रपालायनमः ॥ ॐ लां लीं लूं महालक्ष्म्यै नमः त्रिसंध्यं जपात् सर्व सिद्धिः ॥

ब्रह्मोवाच
जपतां प्रवर श्रेष्ठे युद्धकालेषु प्रार्थिता
ततो नांदीमुखेवि- प्रसन्ना जगदीश्वरी ४४
संप्राप्ता वह्नि कूटाभा जाज्वल्यतरलोपमा
दारुणे घोरसंग्रामे महास्थाने च नांदिने ४५
हुंकामुर स्यसेनायां वैष्णवी अपराजिता
युद्धं प्रकुर्वती तत्र उग्र दैत्य क्षयंकरी ४६
पाशांकुशेन बध्वैव हतं सैन्यं महाबलं
क्षिप्रां जलिहताः केचिच्छूल मुद्गरपापिताः ४७
अर्धचंद्रहताः खड्गैः भल्लविद्धा स्तथापरे
मुद्गराभि हताकेचित् पतिता धरणीतले ४८
शोणितोदा नदीदिव्या देव्याचक्रे ततस्तया
विहायवपुषोमूर्ध्नः कमलाभान् महाहवे ४९
उच्छलद्रुधिरस्वादा दृश्यते रुधिराशना
चर्चिता मेदिनीरम्या सिंदूर कुंकुमैरिव ५०
दुःखं प्राप्ताः महादेत्याः जिता अमृतभोजनाः
हेमवर्ण शरीरा कुंकुमा लेपचर्चिता ५१
कामिनी सेव्यमाना च दिव्यचंदन संयुता
कालकविश्वदेवाय धनुः कवचकुंडलं ५२
कमंडलुं च दिव्यं च कालिकादान्मुदातदा
केचिन्नष्टा महादेत्या र्भल्लैर्वाणैश्चपट्टिशैः ५३
स्त्रवद्रुधिर सन्नाहाः निपेतुर्धरणीतले
शोभिताति महाभूमिर्नागशुण्ड हताधिपाः ५४
जिह्वानिसृतवाहाश्च पतिता धरणीतले
लक्ष दैत्यसमीपस्थ स्वामिकार्यामहाबलाः ५५
संकीर्णेथमृतः सोथ शस्त्रहीनो धरातले
हर्षितं च महास्थानं नांदीमुख्यस्य वर्द्धनं ५६
संहृष्टाः ऋषिपत्न्यस्ताः नंदवाणाभिधानतः
भव्यैश्च ब्रह्मघोषैश्च शंखदुंदुभि निःस्वनैः ५७
गृहे गृहे पताकानां ध्वजाश्च दंडतोरणाः

नांदीवर्द्धने नगरे स्थिता वै ब्रह्मशासनात्  ५८
नृत्यंति कोमलावाणी गीतगानेषु सुंदरी
अग्निहोत्ररताविप्राः नित्यं धर्मपरायणाः  ५९
महास्थानेषु नगरे नांदीमुख्याः समाश्रिताः
महोत्सवकृतंरम्यं देवदेव्यागणेश्वरैः  ६०
ब्राह्मणाः पूजिता देवैः अर्हे अर्घाः प्रतिष्ठितः
वर्धापित इलो राजा नांदीमुख्यैर्द्विजैस्तदा  ६१
पत्नीयुतो नृपः शान्त्या द्विजान्नत्वाययौपुरं
द्विजाश्चैवप्रसन्नास्ते स्वस्थानं प्रतिपेदिरे  ६२
ब्रह्मोवाच
महाकाली महालक्ष्मी वैष्णवी चापराजिता
स्वस्ति शिवयुतं स्थानं निर्भयं ब्रह्मशासनं  ६३
तुष्टाप्रसादसंयुक्ता भवानी स्तोत्र पाठतः
हत्वा निशाचरान् सर्वान् प्रसन्नाजगदंबिका  ६४
परसैन्यं ततः क्रूरं हत्वासाह्यपराजिता
पूजिता ऋृषिपत्नीभिः रुक्मपात्रैः सचंदनैः  ६५
पूजयित्वा प्रयत्नेन हितार्थं जगदंबिकां
ततः शिष्याः स्फुरद्रुपा नांदीमुख्याश्च ब्राह्मणाः  ६६
सुदिक्षिताः महाविद्याः स्थिताश्च हेमपर्वते
गुरु द्रुहः शापदग्धाः मूर्खा वृषभखेटकाः  ६७

इति श्रीवह्निपुराणे चतुराशीति साहस्त्रयां संहितायां ब्रह्ममारीचिसंवादे नांदीमुखवर्णने नंदवाणामाहात्म्ये इलराज्यस्थापनकः नाम चतुर्थोऽध्यायः

## अध्याय ५

श्रीब्रह्मोवाच
अथातो नन्तरं वत्स नांदिने वर्द्धने पुरे
निहते दुर्जने घोरे इन्द्रोवचनमब्रवीत्  १
स्थापिता धर्म कार्यार्थं लक्ष्मी नारायणेन च
नगर्वश्च समाहार्यः घर्मः साध्योह्यहर्निशम्  २
सदाचार युतैः सर्वैः होमदेवार्चने रतैः

विरोधो नैवकर्तव्यः अन्योन्यं तु विशेषतः ३
अदत्तं नैव ग्राह्यं स्यात् अपरीक्षित वर्जनं
हितार्थी च इदं वाक्यं इन्द्रश्च पुनरब्रवीत् ४
परनिन्दा नकर्तव्या नसंगो बृषलैः सह
दृष्ट्वा दृष्टं प्रकर्तव्यं कर्तव्यं शुभ लक्षणम् ५
मघवद्वचनं श्रुत्वा दुर्गावचन मब्रवीत्
शृणवंतु ब्राह्मणाः सर्वे नांदीमुखनिवासिनः ६
आतिथ्यं पालनीयं च ब्रह्मज्ञानं विशेषतः
यतीनां वर्णिनां चैव तपस्वि वनवासिनां ७
कृष्णतुल्यं सुपूज्याश्च पूजनीयाहि यत्नतः
लक्ष्मी नारायणप्रीत्यै धर्मो विष्णुः सनातनः ८
यमिनः जटिला धीराः पंचाग्नि परितापिनः
पोषकाः पोष्यवर्गाणां मासोप वासिन स्तथा ९
स्थातव्यं नांदिने स्थाने स्वगृहे ब्रह्मयोगिभिः
निज धर्मः प्रकर्तव्यः विष्णोः संप्रीणनाय च १०
अक्षमाला करे धृत्वा चिन्ता मन्यां नकारयेत्
वेदांग निरता नित्यं सांगमाराधनं हरेः ११
परपीडांपरित्यज्य परकीयं च संत्यजेत्
एवं विप्राः प्रकर्तव्यं दुर्गाशिष्या इदं वचः १२
अंबिका वाक्यमाकर्ण्य विप्रावचनमब्रुवन्
प्रसन्नायदि देवेशि भवानि भक्तवत्सले १३
पुरूरवार्द्र विश्वेदेवा विष्णु शक्त्यादयस्तथा
आनेतव्या इह स्थाने निवास्याश्चात्रवैपुरे १४
संतुष्टया तयादेव्या विज्ञप्तः कमलापतिः
विश्वेदेवान् समानीय न्यवासयद नीश्वरः १५
तदासौख्यं महाजातं नांदीमुख्येषु ब्रह्मसु
गतोबहुतरः कालः धर्मयज्ञार्थ मंत्रणैः १६
कृतेयुगेनिवृतेतु त्रेतादौ परिवर्तने
कालकाविश्वदेवाहि तपःकृत्वा प्रयत्नतः १७
आराधितो महादेवः पिनाकी पार्वतीपतिः

षष्ठिः वर्ष सहस्त्राणि तपस्तप्तं सुदारुणं १८
संतुष्टः वरंप्रादात् अष्टसिद्धि फलप्रदः
अणिमादि महासिद्धिः कालकायददौहरः १९
ब्रह्मणा च तपस्तप्तं अंतर्दृष्ट समाधिना
देवार्चन जपध्यान काष्टवच्च सुखासनः २०
संप्राप्तः कुतुपः कालः काले वै कालकैस्तदा
पवित्र च्छेदिता ग्रंथिः तिल हीनं च तर्पणं २१
चतुरांचलहीनस्तु यंत्रमुक्तं सुधौतकं
विनिर्मुक्त कचानारी ब्रह्मतीर्थेषुवर्जिताः २२
नैवेद्य मेक वस्त्रेण ऋषिपत्नी प्रकुर्वती
अशुचिर्व्रत भग्ना च कुभांडान्यतपस्विनी २३
आच्छन्न मीक्षणं कुर्यात् पाकोवै दुष्ट वीक्षितः
तेषां वै गृहपत्नीनां गृहीत्वावै दुरात्मनः २४
त्यक्ता च घोर मंत्रेण कालको विश्वदेवतः
ऋषिपत्नी परित्यक्ता व्रजिता कृष्णपर्वते २५
अयोध्यायां महाराजः सीतापतिः सुरोत्तमः
विज्ञप्ता नांदिनोविप्राः रामचंद्रेण भूभृता २६
संकेतेनैवनिर्वर्ण्य अवोचत् हनुमान्प्रभुः
सीतां दृष्ट्वा हनूमान्वै नांदीमुख्यं द्विजं गतः २७
येषां दंपति विश्लेषः नान्यद्दुःखंधरातले
विदितं रामचंदेण तद्दुःखं अंजनासुत २८
रामाज्ञयासमानीय ऋषिपत्नीं गृहाश्रमे
कालका विश्वदेवाय ऋषिपत्नींप्रयच्छ च २९
कालकविश्वदेवस्य वध्वास्तु सत्समागमः
गृहीत्वाकेशपाशेन रिपून् कोष्ठेनिवेशय ३०
मरीचिरुवाच
नांदीमुखो महान्विप्रः दीक्षितश्च महायशाः
तस्मिंश्च विद्यमाने च कथंहि हृतवान्स्त्रियः ३१
ब्रह्मोवाच
अयोध्यातु पुरीरम्या रघुवंशेन पालिता

रामचंद्र गृहे वृद्धौ संप्राप्तास्तत्र ब्राह्मणाः ३२
सोऽपि श्राद्धे ब्राह्मणान् पूज्य अयोध्याया पुरस्तदा
प्रैषयत् रामचंदोहि हनूमंतंससैन्यकं ३३
रथानां च हयानां च गजानां लक्षसंख्यकं
अयोध्यानिः सृतं सैन्यं हनूमान्सैन्यनायकः ३४
चलितावायुवेगेन यत्रास्तेकृष्णपर्वतः
शंखालये महारम्ये यत्रास्ते सुर शृंगकः ३५
कालकविश्वदेवस्य ऋृषिपत्न्योत्र संस्थिताः
वेष्टितं वरलांगूलं वायुपुत्रो महाबलः ३६
उत्पाटच च महाशृंगं चासितं पर्वतोपरि
कालको विश्वदेवश्च तत्क्षणात् निर्गतोवहिः ३७
हनूमता च वीरेण कथितं कालकं प्रति
निरीक्ष्य च दिशः सर्वाः मयालब्धो दुरात्मकः ३८
ब्राह्मणो ह्यागतो हत्वा कुत्रगंता सुराधमा
नांदीमुखान् हर्षयन्ती हतापुत्रीसुनंदिनी ३९
अवश्यंबाहुघातेन युद्धं देहि दुरात्मक
कालको विश्वदेवश्च क्रुद्धो वचनमब्रवीत् ४०
अहं विश्वस्य विष्णुश्च भूतानां सर्जिता स्म्यहं
काले विकलयाम्येष सर्वस्थिति नियामकः ४१
विक्रांतं रावणाद्राज्यं माभूद् गर्वोऽजनासुत
परस्परं महाक्रुद्धौ वापीतुल्यविलोचनौ ४२
कटाकटी महायुद्धं वृक्षैर्वृक्षैश्च भघ्नतुः
ततः शिलामयं युद्धं कालकं ह्यजनिसुतः ४३
गर्जितौ सिंहनादेन उभौ वीरौ महाबलौ
उत्क्षिप्य पर्वताग्राणि कंपिताः सप्तसागराः ४४
ततस्तु देवताः सर्वाः त्रेसुर्नाके महद्भयं
विस्मयं सर्वराजानः रामचंद्रश्च विस्मितः ४५
कालको विश्वदेवश्च हनूमद्विह्वलीकृतः
भग्नानि सर्व शस्त्राणि हतंकवच कुंडलं ४६
हृता निमेषमात्रेण पाताले निजशासने

हर्षितो हनूमान् योगी सिंहनादेन गर्जितः ४७
समर्प्य ऋषिपत्न्यस्ताः ऋषिभ्यश्च प्रयत्नतः
अगच्छत् स अयोध्यायां स्वामिवचनमास्थितः ४८
रामवाक्यं हृदि धृत्वा संप्राप्तो नांदिनेपुरे
पूजितो विप्र वर्यैश्च नांदिनेनंदब्राह्मणैः ॥
अंजनीगर्भ संभूत वायुपुत्र महाबल
कुमारब्रह्मचारिन् वै हनूमंत नमोनमः ॥
धवल वेश्म धवलीकृत दिंग् मंडल वज्रहस्त महाबल पराक्रम
लंकापुरीदहनदीपक असुरदल मर्दन सद्धटानंद श्रीराम महाराम सैन्यनायक
सीताश्वासन परस्त्रीपराङ्मुख वज्रदेहकौपीन कामदेवसंग्राम धुरंधर धीर
यक्षराक्षस पिशाच डाकिनीभयहरण सर्व व्याधि विनाशन परसैन्यमर्दन
भूतप्रेतदुष्ट निवारण दुःखदारिद्रय रोगशोकान्मर्दय उत्सादय भक्तवत्सल
भक्तपालक रक्षरक्ष शरणागत वत्सल वज्रपंजर परदुःखकष्ट निवर्तक
करुणाकर जलनिधि लंघक लंकावगाहन शरण शरण स्वयंभू एकादश
रुद्रावतार अनाथनाथ अशरणशरण वरद नमोनमः ॥ तोषयित्वा प्रयत्नेन
सपत्नीकैर्द्विजैस्तदा ॥
संतुष्टश्चमहास्तुत्या महावीरो वरप्रदः
तत्रस्थितः प्रसन्नश्च नांदीस्थाने कृतालयः ४९
गुप्तस्थितः कियत्कालं विप्राश्च सुखमास्थिताः
चतुर्दश्यां अर्धरात्रेसंप्राप्तः कालकोरिपुः ५०
तं च ज्ञात्वा महावीरः हनूमान् भक्तवत्सलः
निवेश्य पुरमध्यस्थं गृहीत्वा केशपाशके ५१
वेष्टितं परिलांगूलं घटितं वज्र संकुलं
विनिर्मितं महामंत्रैः सहस्त्रदश भारतः ५२
वेष्टितं लोहपाशेन निवेश्य वज्रपंजरे
प्राकार परिखा युक्तंनांदिनेवर्द्धिने पुरे ५३
सुगुप्तालांगुले कोष्ठे कालको विश्वदेवताः
हर्षिताश्च ततोलोकास्ते विप्राः कामिनीयुताः ५४
गर्जिताः सिंहनादेन गर्जन्ति दिविदेवताः
कालकं निगडे बध्वा निकटे वचन मब्रवीत् ५५

श्रूयतां नांदिनोविप्राः पश्चातापो भविष्यति
मांवि भागाद्बहिः कृत्वा वज्रेण यदि बंधितः ५६
अपमृत्युर्निवर्तेतज्वरव्याधि विवर्जितः
सिंहभागं मृगायैव दत्तो नमुखकारकः ५७
कालेनकालपर्याये क्रुद्धेषु लक्षकोटिषु
विप्राणां पश्चिमाबुद्धिः पूर्वं नैव च नैव च ५८
विभागं देहि चास्माकं कुरु राज्यं सुखावहं
नंदिविप्रा नमन्यंते ममबलपराक्रमम् ५९
कालको विश्वदेवश्च कृतवानद्भुतं तदा
कौशीं च राक्षसीं कृत्वा क्रूररूपां भयंकरीं ६०
नगरे ब्राह्मणान्नंदान् मारयेत् कालरूपिणी
राक्षस्युवाच
यज्ञकर्मसमाराध्य ब्राह्मणा वेदपारगाः ६१
तेषांवपुर्न नाश्यंस्यात् स्त्रीप्रसूतांश्चबालकान्
मारयिष्ये प्रयत्नेन द्विजानां नांदिनेगृहे ६२
गच्छ शीघ्रं त्वयाभद्रे कुरुवाक्यं सुनिश्चितं
नगरे चैव उत्पाता कष्टपीडातथैव च ६३
तदातु विस्मयो जातः सर्वेषां द्विजमानसे
तेमिलित्वाद्विजाः जग्मुः अयोध्यांनगरीं प्रति ६४
न्यवेदयंश्च वृत्तांतं रामचंद्राय सर्वतः
आश्वस्ता रामचंद्रेण सैन्यंशीघ्रं समाह्वयत् ६५
गजाश्च रथपत्तीनां कोटिमेव समादिशत्
भल्ल बाणपताकाभिः छत्रैश्चमेघवारणैः ६६
श्रीरामचंद्र महाराज रघुवंश प्रदीपकः
ब्राह्मणानां हितार्थाय संप्राप्तो नांदिनेपुरे ६७
मधुस्थलीमरुद्देशे गोरंभेमूल मंदिरे
नांदीवृद्धौ महास्थानं वृद्धिश्राद्धेषुनिर्मितं ६८
आदौ कृतयुगे स्थाप्यलक्ष्मीनारायणप्रभुः
रामचंद्रे समायाते उत्सवा निजमंदिरे ६९
गृहे ध्वजा पताकाश्च होमार्चन बलिस्तथा

दुर्गे स्फाटिक मारामंपरिषत् संवृतं स्थलं ७०
हेमाग्र रत्न प्रासादं निवास्य कमलापतिः
वापीकूपः सुतीर्थं च आरामात् सर्वदैवतैः ७१
अभिधानं कृतयुगे कर्णाली कालिकापुरी
त्रेतायां योगिनी चक्रं त्रिकोणं सर्वदैवतम् ७२
स्थापितं ब्रह्मणा पूर्वं विष्णुना नांदिवर्द्धनं
मथुरामायावंतीनां समंतु नांदिनीपुरम् ७३
कलौयुगे विशेषेण सुगुप्तास्तत्रदेवताः
महास्थानं महाक्षेत्रं नांदबाणं कलौयुगे ७४
वेदिते रामचंद्रे च हर्षिताश्च पुनःपुनः
पुण्यं प्रशस्य वचनं पुराणोब्राह्मणोब्रवीत् ७५
उक्तं प्रशस्तमाकर्ण्य श्रद्धां वाचं वदत्यसौ
ब्राह्मण उवाच
राम राम महाबाहो रघुवंशप्रदीपक ७६
अशुभंतु निराकृत्य समर्थय च नांदिनः
त्वत्प्रसादान्महासिद्धिः दुष्टविघ्नः प्रणश्यति ७७
कथं पीडापुरेरम्ये कृता च केनवा प्रभो
हनूमत् रक्षितेग्रामे पर्यैक्षत रघूत्तमः ७८
विलोक्य ज्ञानिनः सर्वान् संप्राप्ता कालकंप्रति
आकर्णय रामचंद्र वेदवाक्यं ममैव च ७९
कर्तुमकर्तुं शक्तोसि अन्यथाकर्तुमीश्वरः
यत्त्वमिच्छसि कल्याणं महास्थानेसु नंदने ८०
रघुवंश महाभाग भागंमत्सदृशं कुरु
रामचंद्रस्तु तज्ज्ञात्वा सत्यवाक्यं तु कालकं ८१
लोहबंधं तदात्यक्त्वा तं च शीघ्रं व्यमोचयत्
व्यवस्थां च कृतां तस्मै अशनंविश्वदेवता ८२
रेखया रहितं सर्वं अन्यभाग विवर्जितं
कुलसंघसुपूजायां शंखोद्धारे तथैव च ८३
कर्तव्यं च प्रयत्नेन गुप्तपूजनमीप्सितं
इतरेषु न कर्तव्यं शंखोद्धारे च शाश्वतम् ८४

दुष्टानैवनिमंत्र्याः स्युः मूर्खाः शास्त्रविवर्जिताः
ब्राह्मणानां प्रकर्तव्यं विदुषां वेदवादिनां ८५
नांदिश्राद्धे विशेषेण कर्तव्या भक्तवत्सल
अन्येषां सर्वलोकानां शंखोद्धारं विवर्जयेत् ८६
कालक विश्वदेवानां आसनंदेयमर्चितं
अन्येषां विश्वदेवानां अन्यश्राद्धे न विद्यते ८७
सर्वेषां च सदात्मानं मुक्तिस्तत्रनविद्यते
रामेण वचनं दत्तं वरंलब्धं च कालकैः ८८
संस्थाप्य नांदीनगरे रक्षपालोथ कालकः
पुरे महोत्सवो जात स्तोरणानि गृहे गृहे ८९
किंकिणी नादशब्दश्च ढवकाभेरी मृदंगकैः
नूपुरैः किंकिणीभिश्च गानैर्युक्ताश्च योषितः ९०
शांतनिश्शाण निर्घोष तैलत्र्यंबक तोरणैः
निनाद पंचवाद्यैश्च मृदंगभेरी दुंदुभिः ९०
मृदंगभेरीपणवानकझल्लरी बंसिका वेणुवाद्यैश्च नभः शब्दावृतं ह्यभूत् ॥
घणण घनन् बुघरी घंटा झंकरी मुरलिकातथा ९१
रणत नूपुर रम्याश्च गीतरम्याश्च योषितः
किंकिणी कंकणारावं धवलावृत गायिकाः ९२
ब्राह्मणाः मंत्रघोषैश्च वेदादि ध्वनि भिर्युताः
शांतिकं वेदमत्रैश्च अगारं दधि कुंकुमैः ९३
गृहे गृहे पताकाश्च ध्वजाश्च पुष्पमालिकाः
विप्रान् सुखेन संस्थाप्य रामचंद्रोनराधिपः ९४
नांदी महोत्सवं कुर्वन् शुशुभेब्राह्मणैः सह
स्वसैन्य सीतासहितः संप्राप्यस्वांपुरींमुदा ९५
अयोध्यां स्वस्थलंप्राप्य रामोराज्यं चकार सः
रामराज्ये महत्सौख्यं निर्धनो नैव दृश्यते ९६
नाभूत् दुःखं च दारिद्र्यं पुत्रशोकोनविद्यते
वयः शताब्द पर्यन्त नैरुज्यं सर्वतः सताम् ९७
सदा पुष्पफलानम्रा वृक्षा दैन्यं न दृश्यते
नरानार्यो जराहीना भूमिः सस्यान्विताः शुभा ९८

एक नारी व्रताः सर्वे तथापतिव्रतास्त्रियः
इच्छावृष्टि करामेधाः घटोध्नी च पयस्विनी ६६
इति श्रीवह्निपुराणे चतुराशीति साहस्रयां संहितायां ब्रह्ममरीचिसंवादे नांदीमुखवर्णने नंदबाणा माहात्म्ये कालकाक्त विश्वेदेवेभ्यः रामचंद्रेण वरप्रदानं नाम पंचमोऽध्यायः ॥

## अध्याय ६

श्रीब्रह्मोवाच
अथातः संप्रवक्ष्यामि शृणु वत्स हितार्थकं
नांदीमुखानां विप्राणां धर्मयज्ञादिकं फलं १
नित्यं महोत्सवयुतं नांदीपुर मभीप्सितं
महास्थानं महारम्यं नांदबाणं कलौयुगे २
कर्मकर्तुं समारब्धं ब्राह्मणैः नांदिवर्द्धने
नांदी वृद्धि गृहे चैव सुखं राज्यं चकार ह ३
संजातं च कियत् कालं नगरेतस्यचाद्भुतं
कालक निर्मिता पूर्वा मारीनामेति राक्षसी ४
ब्रह्मगृहे महाक्लेशं मारी पीडां चकारह
तस्याः क्लेशो महापीडा विस्मयो नांदिवर्द्धने ५
विश्वेदेवा स्तुविज्ञाय ह्युत्पातान् कालकाकृतान्
रक्षार्थे स्थापितोदेवैः किमर्थं पीडयेज्जनः ६
कालकां विश्वदेवास्ते न स्मरंति च राक्षसीं
राज्यैश्वर्य मदोन्मत्तः नेक्षते महिमंडले ७
विचार्य कालकेविश्वे ज्वलंतीं ब्राह्मणाग्रतः
क्रुद्धां तां निजशांत्यर्थं हनूमत् पूजनं व्यधुः ८
रक्षार्थे हनुमान् वीरः प्राकारे द्वारदक्षिणे
अंजनीसुत माराध्य दध्युर्मीलितलोचनाः ९
पुष्पैर्धूपैः सनैवेद्यैः नानाफल समन्वितैः
स्तुवंति ब्राह्मणाः सर्वे विश्वेदेवाश्च सर्वतः १०
सुभक्ति पूजितः पूज्यः विदित्वा ह्यजंनासुतः
वायुपुत्रश्च संतुष्टो नगरे रक्षणाय च ११

देशेग्रामे तथा दुर्गे पूजयेद्योजनीसुतं
पुरेषु राजद्वारेषु गृहे द्वारे सुरालये १२
प्रयत्नेन पूजकानां सर्वोविघ्नः प्रणश्यति
जराव्याधि परित्यागः अपमृत्युविवर्जितः १३
हनूमान् नांदिनंस्थानं अरक्षतूमारिकाभयात्
सर्वासुतिथिषु पूज्यः चतुर्दश्यां विशेषतः १४
मार्गेतुमारिकांदृष्ट्वा वायुपुत्रो महाबलः
साचदृष्ट्वा महाक्रूरः ऊर्ध्वकेशीभयंकरी १५
रक्ताक्षी दीर्घलंबौष्ठी पीडयंतीं च नांदिकान्
निवेश्यमध्येनगरं विचरंती च राक्षसी १६
हनूमांश्च महावीरः संप्राप्यतत्समीपतः
केशेगृहीत्वा दृढंबध्वा निशामध्ये निशाचरीं १७
पाशबंध निबद्धा सा पीडितादुःखसंयुता
ईदृशी पापरूपासा पृष्टा च ब्राह्मणैस्तदा १८
ब्राह्मणा ऊचुः
कृतः स्थानात् समायाता कुत्रस्थाने च तिष्ठसि
का त्वं कथय चांडालि पापिष्ठे पापकारिके १९
ब्रह्महत्यासमारूपे पीडितं स्थान नांदिनं
लब्धाबहुतरे काले अंकुशैः पातयामहे २०
मारिका उवाच
यस्मिन् काले अहंजाता जन्मकालोमयार्जितः
न मृत्युः क्वथिते तैले शस्त्राग्नि विषसर्पतः २१
जले वस्त्रे न लिप्यामि अजेया महिमंडले
विद्यते भवतां विघ्नः मयाप्रोक्तं सुनिश्चितं २२
अत्रस्थाने महाबाहो कालको विश्वदेवता
तेनैव निर्मिताहं च ध्वंसनार्थं पुराद्विजाः २३
इत्युक्ताः ब्राह्मणाः क्रुद्धा आनीयोचुश्च कालकं
विभागं भागतो गृह्य निर्मिता राक्षसीत्वया २४
करयोः संपुटंकृत्वा कालको वाक्यमब्रवीत्
ममैवकोपतो जाता सत्यं क्रोधेन निर्मिता २५

बंधन लांगले कोष्ठे तदैषा च विनिर्मितः
नेदानीं पीडनीयाश्च मारिकेनाम राक्षसि २६
राक्षस्युवाच
ममतु प्रतिमां कृत्वा पूजयित्वा प्रयत्नतः
पुरायभागं च मेदेहि पुरेशांतिर्भविष्यति २७
एवं श्रुत्वा तथाकृत्वा पूजां सर्वे समादधुः
संकटेस्मरणं कार्यं मारिका शमनं भवेत् २८
तदा च ब्राह्मणास्तुष्टाः नांदीपुर निवासिनः
संतुष्टा राक्षसी क्रूरा भावेन फलमादिशेत् २९
ब्राह्मणेभ्योवरंदत्वा मारीचोराक्षसीं प्रति
मत्तस्त्वया वरं ग्राह्यं यत्तेमनसिरोचते ३०
इत्युक्तं नांदिनैर्विप्रैः स्वधावाचेति राक्षसी
क्रिया युक्तं नलभ्येत वैष्णवं शैवमेव च ३१
शैवे च वैष्णवे कार्ये अस्याभागो नविद्यते
तदाज्ञांत महाविप्रैः नंदवाणैः विधानतः
किंचमारि त्वयावाक्यं सत्यमुक्तं तथास्तु च ३२
ब्राह्मणा ऊचुः
आचारबलहीनोऽपि हव्यकव्येषुपंक्तिभुक्
पादेन स्पृशतश्चैव षडंशं लभ्यते त्वया ३३
नांदीमुखास्तु ये विप्रा स्तत्पुरे नास्ति वं भयं
भांडेषु शूद्र संपर्कः उच्छिष्टं यद्गृहे भवेत् ३४
अस्नाता भुंजते विप्राः व्युपवीता विशिखास्तथा
भ्रष्टाचाराः प्रवर्तंते देवार्चा हीनभागिनः ३५
संध्याकालं त्रिकालंनो साध्नुवंति द्विजाश्चये
तेषांपुरायविभागाच्च दशांशो लभ्यते त्वया ३६
अप्रतारणमानां च ताडयेत् स्वकुटंबिनीम्
शिरोयूका वस्त्रयूका हविष्यंति स्त्रियो धमाः ३७
अशुच्यो मुक्त केश्यश्च नित्यं कलहकारिकाः
भर्तृ वाक्याऽवमानिन्यः नवांशंलभ्यते त्वया ३८
खंडणीं प्रेषणीं चुल्लीं उदकुंभीं च मार्जनीं

अनिरीक्ष्य च कर्त्रीषु अष्टमांशं तवास्तितत् ३९
पादेन हन्यतेगौश्च नरनारी तथैव च
तेषां पुराय विभागाच्च सप्तमांशः तवास्तिहि ४०
अधौतदर्भपुष्पाश्च अनाचांता द्विजास्तथा
वर्तन्ते कर्मकर्तारः षडंशो लभ्यते ततः ४१
अमाश्राद्ध पितृश्राद्धं देवकार्यं विशेषतः
एकवस्त्रा प्रकुर्वन्ति पंचमांशं तवास्ति हि ४२
एकवस्त्रा मुक्तकेशी नैवेद्यंयापचेद्यदा
तेषांपुरायविभागाच्च सप्तांशं लभ्यते त्वया ४३
ब्राह्मणो नांदिनीं त्यक्त्वायश्चवै वृषलीपतिः
तस्यान्नं भुंजतां नित्यं भ्रष्टाचारः प्रवर्तते ४४
तेषां पुरायं षडंशं च सर्वं गृह्णातु राक्षसी
जलस्नातास्तुये विप्रा देवादींस्तर्पयंतिनो ४५
तेषां पुरायात् षडंशो हि प्राप्तव्योराक्षसित्वया
ब्राह्मणोति महामूर्खः वेदशास्त्रविवर्जितः ४६
हव्यंकव्यं नजानाति स्वधास्वाहा तथैव च
वैश्वदेवं विनाकर्म कारयेच्च द्विजाधमः ४७
अपोशानं विनाभुंक्ते षडंशोलभ्यते त्वया
एकादश्यांतु योभुंक्ते दिवाभोजीचतुर्दशी ४८
अमार्क योगे द्विर्भुंक्ते षडंशंलभ्यतेत्वया
मरीचि वाचमाकरार्य विप्रास्ते अन्वमन्वत ४९
तथा च राक्षसी घोरा अत्यन्तं हर्षमागता
हर्षिता चैवसंतुष्टा मारीचं वाक्यमब्रवीत् ५०
युष्मत्स्थानं हिरक्षामि यज्ञकार्यं विशेषतः
संकटे विषमे स्मर्या त्रिःप्रोक्तं तु मया खलु ५१
नभविष्यंति पीडाश्चकासश्वासश्च गुल्मकः
विस्फोटक महाव्याधिः अत्रपूर्यां न दृश्यते ५२
चक्षूरोगा नविद्यन्ते नैरुज्यं सर्वतस्तथा
बालानां च हितार्थाय नव्याधिर्दृश्यते क्वचित् ५३
कुलवृद्धिर्महावृद्धिर्धनधान्य यशस्करी

संकेतपूजनं कुर्यात् चतुर्दश्यर्ध रात्रिके ५४
संकटान्मोचयिष्यामि सर्वान् नांदीमुखान् पुरे
यत्त्वयाऽतुलबाहुश्च विघ्नानांनाशनो द्विजाः ५५
आनयित्वादृढं बध्वा पुरे च नांदिने शुभे
संतुष्टा राक्षसी घोरा ब्राह्मणा हर्ष माप्नुवन् ५६
नगरे शांतिकं कर्म वृद्धियागमयारभत
अश्वमेधादिका यज्ञाः हेमलांगल कर्पणम् ५७
राजसूय अजामेधा लक्षहोम महोत्सवः
षडंशस्तंभ वस्त्रैश्च ध्वजाभिश्च पताकिताः ५८
द्वात्रिंशत् हस्तमात्रं च दंडंनिक्षिप्यमंडले
त्रिकोण कुंडके जुहन् सर्पिस्तिलयुतंमधु ५९
शर्कराक्षीर खंडाद्यं फलैश्च विविधैरपि
चूलिका पक्वद्राक्षेक्षु मोदकैः पुष्पसंयुतैः ६०
अजुह्वन् नारिकेलैश्च उत्सवं नांदिनेपुरे
ततस्ते ब्राह्मणाः सर्वे नंदिता नांदिनेपुरे ६१
चतुर्थांशं च यो राजा रकद्य उत्तरापथे
घतिवध्वो पुरेदेशे खुरासान नराधिपः ६२
आनयित्वा बलात्कारात् मंत्राकृष्टि प्रमाणतः
अन्येषु दुष्टराज्येषु म्लेच्छा दैत्येषु राक्षसाः ६३
आनयिष्यति शीघ्रेण बंधनैर्निगडी कृतः
स्थाप्य कृतयुगे आदौ संतुष्टे कमलापतौ ६४
वृंदावनं राधिकेशः वैकुंठं कमलापतिः
ब्रह्मलोके यथाब्रह्मा तथानांदीपरे द्विजाः ६५
हिमाचलो हिमेनेव कल्पवृक्षे द्विजाइव
नांदीमुखा नांदीपुरे महारम्ये भविष्यथ ६६
लक्ष्मीनारायणे नादौ य्हुगे कृतयुगे स्थितं
श्रुणु वत्स कलौ विप्रा नंदवाणाभिधानतः ६७
पवित्रंतु महास्थानं नांदीमुख्यस्य शासने
शुक्लपक्षे पताकाश्च व्याकीर्णे व्योममंडले ६८
हेमधूमो भवेत् कृष्णास्तस्मिन् काले भविष्यति

पूर्णाहुतौ घृतंहोम्यं तिलाश्च यवशर्कराः ६९
गार्हपत्यादिकं होम्यं अन्यद्यज्ञ विधानतः
त्रिषुलोकेषु विख्याताः नांदिनो नांदिनेपुरे ७०
नागलोकेऽमरावत्यां कीर्तिर्जातामहोज्वला
वेदध्वनियुता विप्राः गीतयुक्ताश्च योषितः ७१
अन्योऽन्यं सम्यगर्चन्ति कुंकुमैः कज्ञलैस्तथा
नलोभोनचलोभार्थी नांदि स्थानं सुरालयं ७२
समालोक्य नांदिनो विप्राः यागारं भमकुर्वत
आरब्धो ह्यद्भुतोयोगो नरमेधो महोत्सवः ७३
चंद्रादित्यः समुत्पन्नः इन्द्रसूर्यविलोचनात्
षडंशाद्धर्म संभूतः कुमारो वेद पारगः ७४
संस्कारान्वेदगान्कृत्वा हुत्वाग्नौच महाहुतीः
शर्करापयसी दत्वा पोषितो भोजितश्चसः ७५
नित्योमहोत्सवो जातः होमदानादि तर्पणैः
मिष्टान्नैस्तर्पिताः पूजिताः सर्वे चतुर्वर्णा द्विजातयः ७६
मत्तासिंहागजा गावः निर्वैरा अभवंस्तदा
मोदकाघृतपक्वाश्च अपूपाः षड् रसान्विताः ७७
नाना विधाश्च शाकाश्च लेह्य पेयादिकं ह्यभृत्
चोष्यं स्वाद्यं भोजनं च वटकैर्धेवरैस्तथा ७८
क्षीरादि षड्रस स्वादः भूयःखंडघृवौदनैः
पर्पटैः शालिपाकानां शाकपाकैः सहस्त्रशः ७९
महीपी दुग्धसंयावैः सुष्ठकर्पूर वासितैः
शिखंडैर्भोजिताः सर्वे भव्यैर्नांदिमुखैस्तदा ८०
इहाश्चर्यं महज्ञातं द्विजानां पुरायसंचयात्
इन्द्रादि लोकस्वर्गादिः कंपितश्च सदैवतः ८१
कंपितं वीक्ष्यसर्वं हि इन्द्रोवाक्यमथाब्रवीत्
कल्पद्रुमंकंपितं च वीक्ष्यापृच्छन् स्वयं हरिः ८२
पृष्टक्लल्पद्रुमोवोचत् स्वग्रामोदह्यतेऽधुना
नांदीमुखानां संपूर्णः नरमेघ महोत्सवः ८३
श्रुत्वावज्री विदित्वातं कुमारं नेत्रजंतदा

अदृश्येनययौतूर्णं देवेंद्र क्षीर सागरं ८४
विस्मिताः ब्राह्मणाः सर्वे यागोऽयं निष्फलीकृतः
निरर्थकं भवेत्सर्वं तप्तं षोलश वर्षकं ८५
नवदुर्गां समाराध्य मारी नामच राक्षसी
विलोकय अयंपुत्र हृत्वाकुत्राहितः शुभे ८६
मातापित्रोर्महादुखं संकष्टं बांधवादिषु
रुदन्ति विलपन्तेच भगिनी मातरस्तथा ८७
मनस्तापो महाविप्राः क्षुन्निद्रासनवर्जिताः
ब्रह्मघोष नशृणुमः दुंदुभिवादनं तथा ८८
आक्रंदते पिताचैव कुमारो जनवल्लभः
महास्थान महादुखं रुदन्त्या बालवृद्धकं ८९
इतिकष्टं विदित्वा सा नवदुर्गाच राक्षसी
गृहीत्वा पुत्र मायाता शीघ्रं हि क्षीर सागरात् ९०
समानीतं चतनयं दृष्ट्वा षोडश वार्षिकं
हर्षिता श्च द्विजाः सर्वे नांदीमुखपुर स्थिताः ९१
पुरुहूतकृतं ज्ञात्वा क्षांतंतच्च द्विजैस्तदा
क्रतुस्थाः हर्षिताः सर्वे पितरौ च विशेषतः ९२
धवलां गीत मांगल्य मृदंगाविप्रवेश्मनि
महोत्सवस्तदा जानः चतुर्वेदैश्चशब्दितः ९३
सुमंगल्यं समांगल्यं नांदीमुख प्रतिवृताः
ततस्ते ब्राह्मणाः सर्वेनांदीपुर निवासिभिः ९४
प्रारव्धं कोटि भोज्यं च तर्पितास्थिरजंगमाः
क्वचिच्चेन्द्रपुरीं प्राप्तापृष्टा शक्रेणके द्विजाः ९५
किमायाताः अत्रसर्वे इन्द्रोनत्वाब्रवीद्वचः
ब्राह्मणा ऊचुः
प्रयागं च महातीर्थं देहिश्राद्धाय देवराट् ९६
नांदीमुखानांवचनं श्रुत्वोवाच मरुत् सखः
प्रयागंनप्रदास्यामि मृत्युलोके कदाचन ९७
अन्यदिष्टं प्रायच्च्यं हि दैवंस्थानं प्रयागकं
तच्छ्रुत्वातुवचः क्रुद्धाः गृहंजग्मुः द्विजाश्चते ९८

नांदीपुरं तु संप्राप्य कृष्णात्रिगोत्रभाग्द्विजः
रक्तं निष्कास्य भ्रंघायाः इन्द्रेणैव अनादृतः ९९
सशिष्य श्चंद्रादित्यस्य कृष्णात्रिश्च सुमेधसः
कौशंपौत्तलकंकृत्वा वेदमंत्राभि मंत्रितं १००
महाक्रुद्धः महाक्रूरः उत्पन्नोब्रह्मराक्षसः
रक्तबीजा सुरो नाम इन्द्रध्वंसीमहाबलः १०१
रक्तबिंबासुरोऽधावत् गतवानमरावतीं
स्तंभमाणिक्यसंयुक्तां तोरणांचलसंयुतान् १०२
वज्रादिभिस्ताडितोऽपि न हतो युयुधे बलात्
भीतःसुरपतिर्धावन् बालुकासुनिपातितः १०३
विदित्वावज्र हस्तोऽपि संक्रुद्धोब्राह्मणान्प्रति
वालुका घोररूपेण शोषणास्त्रेण शोषिता १०४
रक्त बिंबापुरी यत्रमल्लकूप समीपतः
मृत्युसंजीविनीविद्या चंद्रादित्यात्समागता १०५
पुष्पनाथो महाव्यासः तेनज्ञातं कथानकं
गौतमीतीर मासाद्य विद्याजप्तापराजिता १०६
ब्राह्मणानावमन्येयुः पुष्पनाथेन भाषिताः
सत्रयोदशगोत्रश्च पुष्पनाथोऽपलायत १०७
चलितं च पुरंसर्वं नांदीमुख समीपतः
शेषाश्चैकादश गोत्राः स्थलितं पुरमध्यतः १०८
द्वात्रिंशद्योजनं तत्र सपद्मं च सरोवरं
कलियुगे त्वविधानं स्यात् रम्यंबालसरोवरं १०९
मांडवस्य समीपेतु मणिभद्र इतिस्थितः
गौरगंगानदी तीरे शृंगे च रत्नपर्वते ११०
स्थापितं इन्द्रकोपेन ब्राह्मणा निधनं गताः
इन्द्रः स्थानाच्चभ्रष्टोऽभूत् विष्णुकोपेनसत्वरं १११
पतितस्तेनपापेन अन्यइन्द्रः सुरालये ११२

इति श्रीवह्निपुराणे चतुराशीति साहस्त्र्यां संहितायां ब्रह्ममरीचिसंवादे
नांदीमुखस्थान स्थलितं नाम षष्ठोऽध्यायः

## अध्याय ७

मरीचिरुवाच
ध्वंसिते च महास्थाने स्थानभ्रष्टा द्विजोत्तमाः
ततस्ते नांदिनोविप्राः किमकुर्वतशासनं १
ब्रह्मोवाच
स्थलितं विलयं जातं आरामाः निर्जनीकृताः
धरातलगतं चैत्यं प्राकार हेमतोरणं २
युद्धं तच्चमहाघोरं जनहीनासर्वतो धरा
गतो बहुतरः कालः अयुताब्द मितस्तथा ३
मूलतो दशगोत्राश्च चंद्रादित्य प्रसादतः
बहुघनं गृहीत्वातु गतास्ते हेमपर्वते ४
अथातः संप्रवक्ष्यामि नंदवाणमहात्म्यकं
निवृत्ते कृतयुगे च संप्राप्तेद्वापरे युगे ५
नंदघोषवतीपुर्यां नंदोराजा महाभुजः
निरस्तः गोत्रिभी राज्यात् सगतश्चोत्तरांदिशं ६
महाभूमौ महास्थानं दृष्टं वदरिकावनं
वनाश्रमं च दृष्ट्वा सौ चमत्कृतिकरं परं ७
वनाश्रमे चरन्रात्रौ श्वेतकुष्ठांगकं जनं
दुःखिनं तुनृपो दृष्ट्वा विस्मितस्तस्थिवांस्तदा ८
गंगासमीप कुंडे च जलस्नातोजनस्तदा
दिव्यदेहक्षणाज्जातः विस्मितो नंदभूपतिः ९
गंगातीरे स्थितो राजा श्वेतः कुष्ठः कलेवरे
तस्य कुंडस्य तोयेन स्नातः कुष्ठान्वितो नृपः १०
दिव्यदेशः महाकायः विस्मितो नंदभूपतिः
अयुताब्दं स्थितस्तत्र ब्रह्मस्थाने समुल्लसन् ११
स्थलिते हेमप्राकारे प्रासादे दिव्यमंदिरे
अश्वमारुह्य राजासौ दिव्यंबाणममुंचत १२
बाण विद्धः कपोतश्च पतितोधरणितले
उत्तीर्य हयतः राजा शरविद्धं तदाग्रहीत् १३
द्रुतं समीपमागम्य दृष्टं सैन्यं च भूभृता

क्षिप्तोबाणस्त्वया राजन् प्रासाद शिखरेयदा १४
वाणे नैव पदंलब्धं नंदवाणं प्रतिष्ठित
व्योम वाचं तदाकर्ण्य नंदराजा च शाश्वतीं १५
ततस्तु हर्षितो राजादधौ विष्णुं रमापतिं
ध्यात्वा गदाधरं देवं शार्ङ्गधन्वानमीश्वरं १६
कृतांजलिर्महाराज पादयोर्न्यपतत्प्रभोः
लक्ष्मीपते त्वयाहस्ते शार्ङ्गं धनुः समाहितं १७
मुक्तं बाणं मयायत्र सजलापृथिवीतदा
तस्यस्थाने महाकूपः कार्यारक्षा च नांदिनां १८
वाणस्थानं च लब्धंतत् नांदवाण मितिस्थितं
स्राकाशे नंदवाणीयं नवनंदासुमेदिनी १९
द्वयोरेकतरैःप्रोक्ता नंदवाणाउदाहृतः
कालकः विश्वदेवश्च संतुष्टोनंद भूभुजे २०
कथितं पूर्ववृत्तांतं पुराणं ब्रह्मशासनं
सदृष्ट्वा हेमकलशप्रासादे कमलापतिं २१
प्रशस्य कोटिशो भूपं एकच्छत्रंव्यधात्प्रभुः
कूपान् वापीश्च निर्माय स्तंभान्वितमहापुरं २२
नंदराज्ञेददौ राज्यं केशवः कमलापतिः
एकच्छत्रं शुभंराज्यं प्रसन्नो गरुडध्वजः २३
सर्वसेनासमायुक्तः बभूवस महान्नृपः
स्राकारयत् महासैन्यं सर्वसेनासहं युधि २४
चामर ध्वज पताकाश्च छत्रं च मेघवारणं
नंदभूपोमहाराजा संस्थितो हेमपर्वते २५
ब्राह्मणास्ते गताः शिष्टाः नांदीपुर निवासिनः
चतुर्वेदसुनिर्घोषाः स्रग्निहोत्र परायणाः २६
सकलत्राः पुत्रपौत्राः न्यवसंश्च हिमालये
त्रयोदशसुगोत्रांश्च द्विजान्नंदोननाम च २७
करयोः संपुटं कृत्वा ऋृषीणा मग्र संस्थितः
निवेद्यसर्ववृत्तांतं नंदराजो महानृपः २८
प्रसादाच्च महाविष्णोः ब्राह्मणानांप्रसादतः

भवंतु ऋषयः सर्वे नंदवाणाः वसंत्विह २९
रक्षिष्यामि प्रयत्नेन खानपान समन्वितान्
यद्वश्च रोचतेविप्राः सर्वदास्यामिवो ध्रुवं ३०
आगच्छंतु द्विजाः शीघ्रं वसंतु नांदिनेपुरे
बाणेनतुमयालब्धं नंदवाणं महापुरं ३१
ब्राह्मणा ऊचुः
शृणु भूपमहाराज ब्राह्मणा विस्मयान्विताः
तिष्ठंतु सुखदुःखेन तप्यमानाहिमालये ३२
स्थानांतरंनकर्तव्यं ततो विघ्नं भवेद्ध्रुवं
विघ्नेन विहतोजंतुः दुर्वाक्यं प्रवदत्यसौ ३३
विघ्नमन्यं सहामो न ग्रामोस्तु तवभूपते
विप्रवाक्यं तदाकर्ण्य राजावचनमब्रवीत् ३४
पुराकृतंमया कर्म शुभाशुभमयं मुहुः
सुखदुःखं भवा भावौ नंदवाणे मया द्विजाः ३५
ब्राह्मणा ऊचुः
श्रृणुनंदमहद्वाक्यं ब्राह्मणा तपसिस्थिताः
किमग्निर्मुष्टितो गृह्यः वृश्चिका अंगमंडले ३६
मुखवासं काल कृष्टे निविष्टशूल मासने
कर्णेन केसरीबद्धः नेच्छामस्तुच्छभोगकान् ३७
ब्राह्मणानामियंपृथ्वी परशुरामार्पितास्ति हि
यः शत्रुर्न भवेन्मित्रं पूजितस्त्रिदशैरपि ३८
एकविंशति वारंयः हत्वाराज्ञः सुदुर्नयान्
शुद्धाः संतापिता विप्राः दहन्त्या सप्तमंकुलं ३९
स्वस्तिशूरा भयेदीनाः तपसे ब्राह्मणामताः
मद्वाक्यं निश्चितं श्रुत्वा समायांतुममालयं ४०
अगुणं सगुणं वाक्यं नंदो वक्ति प्रतिज्ञया
किंवृथाबहुवाच्येन स्वस्थाने स्थापयामि वः ४१
हेमागारान् करिष्यामि ग्रामेआजीवनं यथा
सिंधुस्थरत्नजातं च सुवर्णं गिरिवासनं ४२
विंध्याचलो महास्थानं गोशालापश्चिमेशुभा

गोधूमा दिकमन्नं च निवेद्यं सर्वमेव वः ४३
भव्यमुक्तामरुस्थल्यां गव्यं च घृतपायसं
सुरेन्द्र भव्यमुद्गाश्च मंडले कृषिनिर्मिते ४४
शाल्योदनं गुडस्वादः इक्षुभूता च शर्करा
आगच्छन्तु द्विजाः सर्वे स्वस्थानं कृपयासह ४५
नांदीमुखं महास्थानं श्रीकृष्ण निर्मित पुरा
स्थलित चैवसंज्ञातं मयाबाणेनलक्षिते ४६
करिष्ये हं पुरंरम्यं नंदवाणा द्विजालयं
आगंतव्यं द्विजाः शीघ्रं सुस्वादादुग्धशर्कराः ४७
आयांतुभो द्विजश्रेष्ठाः विलंबो नैवसन्मतः
नागवल्लीक्षु दंडैश्च पुष्पैश्च नवपल्लवैः ४८
भव्यैश्च रम्यशाकैश्च करीरैः पीलुभिस्तथा
शाकैः पानैश्च खाद्यैश्च सेवनं वः करोम्यहं ४९
रत्नादिकं सुवर्णादि दिव्यं वस्त्रं मनीषितम्
भवतां भोजनं भव्यं वायुवेगास्तुरंगमाः ५०
ब्राह्मणा ऊचुः
शृणुनंदमहाभूप त्वयासंस्थापिता द्विजाः
न सुखं च पुरे रम्ये महास्थाने द्विजोत्तमैः ५१
उत्पाताश्च महादुःख राक्षसानां भयंकरं
पूर्वं च कालको विश्वे मघवा च ततः परं ५२
राजोवाच
स्वस्थानेषु भवद्भिश्च पुण्यदानं कृतंपुरा
तत्कर्तुंनैवशक्यासुः सदेवासुरमानषाः ५३
यत्कर्मतुसमाराद्धं नतच्छक्यं सुरैरपि
उत्कंठिताः सुराः सर्वेऽमरावत्यां मयासह ५४
विलोक्यशुष्कमार्द्रं च पापंसद्योविनश्यति
पंचसिद्धीः परित्यज्य कुर्वन्तु पाकशुद्धये ५५
अक्षताः संवसंतश्च भुंजतां स्वसुखान्विताः
नांदीमुखान् सेवमानाः लभन्तेधर्ममुत्तमं ५६
दयां क्षेम्यं च सत्यं च क्रोधलोभौ विनश्यतः

यद्वो वैरोचते विप्राः लवणव्यंजनादिकं ५७
वस्त्रभोगादिकं सर्वं वायुवेगा गजाहयाः
पश्चात्तापो नकर्तव्यः वृत्तिलोपे द्विजोत्तमाः ५८
शासनं ब्राह्मणानां च अन्यदान च अन्यतः
तेनरा नरकेघोरे कल्पांतं निवसंति हि ५९
पच्यंते रौरवे घोरे ब्रह्मशासन लोकिकाः
इतोऽधुनापरंभूयः ममदोषोनदीयतां ६०
भवतांस्थानकं रम्यं कृतवान्कमलापतिः
विप्राणां पश्चिमाबुद्धिः स्वभावोनाग्रिमोमतः ६१

इति श्रीवह्निपुराणे चतुराशीति साहस्त्र्यां संहितायां ब्रह्ममरीचिसंवादे ब्रह्मखंडे नांदीमुखवर्णने नंदवाणमाहात्म्ये नंदराज हिमालय प्राप्तौ ब्राह्मणान् प्रतिसंवादो नाम सप्तमोऽध्यायः

## अध्याय ८

ब्राह्मणा ऊचुः
राज्ञो वचन माकर्ण्य ब्राह्मणाः पुनरब्रुवन्
स्नेहयुक्तान् भवद्धाचं करिष्यामो न संशयः १
श्रुत्वा तु नंदराजेन्द्रः ब्राह्मणान् सन्नतोऽब्रवीत्
भवतां पूर्वजस्थानं भिन्नं तत् संदधे पुनः २
ततस्ते हर्षिता विप्राः परस्पर ममंत्रयन्
नंदवाणपुरं रम्यं यास्यामः सुमुखावयं ३
पितृपैतामयी भूमिः निर्धनापि सुखा वहा
परभूमिर्धनाढयापि नात्मनेरोचते कवचित् ४
गंगाचगोमतीगावः गोविंदोऽग्रजएव च
पितृग्रामो विंशेषेण गकाराः पंचदुर्लभाः ५
जननी जन्मभूमिश्च जाह्नवी च जनार्दनः
जीवीतं सुकुले जन्मे जकाराः पंचदुर्लभाः ६
सैवसद्गतिदाभूमिः यत्रस्थाश्च पितामहाः
संस्कृताः पूर्वश्चायत्र मुक्तिदा काशिका मता ७
शिवालयं स्थानसौख्यं सौभाग्यं सुखस पदः

सुभार्याशील संयुक्ता शकारा पंचदुर्लभाः ८
महाक्षेत्रंपवित्रं च नांदिमुखसमा पुरी
नांदिमुखसमं क्षेत्रं न भुतं न भविष्यंति ९
अन्योन्यं ब्राह्मणा वाक्यमब्रुवन् मुनिसुत्तमाः
तीर्थं सुरालयं स्थानं त्रिकोणं कालकापुरी १०
नांदिमुख समंक्षेत्रं नभूतं नभविष्यति
कमलापुरी द्वितीयाच नांदीमुखं तृतीयकं ११
चतुर्थं नंदबाणं च नंदबाणेन लक्षितं
यत्रास्ति योगिनीस्थानं नवदुर्गाचनांदीनी १२
कमला सहितःकृष्णः प्रासादे हेमपर्वते
गौर गंगानीलगंगा त्रिपथा च सरस्वती १३
निवसति महास्थाने पंचदेवाः सनातनाः
स्मृत्वाच हर्षिता विप्राः चलितावाणवर्त्मनि १४
सतीस्मरति भर्तारं चक्रवाकी दिवाकरं
जननीं बालकोयद्वत् गुरुंशिष्य स्तथैवच १५
तथैवनांदिनं विप्राः नंदबाण पुरंशुभं
यथैव सागरेगंगा पंकजंचंद्रसुर्ययोः १६
विकसेत् कमलं हृद्यं नंदवाणपुरेतथा
सुहृष्टा ब्राह्मणाः सर्वे शाकपत्रादि भक्षकाः १७
हर्षिताः बांधवाः शिष्याः द्विजानां बालका स्तथा
शाकपत्रैरग्निहोत्रं ब्रह्मयज्ञःसुरार्चनं १८
दिव्यानि ताम्रपात्राणि अर्धपात्र युतानि च
परिवार युताविप्राः राजसेनासमन्विताः १९
चलिताः ब्राह्मणाःसर्वे राजसैन्यंमहाबलं
हिमालयपथस्थानात् संस्थाप्य यमुनातटे २०
कपिलर्षि महत्स्थानं प्रमाणार्थित माश्रिताः
ते च स्वीकृत्य तत्स्थानं संस्थिता ब्राह्मणोत्तमाः २१
नंदःस्वपुर रक्षार्थं हयारूढो ययौततः
दुराचाराद्विजाः सर्वे नंदने पुरवासिने २२
संत्यक्त्वानंदराजानं घावंतश्चैकलेपुरा

दृष्ट्वासुरान् महाघोरान् हुंकारस्यकुलोद्भवान्  २३
महावीरोर्ण तनयः सर्दनो नाममुद्गलः
गृहीत्वा गोत्रचत्वारि व्रजितश्चोत्तरांदिशं  २४
नंदराजो महीपालः रथारुढः प्रधावितः
चंद्रादित्यसमीपंतु राजाप्राप्तोरथस्थितः  २५
नंदराजो र्दनं दैत्यं प्रावोचत् मुंडवाडवान्
रमेरथं हयेश्वं च राजायादसुरं प्रति
परस्परं भाषमाणौ राजानमसुरोऽऽब्रवीत्  २६
एतैर्विप्रैर्महादुष्टैर्निहता ममपूर्वजाः
पितृपैतामहं वैरं आदित्सुः हृतवान्इमान्  २७
पृथिवीं अटता भूप दृष्टाः कालांतरे मया
दुराचाराश्च पापिष्ठाः नांदीपुर निवासिनः  २८
स्थापिताश्चतदाकाले नारायण परायणाः
सुवीर्याश्च महामत्ता मुनी शा मानमर्दनाः  २९
तद्वंश्योऽहं द्विजान् सर्वान् आहृत्यैवंनिहन्मि च
एपवैर प्रतीकारः नकार्यो नृप विग्रहः  ३०
राजोवाच
अधमात्क्षत्रिया वीर दृष्ट्वा सैन्यं पराजितं
युद्धं त्यक्त्वा पलायंते नरकान्यांति ते ध्रुवं  ३१
गवार्थे ब्राह्मणार्थे च स्त्रीगृहे गोगृहेऽपि वा
न कुर्याद्रक्षणं तेषां तद्दत्तं नोपतिष्ठते  ३२
हिमालयात्समानीय स्थापिता नंदबाणके
विद्यमाने ससैन्ये च मयि नो वृजिनान्विताः  ३३
इत्युक्त्वा रथमारुह्य धनुःखड्गेकरेऽग्रहीत्
म्लेच्छान्जगाद राजासौ युध्यध्वं च दुरात्मकाः  ३४
ततः संकंपितो दैत्य आदायाग्रे च मुद्गलं
स्वरथं सन्मुखे कृत्वा कार्मुके वाणमादधे  ३५
शरवर्यं चकारोग्र मसुरो नंदभूपतौ
वाणाग्नि ज्वलिता भूमिः जज्वालपरितोदिशं  ३६
पुष्पबाला कुमारी च ब्राह्मणी नांदिनी सती

नंदराजानमाहूय एनंदैत्यं जहि द्रुतम् ३७
तद्दत्तं बाण मादाय धनुर्युक्तं चकार च
मुक्त्वा वाणमयं वर्षं रथभंगं तदाकरोत् ३८
हयानिर्गत जिह्वाश्च न्यपतन् जाह्नवी जले
चर्म खड्गे गृहीत्वा च त्यक्त्वाविप्रं च मुद्गलं ३९
नंदराजेन दैत्योसौ ससैन्योविजितस्तदा
द्विजराजा महाप्राज्ञाश्चंद्रादित्य स्यगोत्रिणः ४०
कुमारं चाग्रतः कृत्वा ते गता मूलमंदिरं
हंतुकामाश्च ते दैत्याः ब्राह्मणानन्वयुः पुनः ४१
चित्रकोणे महाराजो निवेद्य द्विज पुंगवान्
सुरम्यं म्पुरुषंदृष्ट्वा ब्राह्मणं द्विजपुंगवं ४२
आदत्तेषुचशस्त्रेषु त्वक्छेदं च चकार सः
गवाक्षजाल हर्म्येषु सनीतो द्विज पुंगव ४३
नांदीमुखा हतायोधाः भिन्नाश्चपत्रमालिखन्
संख्ययावाच्यते विप्राः द्विजानां पुंगवंप्रति ४४
द्वात्रिंशच्च त्रयस्त्रिंश द्दशानां गणनायकं
त्वचामंगुष्ट माविध्य आदनो द्विजपुंगवः ४५
अधर्मनाशनायलं यतस्वेहचसत्वरं
अधर्मिणः निहत्यैव कुरुशीघ्रं सुखान्वितान् ४६
आदनः सत्वरं गत्वा पंजरान् भिद्य लोहजान्
उन्मुच्यवंधनान्सर्वान् सकुमारान्द्विजान्स्तदा ४७
ययौगगनतः शीघ्रं नांदवाण पुरंस्वकं
पुरे महोत्सवा जात विप्राणां च गृहे गृहे ४८
हृष्टापुष्टामहाविप्राः चंद्रादित्यो विशेषतः
त्रयोदश चगोत्राणि स्थापितानि पुनस्तथा ४९
तेषांगृहाणां व्याख्यानां कथयामियथातथं
अष्टादशसहस्राणि गृहाणि ब्रह्मशासने ५०
कुड्य स्तंभेषु वध्वाचचित्राली श्वेतवेश्मनि
पाठशाला होमशाला अग्निकुंडा निवै गृहे ५१
देवमंदिर भागश्च शयनं शुचि सद्व्यकं

सुवर्ण कलशास्त द्वत् हेमजाजी सुतोरणाः ५२
दिव्यमंदिर माणिक्य छत्रितो परिसूत्रिताः
वृंदावनं च सर्वत्र ब्राह्मणानां गृहे गृहे ५३
आराम मंदिरं दिव्यं सुवृक्षो पवना निच
वापी कूप तडागाश्च दृशश्च स्फाटिकी वृताः ५४
परिखा दीर्घप्राकारः पकवेषिक चितं शुभं
करीरं च शमीशाखः कदवोनिंव एव च ५५
अगस्त्य कुसुमैर्वृक्षाः ब्राह्मणानां गृहे गृहे
वासितं नंदराजेन धर्मार्थं नांदिनं पुरं ५६
नंदवाण द्विजावासे योगक्षेमं च दत्तवान्
विप्रेभ्यो दत्तवान्ना जाहेम पूर्णं गिरिस्थलं ५७
आदिस्थानं महादिव्यं नांदीमुख प्रशासितं
लब्धं तदनंदबाणेन नंदराजा प्रतिष्ठितं ५८
चतुर्विशेति ग्रामांश्च विश्वकर्मप्रकारितान्
ब्राह्मणेभ्यः ददौ प्रेम्णा नंदराजा महाबलः ५९
संस्थापिताः द्विजाः सर्वे नंदराजा नमस्कृताः
स्थानंप्राप्य द्विजाः सर्वे सुखमूषुः सबांधवाः ६०
त्रयोदश--गोत्राणि संस्थाप्य च निजालये
धात्राप्रोक्त मितिश्रुत्वा मरीचिः पुनरब्रवीत् ६१
ब्रह्मोवाच
आनीताय महाविप्रा नंदराज्ञाहिमालयात्
तेषांगोत्राणि नामानि वक्तुमइ सि मेप्रभो ६२
प्रथमं चंद्रादित्यं च द्वितीयं--या
तृतीयं कौशिकं चेति कश्यपं च चतुर्थकं ६३
शांडिल्यं पंचमं गोत्रं षष्ठंकौंडिन्यमुच्यते
गार्ग्यं च सप्तमंगोत्रं अष्टमं औपमन्यु ६४
कृष्णात्रिकं च नवमं दशमं जातुकाकिं
एकादशंमुद्गलं च द्वादशंवत्स उच्यते ६५
त्रयोदशं च कौत्सं च एतेवेयाः परस्परं
आनीता नंदराजेन द्विः सर्वे हिमालयां ६६

त्रिप्रावराः द्विजाः केचिदन्ये पंचान्वितामताः
अग्रिआदित्य चंद्रादित्य गर्ग औदुंबर गौतम
षुभंसवितकश्यप । पुराण यौरोधेय कनि ।
अवनीतवराह कौठिन्यः । रेतपुंजशांडिल्य ६७
वाराह लुल्ल गार्ग्य ग ज्योतिभ्यो अपजन
आदित्य अनादि कृष्णायत पदो जातुकर्णः ६८
त्रयोदशतुगोत्राणि नांदीमुख तु कर्मणा
ब्राह्मणानां स्थितानुयेव नंदवाणपुरेशुभे ६९
शृणु वत्सप्रवक्ष्यामि आदनोमुद्गलस्य च
नंदघोषवतीपुर्यां स नीतो नांदिवर्धने ७०
राजगृहे स्थितकोष्टे प्रोवाचतस्यवेश्मसु
नस्थातव्यं प्रयत्नेन भोजनाच्छादनादिषु ७१
स्नेहबद्धः प्रयत्नेन रक्षितोराजमंदिरे
नंदराज्ञकुमारीय राजसेना सुकन्यका ७२
नववर्षा सुलावण्या सर्व शास्त्र विशारदा
पक्षिभाषां सर्वभाषां वेत्तिकन्या विचक्षणा ७३
क्रमेणषोडशं वर्ष मास्थिता कन्यका च सा
अतीव सुंदरीरूपे वचनेमृत संमिता ७४
मनोज्ञाचारु सर्वांगी मृगनेत्री मनोहरा
बालक्रीडाश्च क्रीडन्ती निर्गतो पवनं प्रति ७५
दृष्टा च चकिता बाला अनंग उत्तरापथे
द्वादशलक्ष मनुष्याणां मुद्गलः सैन्यनायकः ७६
म्लेच्छनाथो महाराजा ययावुपवनं तथा
अतीवसुंदरं रूपं अकलंकशशिवन्मुखं ७७
वेणी वद्धात्रिधाद्वारि शिखाबद्धा परस्परं
वीक्ष्य परस्परं तत्र दृष्टिर्वद्धा नृपेण च ७८
सखीनां मध्यगा साह राजसेना वदत्यसौ
कोसौ वीरः महाबाहुः कथं मेस्याद्धितार्थकः ७९
सख्युवाच
रूपरेखो महाराज खुरासाणे नराधिपः

तेषां राजेश्वरोवीरः लक्षद्वादशनायकः ८०
राजसेना तदाकर्ण्य व्रजिता राजसंनिधौ
उपस्थिता महानंदा स्थिता सिंहासने शुभे ८१
करयो संपुटं कृत्वा कन्या वचनमब्रवीत्
आगतानां महाराजा तन्नो देवः पितागुरुः ८२
धर्मार्थ पुण्यवल्याश्च धर्म्यःकार्यः स्वयंवरः
करिष्यामि वचो ब्रूहि देहिमे प्रत्ययं नृप ८३
कुमारी वाक्यमाकर्ण्य राजावचनमब्रवीत्
राजवेश्मसु येभूपा कुमारीयस्य सुंदरी ८४
रेखदृष्ट प्रमाणेन आगामिष्यंति सत्वरं
इत्युक्तं नंदराजेन राजसेना तदाब्रवीत् ८५
आलेखे नचमेकार्यं नचराज्येषुसंभ्रमः
यदि तुष्टोऽसिमेभूप आदनं वरयाम्यहं ८६
श्रुत्वातु वचनं राजा संक्रुद्धोरोष पूरितः
नक्षत्र बीज संचारा दन्य जातौ कुमारिका ८७
गिरमाकर्ण्य कन्यासा विष्णुर्विष्णुस्तदा ब्रवीत्
श्रूयतां भो नरश्रेष्ठ बीज निष्पत्ति संभवात् ८८
भवंतिक्षत्रियेकन्याः यदि म्लेच्छं च वांछति
पुनर्वैमधृम च किमुक्त पापरूपिणी ८९
कन्योवाच
श्रुणुतात महाराज सद्यःकोपो विसृज्यतां
उत्तमा मध्यमाकन्या कथयामि श्रुणुष्व भोः ९०
सोमवंश समुत्पन्नः ययातिर्वै महाबलः
तद्गृहेस्ति महाधर्म मानिनी नामकन्यका ९१
मुशलोनाम दैत्योसौ मुद्गलः सुतपोन्वितः
तयोः परिग्रहो जातो मानिनी मुशलाविव ९२
आभील ऋषि कन्यायां मातंगो भूत्नृपोत्तम
परस्परश्च संवादः कुमारी तातयोर्गिरा ९३
विचार्य राजराजोसौ यदिते आदनस्तथा
एकपाद स्थिता सूर्य साद्यंमे त्वं कुरु प्रभो ९४

यदि नाथवती साध्वी विवाहा यन गच्छति
वृद्ध ब्राह्मण रूपेण प्रसन्नो गोपतिस्तदा ९५
अृतावालिंगिता पूर्वं पश्चाद् म्लेच्छेन संगता
तेन संसर्ग दोषेण सेनायां मारिका विशत् ९६
विचार्या सौमहाराजा हर्षितो गात्स्यमालयं
मंगलंतोरणादीनि इन्द्रवत् मुशलो भवत् ९७
लग्नं प्रतिष्ठितं विप्रे नीलवंशे च वल्लिका
सचरित्रं सकलशं सोत्सवं राज मंदिरं ९८
राजसेनासखीनां च चचार पुरमध्यतः
तानि योषितः सर्वाः गायंते मंगलान्विताः ९९
श्रुत्वा च आगता विप्रा नंदवाणपुरोगमाः
अयुक्तं च कृतं भूप पापिष्ठ ब्रह्मघातक १००
देव्यादत्ता कुमारीयं नित्यं कौमार धारिणी
इत्युक्तो नंदवाणैः सः भवितव्यं नचलेत्क्वचित् १०१
सदैत्यो वचनं श्रुत्वा नंदवाणमुखो दितं
नंदराज कुमारी तां सुसंस्कारां सुरक्षितां १०२
समर्प्य ब्राह्मणेभ्यश्च तापादायगताःपुरं
म्लेच्छहस्तात् समानीता नांदीमुख द्विजोत्तमैः १०३
तुष्टो भूत् नंदराजा च ननामशिरसा ततः
सत्कृत्य च नमस्कृत्य तत्रदानं समर्पितं १०४
शतमालय महास्थानं सदुर्ग परिखा युतं
अर्पितंहर्षिता स्तैश्च आदनो ह्यभिषेचितः १०५
संतुष्टाश्च द्विजाः सर्वे नंदवाणपुरे शुभे
एतेषांपुराय वर्तित्वं भव्यं दत्वा कुमारिका १०६
गृहाणि साग्न्यगाराणि रौक्माणि राजसेनया
ससैन्यकुशलोदैत्यः कुशलं निजशासने १०७
नंदघोषवतीपुर्यां चलिताश्चोत्तरं दिशं
नंदवाणा द्विजाः सर्वे संप्राप्ता नांदिनेपुरे १०८
आगत स्वागतं कृत्वा स्वस्थाने स्थाप्य ब्राह्मणान्
हेमागारमिति ख्यातं हेमपात्रं गृहे गृहे १०९

मुक्तावलीकुलस्त्रीणां रक्तमौक्तिक भूषणा
सुमनांसिचसर्वेषां ब्राह्मणी ब्रह्मकन्यका ११०
बहुधन मदोन्मत्ता हेमरत्न भुवल्लिका
आदिवैरान् मनः क्रुद्धो मुद्गला ओदन स्तथा १११
लोभे वितर्कितश्चक्षुर्नंदवाणे द्विजोत्तमे
स्थिता यत्र द्विजाः सर्वे नंदभूपः समागतः ११२
चक्षुर्विकार संयुक्त नंदराजस्य ब्राह्मणाः
ज्ञात्वासंमिलिताः विप्राः किंकर्त्तव्यं द्विजोत्तमैः ११३
विकृतोऽपि प्रसन्नोभूत् द्विजान्संतोष्य यत्नत
समीपं नंदवाणस्य स्थानं दत्तं च भूभृता ११४
कुमारिकां च संवास्य राजधर्मश्च रक्षितः
राजकन्या च कौमारं सतीत्वे पुजिता तथा ११५
देवीरूपं च संमान्य पूजिता मुखदाह्य भूत्

इति श्री वह्निपुराणे चतुराशीति साहस्त्र्यां संहितायां
ब्रह्मखंडे ब्रह्ममरीचि संवादे नंदवाणा माहात्म्ये राजसेना पाणिग्रहण
कौमारग्रहण नामाष्टमोऽध्यायः

## अध्याय ९

ब्रह्मोवाच
अथातोनंतरं वत्स आदनो मुद्गल स्तथा
गत्वा च मेदितं सैन्यं नन्दवाण पुरोपरि १
स गतो वैर भावेन पर भूमिं नराधिपः
इति ज्ञात्वा महाम्लेच्छा आगता सत्वरेण च २
तदा च ब्राह्मणाः सर्वे आलोक्याथ पुनः पुनः
मेलयित्वा द्विजान् सर्वान् संधिं कृत्वा च मुद्गलः ३
वेष्टिता तैश्चपापिष्ठैः ब्राह्मणानां हृतं धनं
दुष्टैर्दुरात्मभिः पूर्वं दिव्यं छत्रं च चामरं ४
गृहीतं ब्राह्मणेभ्यश्च तद्धनं विलयं गतं
द्विजैः संप्रेषितो दूतः सत्वरं नन्द पार्श्वतः ५
हेमागारात्तु तद्धेम सहस्त्राण्येक विंशति

गृहीतं ब्राह्मणानां तु ग्रादनेनोरु तेजसाः ६
ग्रादनस्तु धनं हृत्वा व्रजित श्चोत्तरां दिशं
नंदराजः समायातः स्वसैन्य परिवेष्ठितः ७
पृष्ठतो गतवान् राजा निगृह्य प्रोक्तवान् वचः
न गंतव्यं दुरात्मन् वै ब्रह्मस्वं पापकर्मक ८
ग्रनादृत्य भूप वचः मुसलो युयुधे तदा
परस्परं महायुद्धं भग्नो दैत्यो पलायत ९
सर्वं धनं विमुच्याथ मुद्गलो पिपलायत
दृष्ट्वा थ नंदराजासौ सद्धटैः भारविंशकं १०
तदालोभो महान् जातो राज्ञो नंदस्य मंडले
तद्द्रव्यं नंदराजेन कोशं प्रति समर्पितम् ११
नंदवाण पुरे विप्रा महास्थाने गरीयसि
चिंतार्था सप्रयत्नाश्च विरक्ता नित्य कर्मतः १२
इति ज्ञात्वा महाविष्णुर्लक्ष्मी नारायणः प्रभुः
नंदवाण पुरस्यार्थे प्रैषयन् नारदं मुनिम् १३
नारदं दष्ट्वा । ब्राह्मणा हर्षिताः सर्वे नंदवाण पुरे शुभे
नंदवाण महास्थानं धनधान्य युतं द्विजाः १४
नारद उवाच
शृणवंतु ऋृषयः सर्वे नंदग्राकार्य तामिह
ऋृषि वाक्यं तु श्रुत्वैव ग्रागतो नंदभूपतिः १५
करयोः संपुटं कृत्वा ऋृषयस्तु नमस्कृताः
मुनिवर प्रसादेन ग्रत्र विघ्नो न विद्यते १६
प्रबोधितो महाराजो मुनिना ब्रह्म सूनुनाम
ब्राह्मणा ऊचुः
देत्याद्धन हृतं सर्वं नंदराजेन भूभृता १७
द्विजालये शुभस्यार्थे स्थातव्यं ऋृषिसत्तम
नारद ऊवाच
गतेशोको न कर्तव्यः जाते ईर्षो न विद्यते १८
संपत् प्राप्तौ न हर्षश्च विपद् खेदो न विद्यते
भुनज्म्यैक करेणाहं पुमान् नारी विवर्जितः १९

व्रतिनां वालकानां च भागं नाहं भजे पुनः
प्रत्यग्निं नाम्यहं किंचित् न भुंजे भूरिभोजने २०
चतुरः चंच लाद्विभिः परित्यक्तोस्मि सर्वदा
तासां च विद्यमानानां स्वरूपस्यापि विस्मृतिः २१
किं च वै वालकौमारी अन्य भोज्यं न विद्यते
कुरूपा कर्कशा चंडी नित्यं कलहकारिणी २२
वंध्या च काक वंध्या च निर्धना तनुखंडिता
तासां दृष्टौ न भुंजामि अधमा व्यभिवारिणी २३
नाथहीना दया हीना पाप बुद्धि परायणा
अपुत्रिणी पुत्रहीना च नराश्च तादृशास्तथा २४
आश्रमा वर्जिता येषां तेषां अन्न न भुंज्यते
स चैल पाकशुद्धानां क्रिया शुद्धिश्च यद्गृहि २५
तत्र तत्र न भुंजामि उदरं भरिणा गृहे
इत्याकरार्य मुनेर्वाक्यं अस्तु अस्तु अथाब्रवीत् २६
इति श्रुत्वा मुखे नैव नारद स्तत्र संस्थितः
ततो नांदिमुखा विप्रा धर्म कामार्थ संभवाः २७
मुनिवर प्रसादेन व्यजयंत द्विजालये
दशम्यां उत्सवं कृत्वा विष्णुः पूजांव्यषुः द्विजाः २८
ततस्तु नंदराजेन लोभार्थं धन मर्जितं
विभक्तं ब्राह्मणेभ्यश्च भूभृत्सु हेमचार्पितं २९
नर्मीकं गिरिषु कोश स्थानं राजाविलोक्य च
आखेटकः गतो राजा वायव्यां दिशमाश्रितः ३०
तुरगारूढ नंदेन किंचित् दृष्टं च कौतुकं
वराहश्च महाप्रौढः दंष्ट्रा रत्नेनभासुरः ३१
सर्पाकार सुपुच्छश्च बृहत्कायाशिरोरुहः
महोदरः सिंह गतिः व्याघ्रचत्तुः महाबलः ३२
तृषाक्रांत वराहं तः संवीच्त्य तृषितो नृपः
दृष्टं सरोवरं तेन वराह मनुधावतः ३३
पद्माकर सुगंधं च जलं पातुं किरिर्गतः
राजा तु सैनिकां प्राह बाणैर्भल्लेश्च विद्यताम् ३४

न गच्छतु वराहोयं भारणीयः प्रयत्नतः
मुक्तानि सर्व शस्त्राणि मेघधारा गिराविंव ३५
निपात्य नंदराजासौ वराहं च महाबलं
हत्वा च सूकरं राजा गृहीते चैव दंष्ट्रिके ३६
हर्षितो नंदराजा च दंष्ट्रे रक्षितवां स्तदा
कोशेषु स्थाप्यदंष्ट्रे द्वे नित्यंपूजितवान् नृपः ३७
रत्नकोशेषु संस्थाप्य मणि हेमभिरर्चिते
संवीते हममालाभिः पुष्प चंदन चर्चिते ३८
तस्मिन् काले महाराज्ञी पत्या पूजा सगाचरत्
प्रिया सा नंदराजस्य कृपया प्रार्थितो नृपः ३९
देवपूजनवत् दंष्ट्रे प्रज्वाल्य भस्मसात् कृते
तद्भस्म दिक्षु संकीर्य नष्टे सूकर दंष्ट्रिके ४०
आगतोथ महाराज चित्रलेखा तदाब्रवीत्
चित्रलेखोवाच
द्विज द्वेषो न कर्तव्यो नंदराजमहाबला ४१
त्वयाकृत इतिज्ञात्वा मयाते भस्मसात् कृते
कासारे च महाकोशः निर्मितः भीतिवर्जितः ४२
निधयो नव नंदस्य गता हृत्वेदनाश्रयम्
हा हा कृतं महास्थाने नांदिभि नांदिनेपुरे ४३
हर्षिताश्च ततो लोका देश मंडल वासिनः
अपकीर्तिस्तु साजाता प्रजायत् करपीडिता ४४
चाणाक्येन कृतं कर्म नवचंद्र विनाशकं
चाणाक्योन गतः स्वर्गे बलबुद्धिपराक्रमः ४५
कृष्णा वैवाय साज्ञेया दुर्गंध पूर्तिमक्षकाः
अन्ये चैव भविष्यंति दौरत्म्य कूट साक्षिणः ४६
चांडालास्तेच विज्ञेया यथा ते श्वेतवायसाः
तत्रस्थाने च स्थलितं मंडपे कमलालयं ४७
कलौ जलंन संपूर्णं रम्य पद्म सरोवरं
यमनास्तिभयः कश्चित् नंदवाणपुरेशुभे ४८
मुनिवर प्रसादेन महा स्थाने महोत्सव

नंदवाणं महास्थानं विपिनं भुवनत्रये ४९
आमंत्र्य विदुषो विप्रान् क्रतुकर्म समाचारन्
आहुताश्चद्विजाः सर्वे भारतस्थानवासिनः ५०
काशी मायापुरी स्थानात् तथा तैलं गवासीन
द्राविडी गौड दशियाः औदिच्याः पुर्ववासीन ५१
संप्राप्राश्च महास्थाने नंदवाणपुरे शुभे
महान्तं मंडपं कृत्वा वह्नि स्थापन माचरन् ५२
कामधेनु गुणा विद्या ब्रह्मसूनु प्रसादतः
षड् रसा विविधाज्ञेया मोदकैर्विविधैरपि ५३
अद्रकान् लपना चितमुर्मुष्टानपूपमंडिकान्
रम्यांस्तथैव संपूर्णे रोदनाद्यादि भोजनैः ५४
धृताधरागुडावल्ली क्षीरमंडादि संघका
सर्वारसवती पूर्णा धृतवल्ली खंडवल्लिका ५५
खेछफा खंडापूपानि निकुंजा बीजपूरकेः
भैरवान् भिन्न वटके हरिद्रा पीततांगते ५६
तज मरीच संभक्तैः आलचीता गमर्दिका
क्षीरखंडादिपं द्रव्यं कूरकर्पूरवासितैः ५७
पत्रेषुवाहये द्विप्राण् हेमपट्टेषु बंधिताः
मोदका वाहये द्यते सशैलं पाक शुद्धयः ५८
सुधाहारेण संयुक्तं परनाले धृतकुल्यका
आहूताब्राह्मणाः सर्वे चतुराशी स्थामाश्रिताः ५९
कामध्वज वंशभूपा यज्ञ रक्षार्थे मागताः
केलिकुतमाहाराजा राजा शांतिकर स्तथा ६०
क्रुद्धोडशपत् पिता कन्यां राजसेने अपुत्रिणी
नरोचते थसंसार दंपति नाथ मुद्गल ६१
राजसेना सतीभर्ता वाराणस्यां गतास्तदा
तारिते नेकमेगोत्रेसुरै क्षत्रियस्य च ६२
दुःखात्तारयते काशी काशी दुःखस्यतारका
विप्रालये महा दिव्यं महोत्सव परायणं ६३
पंचशब्द विनादेन गर्जति देवदुंदुभिः

करकामिनी शृंगारे गीतमानेषु सुंदरी ६४
रथवाजि महादानै हेमरत्न विभुषणैः
पूजयित्वा प्रयत्नेन नंदनेपुर मध्यरः ६५
निवृत्तेथ ततो यागे हृष्टिपुष्टियुता नृपाः
क्षत्रियाश्चैव साह्लादाः गताः पश्चान्निजालये ६६

इति श्रीवह्निपुराणे चतुराशीति साहस्त्रयां संहितायां
ब्रह्ममरीचिसंवादे ब्रह्मखंडे नांदीमुखवर्णने नंदवाणमाहात्म्ये द्विजालय
यागवर्णनो नाम नवमोऽध्यायः

## अध्याय १०

मरीचिरुवाच
पुण्यवंतो महाराजा ब्रह्ममति परायणाः
दत्वा स्वेन हृतंनीतं कथंते पापभागिनः १
श्रीब्रह्मोवाच
लक्षधेनुर्ददौदानं हरेदेका ततः परम्
तद्दानं निष्फलं तेषां दहत्या सप्तमंकुलं २
पश्यन्दोषं ददच्चैव तद्दानं निष्फलं भवेत्
सद्मनि यत्कृतं दानं समान फलभाक् भवेत् ३
तीर्थे दशशतंतच्च न्यायो पार्जितं वृथा
अन्येषा मात्मनः पापं भवेच्चत् चिनुयाद्व्रतं ४
अन्यथा वंशयातंस्यात् तस्मात् शुद्धयै वृतं चरेत्
पुण्यभाक् नृपति पापः कथं जातः तदुच्यते ५
अन्यस्यात्मनः पापं यत्पापं परतोजने
प्रायश्चितं ततो विप्रेर्ब्रह्मस्वं पुत्रपौत्रकेः ६
प्रतिजन्म ततो पूज्या येपूज्यात्रिदशैरपि
तेषां करं यो गृह्णीयात् पूज्यते नृपमंडले ७
अचलं चालयेद्यस्तु परिणीतां त्यजेत्स्त्रीयं
उन्मार्गं गच्छति योवा गोचरं तु प्रकर्षति ८
क्रूरः विश्वासघाती च दुष्टबुद्धिस्तथैव च
दुराचारः स्वस्तिवाचा अन्येषां चापहारी च ९

करोति लोक पीडां यः परस्ये लोभ तत्परः
सवैनरकं याति सत्यमेव न संशय १०
स्वस्थेनदीयते दानं तदत्यंत फलं भवेत्
येलुप्ताश्चक्षयं यान्ति निश्चलंते नृपा धमाः ११
स्थापयित्वा प्रयत्नेन नंदवाणान् द्विजालये
विहाय विष्णवे संज्ञा विधानात्म प्रतिष्ठितं १२
तेनसंज्ञा विधानेन कुपितो गरुडध्वजः
ब्राह्मणापूर्व वाचायां लुप्तायांच द्विजोत्तमे १३
कनकं नियते कोपात् स्थितं विप्रेषु तिष्ठति
तस्मिन्काले महालोभ प्रविष्टो राजमंदिरे १४
पृथिव्यां नवभिनंदैर्धरा मेका प्रपीडीता
पंचविंशतिवर्षाणि एको वैजानकीं हरेत् १५
मांधाता च चतुष्षष्ट्या प्रकारै जननंगतः
मनुष्य जन्मलक्षेण शांतःसन् वै अबुध्यत १६
व्यक्त्वांव्यक्तं नविंदेत पठित्वा मुर्ख उच्यते
अहर्कुत्सः कुसुप्तोहं हं हं इतिकुतः कुतः १७
आगतः कुत्र यास्यामि संगमः कुत्रआकुतः
ब्राह्मणो ह्याटनो भृपकुश संमार्ज ना स्त्रियः १८
तेतेच नरके यांति ब्राह्मणाः शूद्रभोजनात्
ब्राह्मणान्स्थापायेत् भूमौसुरभीणां तथैवश्च १९
तेनरा निधनं याति राजायै द्रविडो यथा
धातुर्वचनमाकर्ण्य मरीचिमुनिरब्रवीत् २०
कुत्रास्तिद्रविडो राजा कस्माच्च निधनंगतः
ब्रह्मोवाच
इहैव भारतेजवै द्रविडो देश मंडले २१
तत्र रुद्रवतीपूर्यां सागरांत महीपतिः
विकटसेन महाराजो निविष्टश्च नृपासते २२
दिव्य सिंहासने रौप्ये चुडक्षीरोदमंडिलः
सुंदरं वारुणं छत्रं पताका श्वेत चामरं २३
आसने छत्र चत्वारि चामराणी चतुर्दश

गजानां च हयानां च सारसैर्हसवाजिभिः २४
चर्माणि वर्म संयुक्तै खड्गौ कृत सहस्रशः
नृपो नरसमुद्रश्च कीर्तिं वैतालिका शुभैः २५
स्वसैन्ये च सभापुर्णा किंचिज्ञातंतुकौतुंकं
परभूमिं निषासीयः ब्राह्मणश्चैक आगतः २६
राज्ञोग्रे ससमायांतः तत्रस्य स्वस्तिवाचकः
गोभिर्विप्रैश्च वेदैश्च स्वस्तिभिः सत्यवादिभिः २७
यमिभिर्दानशीलैश्चसप्तभिर्धार्यते मही
ब्राह्मणस्य प्रसादेन लभ्यते राजसत्तम २८
ब्राह्मणस्य प्रसादेन धर्मकामर्थं संभवाः
ब्राह्मणस्य प्रसादेन प्राप्यते परमं पदं २९
देवाधीनं जगत्सर्वं मंत्राधिना च देवता
इत्युक्तवान् नृपाग्रे वै ब्राह्मणो वेदपारगः ३०
तत्रस्थः कुपितो राजा दुष्टबुद्धिर्महानृपः
तमेवेक्ष्य ब्राह्मणंतु भृकुटी रक्त लोचनः ३१
किमिदं ब्राह्मणो भिक्षो महामुद्गरणाय च
नवेत्ति आत्मनो बुध्या आत्मभ्य नैवपश्यति ३२
जिह्वा दग्धा परान्नेन हस्तौ दग्धौप्रतिग्रहात्
चलिता मृत्युलोके वै पशवो पक्षिण स्तथा ३३
नरनारी तथा रत्नं पंच तत्वेषु निर्मितं
इत्युक्तः विकटसेनेन विप्रोवचनमब्रवीत् ३४
यदि विप्रा अशक्ता वै धार्यते साचलाध्रुवं
तदा च प्रत्ययं दृष्टुं आगच्छ भूपसत्तम ३५
अपंच निर्जले संगे पर्वते क्रर भूमिषु
क्वच सिंचति मूलानि एकै कस्मिन् महीरुहे ३६
वापुरनल माकाशं पुष्यंते ब्रह्मकर्मणा
विकटसेन महाराज्ञा किंकृतं दुष्टबुद्धिना ३७
न कुर्वंति द्विजानांवै तर्पणं दैवतार्चनं
अवश्यं स्वङ्गधातेन कुर्वंते च द्विजाधमाः ३८
नृपवाक्यात् द्विजः सर्वः षट्कर्म नैवसाधते

यज्ञकर्म ह्यकुर्वाणाः संध्याहीना च तर्पणे ३९
कतिपयदिनैर्गत्वा कौतुकं मुनिपुंगवः
शुष्यन्तः सर्व वृक्षाश्च ज्वलमाने दिवाकरे ४०
उष्णवायुर्महानुग्रो धराकंपित मंदिरं
तदापि शुष्यते राजा च कंपे तेषुसंधिषु ४१
गजहय नृपाणां वै सर्वासां चैवयोषितां
विद्रुमं सर्व शून्यं च दग्ध दावानलं यथा ४२
दृश्यते च महारूक्षा स्तदाराज्ञश्च प्रत्ययः
आहूताश्च द्विजाः सर्वे प्रसादाश्च ममोपरि ४३
अज्ञानेनमया कार्यं कृतं तत्क्षम्यतामिति
ब्राह्मणस्य प्रसादेन सदेवासुर मानुषैः ४४
जीवितं सफलं लोके भृतानां सद्गतिस्तथा
हेमगावस्तिलाश्चेति पावनानि युगे युगे ४५
ब्राह्मणो यत्र दृश्येत हरे स्तुल्यः सउच्यते
तुलस्येकादशी विप्रा अश्वत्थो गोमयंपयः ४६
हेमगावस्तिला चेति पवित्राणि युगे युगे
विप्राणां तापयेद्यस्तु गवांचैव विशेषतः ४७
ते नरा नरके घोरे ध्रुवंयांति यमालये
तस्माद्विप्राः सदा पूज्या उभौलोके फलप्रदौ ४८
इत्युक्ता द्रविडो भूपो विकटसेनो महाबलः
षट्कर्मकृत् सदाचारो यज्ञकर्मरतः सदा ४९
षणमासेन महापृथ्वी सपल्लव महीरुहाः
लाडदेशे महाराजा मालवेश महाद्भुतम् ५०
सहस्रेपंचपंचैव शतानिपंच जीवति
ब्राह्मणानां ततो भुंक्त्वा हतो राजा महाबलः ५१
ब्राह्मणापीडनं कृत्वा ते नरा निधनं गताः
ततस्ते नंदराजस्य अतिलोभ द्विनश्यति ५२
प्रजानां पालकोयश्च गोब्राह्मणस्य पालकः
आकर्णिता सदावार्ता भव्यवार्ता करोतियः ५३
पवित्रित सदागोत्रं एतद्राजाधिलक्षणं

धेनुषु समायातीषु सन्मुखो व्रजतिमुखे ५४
प्रदक्षिणं समागच्छेत् एतद्राजाधिलक्षणं
पर्वते वार्चने रक्तः होमयज्ञादिके तदा ५५
तीर्थानां बहयेन्मार्गं चतुर्थं राजलक्षणं
एकादश्यां सदाचारो नारायण रतः सदा ५६
ब्राह्मणान् पालयेद्यस्तु पंचमं राजलक्षणम्
आत्मस्थाने महारक्षा परसैन्यं च पीडयेत् ५७
क्रुध्यत् भटा नयुद्धयंति एतद्राजाधिलक्षणं
अथातः संप्रवक्ष्यामि ब्राह्मणानां च लक्षणं ५८
क्षमासत्यं दयादानं शीलं शौचं तथा धृणा
विद्याविज्ञानमाधुर्यं प्रथमं ब्रह्मलक्षणं ५९
एकात्मापंच भूतात्मा विश्वात्मा सर्वतोमुखः
क्रोधं तु नैवजानाति द्वितीयं ब्रह्मलक्षणं ६०
परान्नं परद्रव्यं च पथिणा यदिवा क्वचित्
अदत्तं नैव नृह्णाति तृतीयं ब्रह्मलक्षणम् ६१
एकाहारेण संतुष्टः अल्पाशी अल्पमैथुनः
ऋतुकालामिगामि च चतुर्थं ब्रह्मलक्षणं ६२
संध्योपासन संयुक्तः सौम्य चित्तप्रियाप्रियः
इन्द्रियाणि नियम्याथ पंचमं ब्रह्मलक्षणं ६३
एतानि पालयेत्तत्र ब्राह्मणो भक्ति तत्परः
सयातिपरमंस्थानं यत्र देवो जनार्दनः ६४
सत्यं नास्ति तपो नास्ति नास्ति चेंद्रियनिग्रहः
सर्व भूत दया नास्ति नास्ति ब्राह्मणलक्षणं ६५
देवो मुनि द्विजो राजा वैश्य शूद्रो विडालकः
पशुम्लेच्छश्च चांडालो विप्रोदशनिधः स्मृतः ६६
भिक्षासावत निरतः संतुष्टश्च प्रकीर्तितः
आक्लिष्ट फलभूलाशी शौचेरत वनाश्रमी ६७
कुर्यादहरह श्राद्धं सविप्र ऋषि रुच्यते
ऋतुकालाभिगामी च षट्कर्म निरतः सदा ६८
आर्जवश्चाहिताग्निश्च ब्राह्मणः परिकीर्तितः

अश्ववाहन तत्वजः संग्रामेचा पलामकः ६९
प्रारंभ निरतः शूरो ब्राह्मणः क्षत्रियोमतः
वाणिज्य कृषि कर्ता च सविप्रो वैश्य उच्यते ७०
लक्षारिक्षास्तैल कुसंरक्षीर सर्पिषां
दि---तां रधुमांसानां सविमः शूद्र उच्यते ७१
स्नेहप्रियः सदालुब्धः दांभिकः स्वार्थसाधकः
छलान्वेष्पनृतिक्रूरो विप्रो मार्जार उच्यते ७२
क्रूरो लुब्धाश्च ---च परद्रव्या पहारकः
निर्दयः सर्व भूतेषु चांडालः परिकीर्तितः ७३
मूर्खश्च ब्राह्मणः पूज्य न च शूदो जितेंद्रियः
सर्व भक्षीयगौ श्रेष्ठा सर्व स्यागीनगर्दभि ७४
ततो नांदीमुखा विप्रा विष्णुना स्थापिता पुरा
हेमाभारं ददौ तेभ्यो नंदराज्ञा ग्रहे कृतं ७५
विप्राणां घनं मादाय गृहस्थो नावितिष्ठति
कथयामि मुनिश्रेष्ठ वर्णयामि कृते युगे ७६
अभृत्कृतयुगे राजा पुंजोवै देवतांशजः
समुद्रांतर्महाराज्ञो गज बंध महाबलः ७७
पात्रंवै पूजये द्विप्रं विप्राणां नावगन्यते
कस्मिन् काले समायाते गजआखेटकं वने ७८
पर्वतस्यो परिप्रष्ठे शूकरं अनुधावतः
पर्वतस्य कटीपत्रे अश्वेन पातितस्य च ७९
खादिरे वृक्षमूले च तत्रवृद्धो नृपोत्तमः
न जानाति जनः कोऽपि तस्य वै तत्रसंस्थितीं ८०
परलोकं गतः आत्मा कीर्ति संश्रूयते भुवि
तृष्णाक्रांतः क्षुधाक्रांत स्ताहितो यमकिन्नरैः ८१
देहि चान्नंदयायुक्तः देहिनीरं तृषापहं
अश्रंनास्ति जलं नास्ति क्रूर भूमि यमालये ८२
हृदा निपतनं नास्ति विप्रवंच्या इदं फलं
आक्रंदं निति राजासौ धर्मस्याग्रे निवेदितः ८३
किंकरैः धर्म निलंये स च शीघ्रं ममागतः

प्रेत उवाच
किंनाय पाशवद्धस्य मम वाकिं शृणोत्य सौ ८४
जुधया पीडित श्वासौ नृपया च प्रपीडितः
धर्मउवाच
जन्मजन्मांतरे लन्ते मानुषं --दुर्लभं ८५
चतुःस्वनिषु लन्नाणि चतुराशी-- योनिषु
प्रेतराजेन्द्र तंगच्छ मृत्युलोके तपस्थितिः ८६
वृन्नोपरि तदीयं च शरीरं --ग्रमस्थि च
संप्राप्य द्वादशैर्वर्षैर्वि----ष्टो वनांतरे ८७
तवजन्मांतरे बाहुः केयूर वरमंडितः
द्विजहस्ते कुरु श्राद्धं ---टि मूल्यं च दन्निणा ८८
स्पृहयेत् ब्राह्मणीयेभ्यः तानि मन्यंति देवताः
तत् कृत्तं प्रेतराजेन धर्मवाक्येन सत्वरं ८९
संप्राप्य द्वादशेवर्षे विप्रो दुष्टो वनांतरे
कथितः पूर्व वृत्तांतो हव्यकव्यस्य याक्रथा ९०
केयूरदान संकल्पं वेदाधोताप ब्राह्मणे
स्वर्गगतो विमानस्थो स च नीतो स्वर्गमालयं ९१
ब्राह्मणस्य प्रसादेन हृदं फल मवाप्नुयात्

इति श्रीवह्निपुराणे चतुराशीति साहस्त्रयां संहितायां
ब्रह्ममरीचिसंवादे ब्रह्मखंडे नांदीमुखवर्णने नंदवाणा माहात्म्ये ब्राह्मागपरे
दशमोऽध्यायः

## अध्याय ११

मरीचिः उवाच
यदानांदीमुखैर्विप्रैः स्थापिता कालिकापुरी
ऋद्धिर्वृद्धिः समायातां महालन्मीश्च पूजिता १
भृकुटे र्विष्णो उत्पनैः युध्यमाना निशाचरैः
प्रस्वेदाच्च समुत्पन्नौ मधुकैटभ नामकौ २
येषु येषु करेणैव पृथक् संज्ञा उदा हृता
परुखार्द्र वसु नामानि विष्णु सत्यादय स्तथा ३

आज्यपाः सोमपाश्चैव कालनाम्ना स्तथैव च
कामधर्मो विधिर्धाता चक्षुर्नामेति मंडपे ४
आलसत्कुंडलश्वेत वारुणः किलदेवता
दुर्गो पवनगहा नांदिनो नंदिनोपमाः ५
नांदीमुखा महानांदी युग्मरूपा महाबलाः
ध्रुवो हानंत भागश्च मेधावी पद उच्यते ६
विकलः कल्पकालश्च मर्यादाभूमि रक्षकः
पश्याकश्च सविज्ञेयो रहस्र त्र्यंबकस्तथा ७
अल्प युग्मश्च विज्ञप्तः इन्द्रनील सुहृत्तथा
उदयश्च हयग्रीवस्तारा बुद्धिमति स्तथा ८
शुक्रनीलांबुजो रामो अदीनोत्साह दीश्वर
ऋद्धि सूत्रा मणिर्नाम आदिराजो क्षिते पिता ९
अनादि कादि संसिद्धिर्लक्ष्मीर्विष्णुस्मानतनः
एषु च ह्यधिकारोक्ता विश्वेदेवाश्च द्वादश १०
पंचाशदधिका पंचा विधाने यज्ञकर्मणि
कर्मकर्म प्रथक्स्थाप्या प्राप्तावै महतीकला ११
सर्वलोकं समाराध्य पितृणां च समागगे
सर्व विप्रान् समाराध्य नंदवाणान् विशेषतः १२
दुर्गा कात्यायनी चंडी ब्रह्माणीरूद्रं मातरः
स्कंदमाता महारौद्री भारती कालिकांबिका १३
नवनंदा महादेव्यः स्वस्थाने कमलापुरी
पूजनीया प्रयत्नेन नांदीमुखैश्च वाडवैः १४
नवनांदीमुखे दुर्गा आदिशक्ति शिवालये
गौरीविंध्याचलेजाता दुर्गापीठं सदैवतम् १५
प्रथमं च मधुमती द्वितीयं कुंडलं तथा
शरासनं तृतीयं च चतुर्थं कमलासनं १६
पंचमं कालका पुर्यां नांदिमुखेतिषष्ठकं
स्थापितं विष्णुना पश्चात् नंदवाणेति सप्तमं १७
अनेन च महासंख्या विश्वेदेवाश्च षोडश
प्रतिष्ठाप्य महत्कर्म ब्राह्मणैर्वेद पारगैः १८

नांदीमुखे पुरेरम्ये एकनाथो महामुनिः
चंद्रा त्रिगोत्र उत्पन्नः सर्वशास्त्र विशारदः १९
शतशः पटवो विप्राः विद्यार्थंदूरश्रागताः
शिष्याश्च बहवःसन्ति वेदशास्त्र विशारदाः २०
तदाकश्चित् समायातो ब्राह्मणः पुष्पबंधनः
कुदर्शनः कुरूपश्च विद्यार्थी पाचनापरः २१
दयावता च विप्रेण एवनाथो द्विजन्मनाम्
पाठयित्वा मुखेनैव ब्राह्मणो वेदपारगः २२
कामदेवो महाराजो राज्या च कामसेनया
अभ्यषिंचंस्तु शिष्याः पुत्रार्थे कामसेनया २३
अभिषिच्यततः शिष्याः पुत्रार्थे कामसेनया
गुरोः शिष्याः महापार्श्वं पुष्पबंधोऽपिसंस्थितः २४
प्रहितश्चततोराज्ञया अभिषेके सुताय वै
गुरूणां वाक्य तः शीघ्रं सगतोराजमंदिरं २५
हसिता च द्विजं वीक्ष्य नदत्तं परमासनं
व्रजितश्च ततस्थानात् ब्राह्मणः पुष्पबंधनः २६
कपाटार्गलं संदर्श्य ततस्तंभस्थतोरणै
अभिषेकं ददौतस्या व्रजत् शीघ्रं निजालये २७
तस्य विप्रस्य चरितं विदित्वा राजमंडले
कामदेवो महाराजो दष्ट्वा काम समीपतः २८
आगश्चत्ततः शीघ्रं नंदवाणपुर स्थितः
विज्ञप्तः एकनाथोवै शिष्योवै पुष्पबंधनः २९
अभिषेकं कृत्वाहि राजश्च कासूसेनया
पुष्पबंध उवाच
यदि भवान् प्रसन्नो सि प्रसादं कुरूमेप्रभो ३०
वयंमंत्र नदास्यामो वपुषे कामसेनया
एकनाथ उवाच
नदास्यते त्वया मंत्रः नृपाय कामसेनया ३१
त्यज विद्यां मयादत्तां गुरु हस्ते कृतांजलि
शिष्य उवाच

द्वादश वर्ष पर्यंतं गुर्वंद्रियर्यो र्चितो मया ३२
विद्यांनैव प्रदास्यामि सुरो राज्ञान मन्यते
अभिषेकस्य मंत्रेण राज्ञि भवतु गर्भिणी ३३
संपूर्णेतु ततः काले जातः पुत्रः सुभाग्यवान्
हर्षितश्च ततोराजा दत्वादानान्यनेकशः ३४
आकार्याथततो विप्रं पुष्पबंधा भिधानतः
दुहितुश्च गुरुं राजा प्रतिग्रह मकारयत् ३५
अर्धः अर्थ प्रकर्तव्यः फलेनफलमादिशेत्
पुष्पबंध सुखाशीनः कामिनी संग लालित ३६
पराक्रमेण ते नाथ शुष्का फलन्ति पादपाः
ममार्थे नाथ गंतव्यं उद्योतं हार मानय ३७
अंधकारवने घोरे कात्यायनी च राक्षसी
अवश्यं तत्रगंतव्यं हार मानय मे प्रभो ३८
वनिता वाक्य वेगेन सगतो गह्वरे वने
पलायन्त महाकाया रुक्षाः व्याघ्राः भयानकाः ३९
प्रधावन्ति महामार्गे बिभीता मृगसूकराः
सविप्र पाद पारुढः पुष्पबंधो भिधानतः ४०
बिडालस्स समायातः पुच्छेवह्निं प्रसूत्रयन्
उच्छलित्वाततोलग्ने वपुः खर्जुः प्रजायते ४१
अजीनवस्त्र भारंगीकराग्रे धनुषं शराः
क्षुरप्रासिर्महाभल्लः तस्मिन्नास्यन् मुनीश्वर ४२
बिभ्रतसर्वः धनुर्बाणान् पत्र चिह्नो निरालयः
औषधस्यप्रभावेण गता खर्जुः शरीरतः ४३
गुहायांच द्विजोनीतः कात्यायनी च राक्षसी
काष्ठषोडशतोवह्नि द्वारे ज्वलधिपर्वतः ४४
गृहमध्ये ग्रही तस्तु शिलाद्द्वारे षुदीपताम्
उद्योतहार भासेन दीप ज्योति सहस्रकम् ४५
त्रिवलीनाभि गंभीरा उतंग पीनतास्तनी
विप्रं सुरत क्रीडार्थं गाढमालिंग्य कामिनी ४६
राक्षसी पीडमानाया प्रेतरुपा अहर्निशम्

क्रीडन्ति बवमादायत्रिभिर्वर्षैः महावयन ४७
दिव्यदेहा महाकाया शापाद्याभूत् वहाप्सरा
विहाय राक्षसी रूपं उद्योत हार वासनाः ४८
तं गृहीत्वा द्विजो हारं समागच्छन् गृहेसुखं
न्यवेदयद् गुरोर्हारं गुरुपत्नि मुवाचह ४९
त्रिभिर्वर्षैर्वनेतप्ता त्वदर्थे वरवर्णिनी
आशाभंगो नकर्तव्यः समर्पयिष्यति कामिनी ५०
एकनाथो महाविप्रः पंचपंचाग्नि साधने
तन्मध्ये च महागावः श्वेतधेनुः पयस्विनी ५१
स्त्रवंती च पयस्तोकं निरीक्षयती गोपिका
गोचरात्सा समायांती धावंती च पृथक् स्थिता ५२
जालमध्ये स्थिता योनिः शिवरूपं निरीक्षते
संपूर्णं च ध्वजंदंडे पंचकन्यः परिग्रहे ५३
कन्यालग्नं प्रतिष्ठाप्य कार्तिक्यां कृष्णसंनिधौ
तोषयित्वा प्रयत्नेन पुत्रींजामातरं तदा ५४
कन्यारत्नमिदं सम्यक् अष्टवर्षानवैववा
धन्या मातापिता धन्यो मातुलः पितृवंशजः ५५
कन्यादान प्रकर्तव्यं इच्छाभोगो फलं भवेत्
अन्यतेस्तोक दोषोयं विक्रयं बहुलं भवेत् ५६
कन्याया विक्रयंकुर्यात् दहत्या सप्तमं कुलं
कन्यारत्न प्रतिग्राहं येकुर्वंति नरा धमाः ५७
यावद्रोमाणि संख्याकं तावत्तिष्ठंति नारकीं
कन्यारत्नमिदं द्रव्यंये भुंजंति नरा धमाः ५८
माता पिता तथा भ्राता मातुलः पितृकस्तथा
एते च नरकंयांति कन्या विक्रय कारणात् ५९
पुनरपि च नरके दृष्ट्वाकन्यां रजस्वलां
लीयंते सर्वपुण्यानि सहैव देवमंडलं ६०
पुष्यति ग्रामाधिपतिः धरा कंपित राजके
विप्राः सहस्त्रं भुंजन्ति पंक्तौ यो वृषलीपतिः ६१
सर्वो लिप्यते पापैः निराशा पितृदेवताः

असद्धर्मनिरताः गोलिका गोत्रजास्तथा ६२
दासिका वंदिका प्रोक्ता कुमारी च रजस्बला
सप्तैता वृषली प्रोक्ता कुमारींच विवाहयेत् ६३
अष्ट मांगल्यकी दोषा वृषला अष्ट उच्यते
संग्रहणी महादोषः म्रीयमाणे च भर्त्तरि ६४
पुनर्भर्ता प्रकुर्वीत दहत्या सप्तमंकुलं
संतानार्थे ततो भेदाः कथिताः प्राक्चसुंदरि ६५
विंशनामाभिधानेन वृषली दोषा सहस्रशः
ब्रह्मोवाच
अथातोनतरं वत्सकिमुजातं च कौतुकं ६६
कन्या सहस्र संकल्प पुरायपाणि परिग्रहे
उत्सवश्च महद् भूतो नंदवाण द्विजालये ६७
एकनाथो महाविप्रः संनह्यलंकभूपतेः
आकारितश्चिकित्सार्थे विमानइति प्रेषितः ६८
शिष्यो वै एकनाथस्य पल्लिवालः पठत्यसौ
लोहटो नाम विख्यातो ब्राह्मणो वेदपारगः ६९
व्याख्यातं च पठत्वेवं लेखं प्रेष्य विभीषणः
तवपूर्व संबंधी चिकित्सा रावणस्य च ७०
गच्छ लोहटभद्रंते विभीषण चिकित्सकः
एकत्ताथ प्रसादेन लोहटस्तत्रगच्छति ७१
दृष्ट्वा लंका पुरीरम्यां दुर्गकोशेषमंडितां
रामांकित पादुके च सेवते हनुमत्प्रभुः ७२
स एक्षत च भवन हेम लंकां सुतोरणाम्
कपाटार्गल संयुक्तां जाली गवाक्ष मंदिरम् ७३
दशकोटि महादैत्याः प्रवर्तयन्ति मंडले
सकच्च हेमरत्नानि दिव्यमाणिक्य मंडपे ७४
छत्रेण वारणं मेघं सिंहासनमनुत्तमम्
चत्वारि छत्रसंयुक्तं चामराणि चतुर्दश ७५
अजरामर महाराजः सुरासुरसुपूजितः
ते रामेण महाराज्ञा दत्तं राज्य मकटंकम् ७६

यावद्राम कथालोके तावद्राज्यं विभीषणे
संप्राप्याथ द्विजश्रेष्ठो विभीषणसभां प्रति ७७
आसनं मानसन्मानं कृतंराज्ञा द्विजोत्तमे
महाज्ञानी प्रयत्नेन रोगोनष्टो नृपस्य च ७८
भोजनेऽग्नौ करणं दैत्यानां प्रथमं कृतम्
सर्वान्नं भोजने क्षिप्तं दैत्यानां च महाबलः ७९
पश्चाद् विभीषणो राजा अकरोद्भोजनं स्वयम्
पंचाग्निक मिदंजातं राज्ञ आरोग्य सौख्यदम् ८०
विभीषणे सुखी भूते लोहटो विप्र पूजितः
पंच कोशीशकाद्दत्वा हेमरत्न प्रपूरितात् ८१
व्यं धृत्वा समायातो नंदवाण पुरे शुभे
ससमर्प्य गुरौ द्रव्यं एकनाथे द्विजोत्तमे ८२
एकनाथ स्तदाकर्ण्य संतुष्टः शिष्य तत्परः
गच्छलोहट द्रव्यं ते सुरबंधु निजालये ८३
लंकाकारं महादुर्गं तेनद्रव्येण कारय
गुरूणां च प्रसादेन पल्लीदुर्गं महीतले ८४
लोहटस्य गृहे भार्या कदाचित् पर्यपृच्छत
लंकाधिपतिवेद्यस्त्वं अपुत्र आत्मना स्थितः ८५
विज्ञप्तो गुरुदेवेशः शिष्यं वाचा उवाचह
नंदवाणपुरे रम्ये सूर्यवंशी समागतः ८६
सागरेण कृताकूपा गंगाजलाभिधानतः
तस्याथ उत्तरेभागे जलं वै गर्भधायकं ८७
तस्यजल प्रभावेण गुर्विण्यो भवतीस्त्रीयः
ततः श्रुत्वा महाहर्षं गुरुवाक्यं ततः कृतं ८८
सत्पुत्रोत्पत्तिः संजाता पत्नीबाले द्विजोत्तमे
अपुत्रोलभतेपुत्रं उदके सगरस्य च ८९
ब्राह्मणाश्च ऋषीन् सर्वान् गर्भमंत्रैः प्रतिष्ठितम्
अर्घपात्रंप्रकुर्वीत राजा राज्ञी यथा विधी ९०
तदादैत्यासमायाताः परसैन्य समागताः
अर्घो दत्तंततः क्षिप्त्वा इति भीताश्चराक्षसाः ९१

समरस्यकूपमध्ये अर्द्धोदकं निवेशितम्
नहि पीतं महाराज महीष्या नंदभूपतेः ९२
इत्थं स वीर्यतांजातं सगरस्य कूपोदकं
ततो विप्रान् करग्राही कूपोदकस्य प्रासने ९३
नंदवाण पुरं रम्यं विदित्वा मही मंडले
श्रुणु वत्स महीपुण्ये नंदीनां च द्विजालये ९४
ब्रह्मोवाच
चतुस्थाने ग्रहशांतिः मासे मासे महोत्सवे
दशमीदिने महारम्यं उत्सवं चरकामिनी ९५
चतुर्वेदस्य निर्घोषैः सुगीतं वंशवादिभिः
नृत्यंति कोकिलाबाला अतीव मधुरस्वरा ९६
वृंदवृंदे महायूथं कामिनीहंस गामिनी
वर्धापयति देवेशं लक्ष्मीकांतं जगत्पतिं ९७
गुणान् वदन्ति गोविंदे नांदीमुख महोत्सवं
चतुर्दश्यां तथाष्टभ्यां पूजयेन्नित्य वाडवान् ९८
पूजयित्वा कुमारीश्च होमदेवाचने रताः
नंदवाण पुरंरम्यं ऋषीपत्नी सुशोभितं ९९
ब्राह्मणप्रहितं लेख्यं यज्ञंप्रारभ्य पुष्करे
ब्रह्मा विष्णुश्च रुद्रश्च आदित्या वासवादयः १००
राजानो सोमसूर्यादि दैत्यवंश महाबलः
चतुष्षष्ठिश्च योगिन्यो योगिनी वीरमातरः १०१
कुंकुमै रक्षतै रार्चन् नंदवाण द्विजा शुभाः
व्रजिताः सत्वरं वेगात् संप्राप्तां पुष्करं प्रति १०२
आलोक्य च ऋषीन् सर्वान् पूर्णाहुति मुहूर्तकं
घटिका पंचमध्येतु पूर्णाहतिं नकारयेत् १०३
उपद्रवा भविष्यंति दैत्यानां च महद्भयं
होमांते अमृतं होमं पूर्णं दद्याच्च ब्राह्मणे १०४
वामांगे सर्वत्र काले पुण्य कालस्य दक्षिणाः
दक्षिणांगं विना ब्रह्मन् पूर्णां नैव प्रदापयेत् १०५
आकारिता सती साध्वी सावित्री परमेष्ठिना

सावित्री सत्वरं प्राह धर्मपत्नी विरंचिनः १०६
स्नानानुलेपनात् पूर्वं नूपराद्यै रलंकृतं
शृंगारं मुकुरे वीक्ष्य पुनः शृंगार मारभत् १०७
यदा शृंगार आरब्ध सावित्री ब्रह्मणोंगना
नागच्छति विलंबेन तदाक्रुद्धाहि ब्राह्मणाः १०८
देवताश्च ततःक्रूद्धा ऋषीणां ऋषयस्तदा
ततः संजीवनी विद्यां नंदवाणे द्विजोत्तमे १०९
कुशमया महाकन्या कृता गायत्रीचाभिधा
नंदवाण द्विजेनैव कृता संजीवनी स्थिता ११०
सर्वशृंगार संयुक्ता वेदमंत्रेण निर्मिता
दिव्यवीर महारम्या कुंडला भरणो ज्वला १११
रत्नालीसुदती दिव्या रत्नमुकुट मस्तकां
गायत्री चारुसर्वांगी रंभारूप दशाधिका ११२
कुरंग लोचना रम्या सुरांगी वीक्ष्यते जनैः
पितामह समागच्छ करंकरे नियोजय ११३
तामीक्ष्य हर्षितो ब्रह्मा गायत्रीरूप धारिणीं
विवाहित स्तदा ब्रह्मा ऋषीणां वाक्य तत्परः ११४
पितामहः सपत्नीकः पूर्णाहुतीमकरोत्तदा
हर्षिताश्च सुराः सर्वे भेरीदुंदुभिभिर्ध्वनिः ११५
योगिनी गीतगानेन मोहितं भुवनत्रयम्
गीतगाने महामाया वाराही दिव्यं मातरः ११६
नृत्यंति चाप्सरो बालाः भैरवक्षेत्रपालकः
चतुर्वेदा ऋषि सर्वे ब्रह्मघोषं चकार सः ११७
सर्वं सनह्यसावित्री आगता तत्र मंडपे
वामांगे दृश्यते देवी गायत्री ब्रह्मणासह ११८
सावित्री कुपितादेवी दृष्ट्वावै तच्च कौतुकं
सावित्री उवाच
श्रुयतां भोद्विजाः सर्वे योगिनी क्षेत्रपालकाः ११९
षडंग सहतेवेदे ब्रह्मपूजा न विद्यते
क्षेत्राधिपाला श्रुयंता मनाह्लादा प्रवर्तते १२०

नीच जातस्य वाकार्यं भोजनेतिलमुर्मुटा
आकर्णय महामाये महाह्लादेन गायतीः १२१
अवतीर्य स्फुटिकाग्निः वाराहीआदि वैष्णवी
अवतीर्यत्वं च चामुंडे नीचैरपि समाचर १२२
मम शल्येत्वं हृष्टासि ब्राह्मणाः पूजनेन च
विष्णुरुद्रादयो देवैः असुरैस्त्वं च भन्नसि १२३
श्रुयतां ऋषयः सर्वे श्रुति सिद्धिर्नजायते
नांदीमुखत्वमाकरर्य नंदवाण द्विजालये १२४
नसिद्धयति त्वया वाचा अतः परमुवाचह
नांदीमुखा ततो विप्राः करयुग्मे उवाचह १२५
सावित्री तवशापेन विभीताः सुरमानवाः
प्रसादं कुरुमेदेवि तमसि ब्रह्म भामिनी १२६
इत्युक्ते नंदवाणेन सावित्रीवाक्य मब्रवीत्
कोपाद्वै घातसंदोषः तप्तस्तीव्र पथे व्रजेत् १२७
देशेदेशे संभ्रमणं तत्र सिद्धिर्भविष्यति
कृपिते सिद्धि नैवस्यात् क्रयविक्रयत स्तथा १२८
वृद्धि जीविकया सिद्धिः नचसेवा कदाचन
गदतश्च सदानित्यं सत्यं वाक्य प्रमाणकृत् १२९
तदा च देवताः सर्वे दृतं विभ्रांत चेतसः
भवितव्यं नलंघ्येत विधात्रा निर्मितं पुरा १३०
सावित्री उवाच
एक मूर्ति स्त्रयो देवाः ब्रह्मविष्णु महेश्वराः
तन्मध्ये त्वमपूज्योऽपि पितामह भविष्यति १३१
यदावैदेवतानां च दैत्योवै प्रहरिष्यति
तदा अंशावतीर्याहं वाराही आदिशक्तितः १३२
श्रूयतां ऋषिभिः सर्वै सावित्रीमुदिता ब्रवीत्
यज्ञे महोत्सवे रम्ये महारुद्रादि शांतिकं १३३
नकुर्वंति क्रिया कर्म श्रुतिहीनाः सुराः नृपाः
धनाडयाश्च भविष्यंति नंदवाण पुरोगमाः १३४
सावित्री च वरं दत्वा वेदवीर्यं हरेत् तदा

गायत्री सावित्री युक्तो ब्रह्मापूज्यः प्रतिष्ठितः १३५
सावित्री च महासाध्वीतेजो बल तपस्विनी
दत्वा वरं नमस्कृत्य गता देवा निजालये १३६
नांदीमुखा स्ततो विप्राः संप्राप्ता आत्मने पदं
इति श्रीवह्निपुराणे चतुराशीति साहस्रयां संहितायां
ब्रह्ममरीचिसंवादे ब्रह्मखण्डे नांदीमुखवर्णने सावित्री शापानुग्रहो नाम
एकादशोऽध्यायः

## अध्याय १२

ब्रह्मोवाच
तदा नांदीमुखं रम्यं ब्रह्मस्थानं द्विजालयं
तिष्ठते च द्विजज्ञातिर्विष्णुनानिर्मितं पुरा १
वेदध्वनिं समासाद्य नित्य धर्मपरायणः
अग्निष्टोम महायागो लक्षहोमादिका क्रिया २
नंदवाण द्विज पत्नी रूपयोक्त गर्विता
करकंकण संयुक्ता प्रबालकर वल्लरी ३
मृगाक्षी हंसगामिन्यो रक्तपाणी मुपल्लवा
प्रबालोष्ठोऽधरबिंबा षोडशा बालसुंदरी ४
तासांमध्ये च संप्रात्पो नारदो मुनिसत्तमः
वितर्कितस्ततस्त्रीभिर्नारदो ऋषिसत्तमः ५
संतुष्टो वरदो भूयात् एवंकामाश्च सर्वशः
नंदवाण पुरं रम्यं एतत्स्वर्गस्य शासनं ६
इति श्रुत्वा महाज्ञानी नारदोब्रह्मनंदनः
ऋषिपत्नी ततःशप्ता मत्सुतेन मुनीश्वर ७
भवताविदुषी सर्वा जरठी शठवादीनी
तदा च ब्राह्मणाः सर्वे सुशप्ता मुनिपुंगवः ८
निर्वेदा जरठाजाताः सुशास्त्रार्थ विवर्जिताः
भ्रष्टाचारा भविष्यन्ति हेमादिभिर्विवर्जिताः ९
भ्रष्टाचाराश्च एतेवै सर्वयोग बहिष्कृताः
कृती कर्म च वाणिज्यं फलौवणिकवृत्तयः १०

दरिद्र कर्मकुर्वाणा ऋषि पत्नी स भामिनी
कुचैलिनां कुभोज्या च चक्रसूत्र विवेद्धणी ११
ऋषीपत्नी समाह्यष्टा शाधयित्वा पृथक् व्रजेत्
नंद्वाणपुराद्रव्या --सृतो मुनिपुंगवः १२
जगतो वायुवेगेने नैर्ऋतिंदिश माश्रितः
पर्वते च गुहावापी इन्द्रात्ततोबरं लभेत् १३
पूर्वं मुनिवरे शप्तं नारदे ब्रह्मपुंगवे
सारणेशं महालिंगं उमायाः पार्वतीपतिः १४
आदिः तीर्थे महारम्या भिधानं सारणेश्वरं
संप्राप्ताश्च द्विजाः सर्वे नंदवाण पुरोगताः १५
सपत्नी च महाराज्ञी मुनिवराव बोधिता
करयोः संपुटंकृत्वा ब्राह्मणं वाक्यमब्रवीत् १६
अज्ञानाद्वच्मि तद्वाक्यं प्रसादंकुरु मेत्रृषे
एकस्य जठरे वाक्यात एतासर्वादि शापिताः १७
ब्राह्मणस्यक्षणं -- क्षत्रीये -- तथा
--- -- मेकंतु प्राणांरु --- च १८
शप्तानुग्रह कृत्वा नारदो मुनिसत्तमः
घनात्या भवंतां सर्वे नंदवाण निवासिनः १९
क्रियावंतो विकर्षण अभ्रष्टाश्चैव निर्धनाः
ब्राह्मणा ऊचुः
परदष्टे समायाते न देवाणेषु लोभतः २०
किंकरिष्यामहे स्वामिन् रक्षाहीना सुरक्षिताः
नारदउवाच
भवतो यजमानश्च पूर्वं दैत्यश्च वंशजः २१
गंगातुश्च कुले जातो यमुनातीर वासिनः
रक्षंति वाडवान् सर्वे नंदवाण पुरे शुभे २२
ऋषिवाक्यस्य वेगेन आगता आत्मनः पदं
गते मुनिवर श्रेष्ठे ब्राह्मणा विमुखीकृता २३
तथा चरु --रे नाथ असुरैर्निंदितं शुभं
इत्याकरर्यं ततोदैत्य गतोसौ ब्राह्मणं तदा २४

तेनसैन्यं समाहूतं नंदवाण पुरो परि
हेमगदाश्च गृह्यंतां इति जल्पंति मुद्गलाः २५
विचार्य च ततो विप्राः नांदीमुख सभालये
चंद्रादित्यस्य गोत्रेयः कर्णनाथ स्तदा ब्रवीत् २६
गंगायमुनयो र्मध्ये कर्णोजे ग्रंतरालये
दैत्यवंशी महाराजा मांधाता च विचक्षणः २७
सहस्त्रार्जुन महाबाहुः अत्रिगोत्र महाबलः
कामध्वजो महाराजा वंश विख्यात भूपतिः २८
तस्य वंशे महाराजा रणमल्लो रणगर्जितः
महासैन्यो महाबाहुः पंच लक्षस्य नायकः २९
ततः संप्राप्य तेविप्रा नंदवाण निवासिनः
आगताः स्वागतं वाच्या रणमल्ले राजसत्तमे ३०
इंद्रादित्यस्य गोत्रेण कर्णनाथो महामुनि
कथितं पूर्ववृत्तांतं तेन सर्वं समाह्वयत् ३१
ब्राह्मणार्थे समायातं आहवे असुरैः सह
महावीरो महाबाहुः रिपुं वचनमब्रवीत् ३२
प्रहारं कीदृशं कर्तुं लोहकोष्टि किमायुधम्
चंदशेखरमित्याह गदया पोथयच्छिरः ३३
ततो युद्धं महद्भूतं मुशलैश्च धरातले
कामंचतान्दृत्वा च जयचंद्र उपेक्षते ३४
पलायितं महासैन्यं राक्षसानिधनं गताः
रणमल्लो महावीरो जित्वासैन्यं गृहेवृजत् ३५
जयचंद्र कुमारोसौ रूपवांश्च महाबलः
रक्षार्थेतु ततः स्थाप्यो नंदवाण पुरे शुभे ३६
हेमरौप्यं च तत्रैव जयचंद्र नृपोत्तमे
कपिलायाः पदेस्थाप्या निरंचिः कालभैरवी ३७
चतुर्विंशति ततोग्रामान् ददतोनंदने द्विजान्
ततो व्यहर्षते विप्रा व्यवहारादिका क्रिया ३८
परत्रचेहलोकार्थं द्रव्यं दापयते ध्रुवं
तस्मात् द्विजेषु सर्वेषु नंदवाणा द्विजोत्तमाः ३९

यलोके लिखेद्द्रव्यं देयंऋृणवते यदा
लेखप्राप्तं च प्राधान्य नंदवाण पुरे स्थितः ४०
पुंजेन प्रहितं द्रव्यं दुर्गे नंदिनो द्विजे
द्रव्य प्राप्तं न गृह्णाति कार्यसिद्धिरितिब्रवीत् ४१
सचविप्रो नगृह्णाति श्रुत्वाराजा समागतः
राजोवाच
प्रसादं कुरुमेविप्र त्वया द्रव्य परिग्रहे ४२
नाहं भोक्ष्ये चवैविप्र यदित्वया नगृह्यते
देहित्वं दुर्बलान् विप्रान् इति मनसि रोचते ४३
इतिवाद विवादस्य पंचलोकैः प्रबोधितः
तद्द्रव्यं स्थापयेत् पुरयं कासारे विष्णुपादुके ४४
पुंजलाइतिनामेति कलो आविद्यते जनैः
सरोवरं महारम्यं मेरुतः उत्तरे स्थितं ४५
गंगांभ इतिविज्ञेयं झिल्लावापीतथापुनः
ब्रह्मोवाच
जयचंद्र महाराजां असंख्य सैन्य नायकः ४६
दैत्यदुंदुभी राजातो लेखप्रेष्य च मुद्गले
नविस्मरंतिते वैरं नंदवाणस्य कारणात् ४७
त्वं च राम महाबाहो गच्छ नैव नृपोत्तम
राजा तदुदितं श्रुत्वा वस्त्रालंकार पूजितः ४८
तेनदूता महाप्रीताः वाहनैश्च अलंकृताः
पूजयित्वा प्रयत्नेन जयचंद्र उवाचह ४९
दुंदुभे त्वंततोग्राह्यं दशलक्षं ददामिते
ततोदूता स्तदाकरार्य गतावैतद संनिधौ ५०
योधयामि ततो म्लेच्छं इति सैन्यं समाह्वय
रूपवान् निसृतं सैन्यं मुद्गले दुंदुनामतः ५१
सूत्रंकोटंततोदत्वा लेखंलेख्य चतुर्दशः
त्रिशंकु मुद्गलो नाम अलीलःशत्रु---र्दनः ५२
आगता लक्ष चत्वारी संध्या कालेषु सत्वरं
हर्षक्षेत्रहितं लेख्यं सशूलो वंशजातयः ५३

सप्तलक्ष महासैन्यं वृषजोनाथ नायकं
अहितं लेख्यमल्लार जातिसुंदरः ५४
क्रतुसेन महाराजा मुद्गलश्च महाबलः
सप्तदुंदु राजानो लक्ष द्वादश नायकः ५५
शक्त्यालय महाराजा पंचलक्ष निशाचराः
संप्राप्तश्च महाबाहुः पुष्पनामेति मुद्गलः ५६
गर्जन पुरंप्राप्तं निसृतस्यैन सत्वरं
आम्रकोटात् समायांतं तेषुसैन्यं महाबलं ५७
इतिब्रुवस्तदा दैत्य जयचंद्रो महाबलः
गंगायमुनयो र्मध्ये तटेवीर समागतः ५८
निर्जिता दुष्ट राजानो समुद्रांतं महीपते
सप्तसाहस्र संख्याकं वेदपाठपरायणाः ५९
दशसाहास्र संख्याकं तर्कवादी नृपालये
अष्टादश सहस्राणि शक्तिपाठस्य वाचकाः ६०
मुद्गलानां महासैन्यं राज्ञश्चै तन्महाबलं
अथातो नंतरं वत्स रजसेना वदाम्यहं ६१
लक्षत्रयं महासुरा खड्गहस्ता महाबलाः
लक्षाणि सप्त अश्वाश्च दुर्घटा टोपपाखराः ६२
चतुर्दश सहस्राणी उन्मत्त दंतिनां तथा
कोटित्रयं हयानां च ते सर्वे रणगर्जिताः ६३
रथा सहस्र पंचाशद् कोटि लक्षण लक्षिताः
द्वात्रिंशत् लक्षनिर्घोषा निष्षाणिस्तार त्र्यंबके ६४
क्रशकटाकोटिसप्तैते अन्नपानानि संस्थिता
द्वादशकोष्टिका सर्व सर्ववस्तु समन्विता ६५
छत्रं च वारुणं मेघंश्वेतातपत्र सुंदरं
चामरैः कनक दंडस्य नरसमुद्र भूपतिः ६६
जीवरक्षा महागर्दान् दुर्घटाटोपटंटरान्
शूलभल्ल तथावक्रान् क्षुरिकाश्च कुठारिका ६७
चंद्रतारामणीखड्गान् पंचचर्मणि चंद्रमाः
यथा कच्छपिभाति तथासामितवाहना ६८

द्विपकाय महादंष्ट्री चंद्रभाति पदामणी
छत्रधारी महाराजा चतुषष्ठी सहस्त्रशः ६९
जयचंद्रो महावीरो मांधातृवंश मंडनः
अतीव सुंदरो रूपे रणमल्ल सुतोबली ७०
एवंसैन्य महाराज्ञः मुद्गलो मानमर्दनं
कर्णालयतटे रम्ये सूत्र कोट गृहपटी ७१
द्विपंगुं मुद्गलो राजा मरीचि शृणु तत्परः
तिष्ठ म्लेच्छ दुरात्मानो अन्न भक्षणकारकाः ७२
समायांती महावीरा दुर्घटाटोप दुर्जयाः
शार्ङ्ग वाणमन्नादि दीप्ता कर्णासकुंडलाः ७३
दीप्यमाना महावीरा कुंकुमालोप दुर्जया
मुद्गलाश्च महारौद्रा अम्लशरैश्च दीपिताः ७४
भल्ल तोमरखड्गैश्च कटीकर सवांकुली
नीराजन अटवीवाटान् पाणीपीवर वाद्यकान् ७५
अपूप मंडपत्यान् भ्राजीतीरश्च क्षालयन्
भोगीभोगविलासिन्यो बाजरी व्यवसायिनी ७६
स्वाद्यपेयादि संयुक्ता षड्त्रिंशच्च सदायुधाः
ततो शूरा महावीरा मुद्गला रणगर्जिताः ७७
महाबल धराधीराः वाणहस्ता धनुर्धराः
बाहुदंडावलीर्बक्ता स्वयमासन संस्थिताः ७८
आशीविशा समायांति क्षत्रिया असुराश्चते
लंवमाना पताकाश्च श्वेतात पत्रसुंदरा ७९
श्वेतछत्रं महादिव्यं ध्वजाव्यंज वधुरवे
उद्यंत कनक कलशं चामरै मरशक्तिभिः ८०
खड्गानां गदया शक्ति पदैतटल तोमरा
शक्तिहस्ता करेकोष्ठा चेतोद्धाटित ग्रंवरा ८१
सुदीप्तं असुरैःसैन्यं उरसि रत्न मोक्तिके
दृश्यते दुंदु राज्ञोवै मुद्गलो दैत्य वंशजः ८२
सेनानीनाथ संदीप्तः उद्यतं रत्न सुंदरं
हयगजरथानां च तेन सैन्यानि वाजिभिः ८३

राजसैन्य समासीना पंचकोशे समाविशत्
पटकुटि ग्रहादिव्या स्थिता तत्रसरोवरे ८४
इति श्रीवह्निपुराणे चतुराशीति साहस्त्रयां संहितायां ब्रह्ममरीचिसंवादे ब्रह्मखंडे नांदीमुखवर्णने नंदवाणा माहात्म्ये सकलराज शिरोमणी जयचंद्र मुद्गल सैन्य युद्धवर्णन नाम द्वादशोऽध्यायः

## अध्याय १३

ब्रह्मोवाच
शृणु वत्स महादिव्यां कथां पौराणिकिं शुभां
द्वयोर्युद्धं प्रवक्ष्यामि कौतुकं शृणु सत्तम १
जयचंद्रो महाराजः अनाथनाथ सुंदरः
अदृष्टप्रष्ठको वाहः दाता च बलीविक्रमी २
गोब्राह्मण प्रजापालः धर्मराजा प्रजापतिः
गजासनो महावीरः श्वेतछत्रं शिरोधृतं ३
हेमकलश संयुक्त दीप्त मणी परिधृतं
असंख्यात सहस्त्राणां भृत्यानां परिवेष्टितः ४
सप्तलक्ष महाश्वाश्च प्राचीया र्धदलक्षताः
अथातो दुंदु राजासौवरुणं छत्र प्रस्तके ५
तप्तहाटक संदीप्तं मणीवृंदैः परिवृतं
चामरैर्वीज्यमानो सौ मुद्गलैः परिवेष्टितः ६
कुर्गडानासिका स्फोटा चंपगंगाजला शुभाः
उत्पाता शस्त्रसंघातै रवतारण वर्जिताः ७
ततः समुद्र लोप्याह मायावैरं पटं लिखेत्
नंदवाण द्विजातीनां त्वयावीरं निरर्थकं ८
इत्युक्तो दुंदुराजेन जयचंद्रो वचोऽब्रवीत्
गुरुवैरं गुरुभक्ताः वयंवतमिहे सदा ९
देवस्य च जयंदद्यात् रामचंद्रो महायशाः
भवानीं हृदये ध्यात्वा उत्पत्य लोविदं हरं १०
जयचंद्रो महावीरो मृत्येभ्य इद मब्रवीत्
अमोघं वाणं मुमुचे द्वितीयं सिद्ध मद्भुतं ११

आहूश्च ततोयोद्धा मुद्गलस्य भयंकरः
भल्ल शक्ति कुठारैश्च प्रहताश्च धरातले १२
चिच्छेद भिन्नगात्राणि श्रोणि तेन अलंकृताः
विधायापदिश स्तत्र अश्वानां घातमापतत् १३
अमोघा वाणसंवृष्टि स्तताविधा धरातले
चक्रमदनसंक्रुद्ध पतिताश्च महाहवे १४
अपराकीघूर्णितायाति नृपनिद्धा पतंति च
यांतिशूलं यथापुष्पा धरादृष्टानरैः शिरः १५
वाणंवाणेन संवृत्तं वरीतत्र तटातटी
हयानां च गजानां च प्रहारैश्च दिशस्तदा १६
अमोघवाण श्चक्रकच्छ त्तुरप्राली प्रहारकैः
अशक्ता वाणमेघैश्च पतिताश्चैव विह्वलाः १७
ततस्तुकुपिता दैत्याः दारुणं युद्धमद् भुतं
गजदंत पदैर्भिन्ना युद्धावाजि गणा स्तथा १८
गजागजैः प्रपद्यंत अश्ववीरा अनेकशः
रथारथै प्रयांत्यंते तथावाजी परस्पर १९
पदातथश्चपादातैः उष्ट्राउष्ट्रै गजागजैः
गर्जंति पंचशब्दानि गर्जन्वै राजदुंदुभिः २०
भिविल्लैर्बल्लिकानादै रोमांचितशिरोरुहाः
रणत्कार त्तणे नादं आरावअवगर्जिते २१
रणातुरामहोग्राश्च मरदंटल घोषिणः
धरा च कंपिता नादैः हयानां हेषणोद्भवै २२
गजानांशब्दसंघातैः कंपते पर्वता बली
युद्धनाद रवं घोरं श्रुत्वागर्भ प्रपातनं २३
कंपिताउग्रगिरयः सुराणां नाद मिश्रितैः
गर्जिताश्च दिशो नादैः षडंगज्वालमाकुलाः २४
विद्युज्ज्वलतिह्याकाशे खड्गभाशक्ति तोमरैः
उभौ परस्परं युद्धं ततो युद्धं महाबलं २५
करीकरा हता नागा भूपरि परिवेष्टिताः
शुंडादंडैश्च दंतैश्च वक्रदंडे नमर्दिताः २६

भ्रमंति मत्तनागेन्द्रा स्ततो योद्धा पतंति च
क्षत्रपै घतिसंघाते ततो युद्धा सहस्रशः २७
एवं रणं महाघोरं षरणमासं राजसुंदरं
पतिता पात्यमानाश्च संग्रामे मुद्गला द्रुतं २८
युद्धानां च महाम्लेच्छ स्त्रिग्रायुक्तं नराधिपैः
षरणमासं च ततो युद्धं एकैकस्य च त्रोटितं २९
संपूर्णे द्वादशे वर्षे युद्धे म्लेच्छो रणे हतः
मुद्गलश्च रणे हत्वा राक्षसेनेश नायकान् ३०
हर्षितश्च महाराजो जयचंद्रो नराधिपः
तत्सैन्ये उत्सवो जातो गोब्राह्मण हितान्वितः ३१
विनष्टा मुद्गलाः सर्वे राजाकुशलवान भूत्
राजासैन्येनकुशलं संदीप्तं रणगर्जितं ३२
इति श्रीवह्निपुराणे चतुराशीति साहस्रयां संहितायां ब्रह्ममारीच संवादे
नंदवाण महात्म्ये दैत्य वधो नाम त्रयोदशोध्यायः

## अध्याय १४

जयचंद्रो महाराजः सागरां तमहीपतिः
सर्वसैन्येनसंयुक्तो संप्राप्तो गृह वेश्मनि १
जयचंद्र सुतो वीरो शत्रुघ्नो मेधबाहुकः
संप्राप्तश्च मरुस्थल्यां नांदीमुखस्य रक्षणे २
मंडपस्य पदेस्थाप्य नंदवाणे च रक्षसां
वर्षे त्रयोदशे जाते संप्राप्ता घोरराक्षसाः ३
अगणिता असंख्याता लक्षलक्षाणि कोटिशः
धनुर्धरा महावीरा करवाल निषंगिणः ४
बद्धकरस संपन्ना कुडकार शरासनात्
भजंति च अश्वपस्था समाहारा च दुर्जया ५
सददर्शबहून् म्लेच्छान् कृष्णावासान् भयंकरान्
चतुराशीति सहस्राणि दश संख्या सहस्रशः ६
दशपिर्दशकैः सैन्या कोटिसैन्या महाबलं
जयचंद्रो महाराज लेखं प्रेष्य दिशोदश ७

हया गजा रथा योधा सर्व सैन्याः वंडिता
गजाश्चाश्वाश्च वैतत्र सर्वे ते हेमयालिनः ८
तल व्यंजन निःक्वाणैः गर्जति राजदुंदुभिः
ततस्तु दारुणं युद्धं कंपते गिरिकंदरा ९
ततस्तु राजराजानं सर्ववस्तुं समन्वितं
शत्रुघ्नमेव बाहुभ्यां प्रहिते कोशतो वसु १०
मरुस्थल्या च संप्राप्ता मंडपे पदमिश्रिता
रक्षाधिप महावीर नंदवाणेति रक्षिता ११
पावर्तत महायुद्धं जयचंद्रेण दानवैः
सवाणैः वाणतरेखड्गहस्ता प्रधाविताः १२
पतिताश्च महावीरा अर्धचंद्रेण पातिताः
यक्षिणी पक्षीरूपेण शोणितार्थे च तत्रवै १३
क्रमंति शक्तिरूपेण काकग्रध्रादि पक्षिणः
अंधकार महारेणुः सैन्य नाथस्य आगतः १४
गर्जितस्य पुरेराजा वह्नौ इलमुहुलखेटितं
तेनसर्वाणि वै तेन मुलतानाभिधानतः १५
सरपुरं सर्वसंग्रामे सागररम्य धनुर्धराः
शक्तिपुरान् समायाता लक्षत्रितयमेव च १६
शामीपुरसमातस्थु आदिसर्वादि हर्म्यजाः
एकाशीति लक्षमिता षष्टीलक्षं सुयोजिता १७
महावला धनुर्धरा पंचकोटि धनुर्धराः
ततो राजासने रुद्धो जयचंद्रो महाबलः १८
युद्धस्थितो महाक्रूरो म्लेच्छानां मानमर्दनः
सर्वभक्षा दुराचाराः अमोघा वाणवर्षिणः १९
पतितस्य शराघातैः लोप्तानांगोलकं यथा
तेषु बाणशिला धौताश्चित्रपुंख शिखारुहः २०
चलंतिक्षत्रियबाणा बाणविद्धा धरातले
कुपितश्च रणेक्षत्री खड्गहस्तो महाबलः २१
विश्लिष्टं तच्चदैत्यानां जयचंद्रे नृनानके
कंधरखड्गघातेन महायोधा धरातले २२

कुपितश्च रणे क्षात्रा कंकणे शब्दघातने
विक्रंदित महासुरा भल्लविद्धा धरातले २३
आक्रंदंति महानादं बाणविद्धापतंति च
श्नोणबाणधरारक्ता जातोरुधिर कर्दमः २४
तत उत्थाप्यते तत्र जिह्वा निपृत वाजिनः
भग्नारथा महादिव्या चर्मखड्ग धरातले २५
मुक्तकेशा पतंत्यत्र दुष्ट म्लेच्छा पुनःपुनः
चलते आगता पूर्वं पश्चादायांति वेगतः २६
क्षत्रियाणां करोद्धस्तापथ वृक्षा नदीतटे
अमोघा बाणघातेन ततो युद्धं महाबलं २७
महाबला महाधीराः बाणधाते पतत्यपि
चतुषष्टिहतायोधा असंख्याता सहस्रशः २८
पतिताश्चापरेयोधा क्षत्रिया रणगर्जिताः
ततःसकुप्यते राजा यमुनायाजले शुभे २९
ततोवृंदं महद्भूतं मुद्गलेनाथ संयुता
दृष्ट मात्रप्रमाणेन राजास तत्रसुस्थिरः ३०
रतावृत्त प्रमाणेन वाणविद्धा महीतले
असंख्या एकवाणेन राजानो विस्मयंगताः ३१
उदयसिंह प्राधान्यससाध्यो वीर भद्रकः
अस्मत् सैन्येषुनिर्घोषा त्र्यंबकायत्रनिर्मिताः ३२
द्वात्रिंशल्लक्ष निर्घोषा तं कथ भयभीतये
विजिता कुत्रगच्छंति इतिवक्तुं नराधिपे ३३
जयचंद्र इदं वाक्यं प्रधानेन समब्रवीत्
जयचंद्र महाराजा सर्ववादित्र निर्ध्वना ३४
नरात्रीं चैवदिवसं विहतो दुंदुभिध्वनिः
नादश्च दुंदुभेलीनः धनुवश्च ध्वनेर्भयात् ३५
शार्ङ्ग धनुः शब्देन ततोनिःपाण मुद्रिता
ततो राजा सदा क्रूद्धः सर्वं शास्त्रं गजासने ३६
महादंडो महाहस्ती वृंदे वृंदे सः धावति
इतिवाक्यं ततो विद्धा शरैघोषैराकुली कृता ३७

ततो सदृष्यते वृंदं तटे तीर महाबले
समूहे च महयुद्धे सहस्राणि चतुर्दश ३८
ततोविध्वा प्रहारैस्तु बाणपूर्णे महाजले
राजसैन्यं ततोभग्न गतायोधा चतुर्दिशं ३९
केचिज्ञलेहता हस्तीके चिन्नीतां पृथक् पृथक्
गृहिताश्च विनश्यंति नज्ञातंराजलक्षणं ४०
महासैन्यं महोराज्ञो मरणे चैवलक्षितः
नजानीयो जलेचासौ धरायां ग्रसीतोथवा ४१
नजानेउत्पथगतौ यूथमध्ये रणेदृतः
गर्जनाधिक क्रुद्धेन जयचंद्रेण क्रंदिता ४२
क्षत्रियाश्च गताः सर्वे भग्न सैन्यं चतुर्दिशं
हताविद्धा ततो भृत्या जयचंद्रस्य पार्श्वतः ४३
संप्राप्तश्च मरुस्थानं मांडव्यपदमालयो
तप्तस्थिता महाविप्राः सर्वेनंदपुरोगमाः ४४
जयचंद्र हते वीरे वीरवाहेन पालिताः

इति श्रीवह्निपुराणे चतुराशीति साहस्त्र्यां संहितायां
ब्रह्ममरीचिसंवादे ब्रह्मखंडे नांदीमुखवर्णने नंदवाण माहात्म्ये जयचंद्र
संवादे चतुर्दशोऽध्यायः

## अध्याय १५

ब्रह्मोवाच
जयचंद्र सुतोवीरो मघवाह विचक्षणः
पालयति प्रजा सर्वा नंदवाण द्विजालयं १
सचकार वीरराज्यं बाहुदंड प्रसादतः
उद्धसंत भयेजातं विलोक्याथ गतायुशः २
तत्रतिष्ठति तत् सैन्यं मुद्गलानां तथैव च
स्थल स्थलि जलेदेशे प्रसृज्य नन्वतिष्ठति ३
सनह्य मुनिमारीचं ब्रह्मावचन मब्रवीत्
शृणु वत्स यथाख्यानं वाडवानां यथार्थतः ४
नंदवाणं पुरं रम्यं विष्णुना निर्मितं पुरा

हेमांग विहितं चैव जयचंद्र भूभृताकृतं ५
राजवृत्तिस्ततः स्थाप्या नंदवाणान् द्विजोत्तमान्
चतुर्विंशति महाग्रामा नंदवाणा पुरं सह ६
संकल्पो पादिता सर्वे पीतांबर सुप्रीतये
कारिता ब्राह्मणाः सर्वे नंदवाण निवासिनः ७
महेंद्र पश्चिमेभागे विंध्याचल समास्थिता
मुक्तिमार्ग समानाडि पंथानं नृपसत्तम ८
अर्धं विप्रान् प्रदास्यंति अर्धराजा परिग्रहे
पूजितश्च प्रयत्नेन नांदीमुखा सुखस्थिता ९
जयचंद सुतो वीरो शत्रुघ्नो मेघबाहुकः
पितृवाचं समाकर्ण्य स्वस्थाने रक्षणाय च १०
सदाचारास्ततो विप्राः सत्यधर्म प्रवर्तताः
नित्योत्सवा महारम्या पंचपर्व समन्विताः ११
नीलोद्वाहोभाहा यज्ञ अग्निष्टोम फलप्रदः
लक्षहोमतपस्तप्तो महोत्सव गृहे गृहे १२
नंदवाणपुरे रम्ये वैष्णवं धर्म निश्चलं
इत्याद्या सर्वतो विप्राः कलौव्यापारवासिनः १३
वक्रकक्ष गृहे दिव्यं आत्मवत् परिरक्षितः
पृष्टरम्यात् समायाते देहिद्रव्यकचेगृहे १४
दापितस्तुगृहे द्रव्यं गतो सौनिजमंदिरे
तस्मिन् काले च संपन्ने द्रव्यं पाचयते द्विज १५
ददे ददामि इत्युक्तो द्विजे क्रुद्धे वचोऽब्रवीत्
नदास्यतिमया द्रव्यं कक्षउच्छिष्ट संक्षिपेत् १६
कृणंकस्य इदं श्रुत्वा इत्युक्तं ब्राह्मणं प्रति
अशुद्ध दापितस्तुभ्यं यत्रस्थं तत्र गच्छति १७
इत्याकर्ण्याथ भूपालो मेघबाहु नराधिपः
आहूतश्च दुरात्मानं स्थंतरन् निगडीकृता १८
कोशस्थं दापितं द्रव्यं तोषितानंदिनोद्विजाः
अर्ध मूल्यं न गृह्णाति नैवदाप्यं कदाचन १९
मारीच उवाच

चांडालाश्च कलौमध्ये दुष्टराजा महीतले
कथं नांदीमुखा विप्रा किमाचारमतः परं २०
ब्रह्मोवाच
प्रदुष्यंतिचयेभूषा नंदवाण निवासिनः
शुभंनैव तदा तेषां राज्यं भवति विज्वरं २१
देशेतत्रनदुर्भिक्षः नांदीमुखाश्च ब्राह्मणाः
उत्सवः सर्वलोकानां नृपाणां च विशेषतः २२
भ्रष्टात्रारा कलौमध्ये स्थान भ्रष्टा भविष्यतः
स्वेच्छया वासिनः सर्वे बणिग्वृति नसंशयः २३
अन्यथा च द्विजातीनां कृपीवाणिज्ववर्तिनाम्
कलौमध्ये भविष्यंति चतुराज्ञी स्थानमानिनः २४
नंदवाणपुरीस्थापी यत्र तत्र च वासिनः
पुण्यवर्ती सदाचारा अन्नदाता कलौ युगे २५
मरीचि उवाच
प्रशप्ताश्च महाविप्रा नारदे ऋृषिसत्तमे
शापस्थानुग्रहा वाप्यो पितामह ब्रवीतुभे २६
ब्रहोम्वाच
शृणु वत्स कालौरूपं यवाकार इवस्थिनं
कियत् काले कलौयाते संप्राप्ते पुण्यसंभवेत् २७
कामान्यमहासव्य शीघ्रा अभूद् राजा नृपुंगवः
नंदवाण महा---नं पालयेच्च प्रयत्नतः २८
नंदवाण द्विजानां च स्वकुलजन्म आश्रित
सदाचार सविद्वांसो मुच्यतेयोनि संकटं २९
कृतयुगेषु संस्थाप्य नाराद्रिणी महानगे
स्वयंज्ञाति मृग----- युगे पुने ऽवतारितः ३०
दत्तं वरंपुरा पूर्वं हरिहरद्न देवते
अनुग्रहे वरोदत्तो नारदेमुनि पुंगवे ३१
कलौमध्ये भविष्यंति य पवित्रा महाबलाः
धर्मवृद्धिरतालोकः धर्मराजानु मंडले ३२
शासनानि प्रणावंते यत्रस्ते ब्राह्मणाश्रिताः

तदांत नंदकरोति श्रीयंवृद्धिः प्रजायते  ३३
कलौ अंतेसभायार्ते ब्राह्मणाः दुखिताः पुनः
भ्रष्टाचाराः प्रवर्तंते ब्राह्मणा दुःख पीडिताः  ३४
यत्र यत्र प्रवर्तंते इच्छाचारी च सर्वशः
वर्णावर्णो न विद्येत कलौ अंते न संशयः  ३५
हस्तमात्रं तु पुरुषः तदातेंद्र कामिनी भवेत्
द्वादशवर्य मायुष्यं सप्तमासेन तु गर्भिणी  ३६
कलौ अंतेभविष्यंति प्रजायां पन्ना--तथा
वराजंग्रमावापि पादयाश्च चतुष्पदाः  ३७
पुनरेव प्रवक्ष्यामि भविष्य ---कारिणं
जाह्नव्या स्तोकमापश्च सत्कालश्च भविष्यति  ३८
शुष्यते मरिता तोयं निर्झ--णां नदीषु च
द्वादश योजने स ख्या वासमै कोटि दृश्यते
जलेषु निसृतं सर्वं नंदवाण पुरोपरि  ३९
गौराचल नदीवेगात् स्थलितं निसृतं पुनः
वाहने पश्चिमां गं यां उभौ तीरेण निसृतौ  ४०
हेमशिखरप्रासादं प्राकार स्फाटिकोल्लसत्
गवाक्षनाल संदीप्तं दृश्यते हरिमंदिरे  ४१
प्राप्तेकृतयुगेत्वादि स्थापिते च पुनस्तथा
रहुक्षीरधृतागावो बहुशस्था च मेदिनी  ४२
कृतयुगे समायाते ब्रह्मस्थान सदाजयः
सदाचार समाश्रित्य भविष्यत् युगवत् क्रिया  ४३
दीक्षानाजीवनी विद्या कृतेयुगे प्रशस्यते
यदारम्यं महास्थानं नंदवाण द्विजालये  ४४
कलौमध्ये विशेषेण गुप्ता स्तिष्ठंति देवताः
सगरकूपोदके स्नात्वा ब्रह्मकुंडेषु मज्जनं  ४५
गौरगंगा समाख्याता पिंडदानं प्रकुर्वतः
सफलंजीवितं तस्य त्रौलोक्ये मुक्तिदायकं  ४६
नंदवाण विशेषेण आत्मस्थानं गरीयसं
जिवितं अन्यतस्थानं वसितव्यं द्विजोत्तमैः  ४७

यात्रार्थे च गमिष्यंति नंदवाण द्विजालये
नांदीमुखा महास्थानं विलोक्य च विशेषतः ४८
नंदीनि च महामाया विश्वेदेवाश्च पंचमं
सरस्वती गौरगंगा चक्रतीर्थं द्विजालयं ४९
एतेषां ग्रति तीर्थानि कलां नार्हति शोडषीं
ग्र--देनर्मदेयात्रा गंगागोमती गोतमः ५०
तदृश्यसागरी गंगा कलांनार्हति शोडषीं
कुरुक्षेत्रं यतो पुण्यं ग्रहणे रविपर्वसु ५१
एकयाद्वादशी पुण्यं कलांनार्हति शोडषीं
प्रयागं च माघमासे गया कोष्ठेषु तर्पणं ५२
चंदवाणासागरीगंगा भाद्रपदे फलंलभेत्
पंचपर्व सदाचारा महारुद्रं करोतियः ५३
एकादशी द्वादशी पुण्यं कलांनार्हंति शोडशीं
गोकर्णे लांगलेक्षेत्रे कपाले च मुपस्थले ५४
तत्फलं लभ्यते पुण्यं नंदवाण द्विजालये
दुराचाराश्च पापिष्ठा कल्पिष्यंन्यं च पातकी ५५
तर्पणे मुक्तिमाप्नोति नंदवाणकूपोदके
ग्रात्मस्थानं निरीक्षेत पूजयित्वा प्रयत्नतः ५६
श्रूयते इति ग्राख्यानं कृतकोटि फलंलभेत्
शृणु वत्स प्रवक्ष्यामि नंदवाण द्विजोत्तमे ५७
गते च निर्धने ग्रामे नंदवाण पृथक् गते
कौशिकगोत्र मुत्पन्नो ब्राह्मणो एक दुर्बलः ५८
नंदवाण पुरींयात स्तत्रगत्वा सुखीभवत्
गृहिणी दुःखिता विप्रे नित्यंकलहकारिणी ५९
स्वगृहात् निसृतो विप्रः व्रजितो द्वारिकां प्रति
संध्याकाले गतो विप्रः ग्रसीग्राम समीपतः ६०
ग्रश्वत्थश्च महावृक्षः दृष्टस्तत्र विश्रामितः
दुःखशोक विनाशाय शक्तिपाठं तदाकरोत् ६१
ग्रश्वत्थश्च महाज्ञानी कपोतः कोऽपि तिष्ठति
कपोत उवाच

महाकार्षी भोजने चिंतां वससिकृत्र आगतः ६२
नंदवाणपुरोवासी नकोऽपि निर्धनो कलौ
द्वारकांप्रति गच्छामिशु नाराद्रीण निवेशिनः ६३
अदत्तं नैबलभ्येत जपयज्ञै विनाक्वचित्
शुद्धेपथि नवर्तेत यत्रतत्रस भुंजति ६४
दुष्ट बुद्धिः प्रवर्तेत ब्राह्मणो निर्धनो भवेत्
त्रीणि संध्या विहीनस्य शुष्क मर्द्देषुसंधिषु ६५
स्नानदान नकुर्वंति ब्राह्मणो निर्धनो भवेत्
अदीक्षितो वाडवश्च वेदशास्त्र विवर्जितः ६६
नीचदान प्रतिग्राही ब्राह्मणो निर्धनो भवेत्
सप्तशती महापूजा शालिग्राम शिलापि च ६७
पूजयित्वा प्रयत्नेन लक्ष्मीवान् भवसुद्विज
तवतुष्टो द्विजश्रेष्ठ शक्तिपाठ प्रमाणतः ६८
ऊहितं परस्परं गुह्यं शुभ विप्रहितं परं
पुनरेव प्रवक्ष्यामि लक्ष्म्या आगमनं गृहं ६९
तुलसीदल संयुक्त चंदनकेसराणि च
पूज्यंति महाभक्ताः क्रियायुक्ता स्ततःपरं ७०
वांछितंलभते पुत्र पुत्रपौत्रादि कस्य च
क्षीरखंडादि संयुक्तं भोजनं शर्करायुतम् ७१
अपूप मंडपारम्या लभ्यते हरिपूजनं
सुरभीजनसखासंगं तथाधराज चंपकैः ७२
लभते भोग जगन्नारं तुलस्या हरिपूजनं
पंचभूमि त्रिभूमि च सप्तभूमि गवाक्षकं ७३
अगुरु चंदन आलेपे लभते नात्रसंशयः
तलगल्ल मिश्राणि सहस्रशीर्षणी दीलपा ७४
पुल्यंक पुष्पमादाय चित्राली ज्योतिदीपकं
सवीक्षे शतपत्राणि पलय्यं भ्रमरेषु च ७५
चामरैर्विज्यमानाश्च मनोग्यालकामी
क्रीडन्ती दीपकंज्योति वर्तीपर्या सखेमणी ७६
शिखीतपंचसंख्याकं तैलपात्रं च गोप्यतः

लभंते नरभक्ताश्च शालिपाम शिलार्चनात् ७७
चंदना गुरुसंयुक्तो तुलसीदल कोमलैः
यज्ञे दिव्यंवरंवस्त्रं पदक्षीरोदनिर्मलं ७८
दिव्यवीरमहानर्मा गोः उमोखदी पितान्
शालिग्राम शिलाबिंबं तुलसीदल पूजने ७९
प्राप्यते सकलान् भोगान् मृगाक्षीहंसगामिनी
सुरतेजागरि क्रीडा निशायां नव यौवना ८०
लभते सनरा भक्त्या तुलस्याहरि पूजनात्
सर्वसंपत्ति संयुक्ताः गजाश्चैव तुरंगमाः ८१
तुलसीपूजने भक्ता मनोभिज्ञासुकामिनी
वारुणं छत्रं पात्राणि गजवाजि मही रथाः ८२
एकचित्त हरिपूज्यो तुलसीदल मस्तके
इत्युक्तश्च कपोतेन ब्राह्मणो विस्मया गतः ८३
अल्पायासं बहुफलं किमुक्तं पक्षिणा त्वया
ईदृशी लभ्यते लक्ष्मीः निर्धने नैव दृष्यते ८४
सुश्रिया जायते लोकः दरिद्रो नैव तिष्ठति
कपोत उवाच
सर्षप शृंगाग्रमात्रेण यः कालंतिष्ठते नमः ८५
गवात्रितेषुतिष्ठिन् वै गोविंदे मन आस्थितः
अश्वमेध फलंप्राप्य तावद् विष्णु स्थितं मनः ८६
एकान्वित नरैःपूज्यः तुलसीदल कोमलैः
त्वयापाठे समुच्चारे स्थाने मनोनविद्यते ८७
जनो वै नैवजानाति दूरस्थे श्चैव श्रीपतिः
आसीद्धर्मपुरीरम्या वसंति श्लोक पाठितौ ८८
उपाकालेतु संप्राप्ते सिद्धान्नकधारिणौ
निसृतो नगराद्बाह्यं वृक्षछेदन कारणात् ८९
काष्ठं च विक्रयं कृत्वा नीच कर्म प्रतिष्ठितं
सिद्धानं च करे धृत्वा नदीतीरेषु भुंजतः ९०
द्वयोमध्ये कनिष्ठोऽसौ क्रियायुक्तेन भुंजते
नदीतीरे स्थितं लिंगं शमीदुर्वाच चर्चितं ९१

ज्येष्ठभ्राता वितर्कस्सन् सभ्रष्टोरोषदूषितः
कस्मिन् काले समायाते कनिष्ठो सौ मृतस्तदा ९२
पुरपति गृहेजातः कुमारो ऽतीव सुंदरः
वाजि क्रीडा गतो रणये संप्राप्तश्चोत्तरांदिशं ९३
अप्युवाचइयंभूमिः कर्हि दृष्टा मयापुरा
सवृद्धः परभवे भ्राता काष्ठभार समागतः ९४
विलोक्याथ कुमारेण कनिष्ठः कुत्रतिष्ठति
व्रतंतस्यसमादिष्टं क्रिया युक्तो न तिष्ठति ९५
जातं बहुतरं कालं स चमृती वनांतरे
वृद्धे निवेदितो एवं कुमारो वाक्यमब्रवीत् ९६
शमीदर्भा नदीतीरे आलस्यं च नराधम
तेन काष्ठस्य भारेण बद्धो वहसि दुःखितः ९७
शृणुविप्र महद् याम्या तं बालश्री जगदीश्वरे
तुलसीपत्रेण संतुष्ट विचार्य अर्भकासमः ९८
कपोतवचने प्राप्तो नंदवाण निजासने
संप्राप्त सक्रिय कर्म बहुधनी द्विजोत्तमः ९९
षष्टी वर्षस्य संख्यानि तेनविप्रेण वासितः
धनादना जायते विप्रा सदाचार क्रियापराः १००
मारीच उवाच
मृत्युसंजीवनी विद्या मृत्युं जयस्तथैव च
महाविद्यां ततोलब्धा चंद्रादित्यं सजीवति १०१
कामधेनुगणाविद्या यज्ञविद्या तथा पुनः
नंदवानपुरीजाती नंदवाणस्य सन्मुखः १०२
परस्पर विरोधेन नभवंति कदाचन
अटचत् कलौ महामध्ये सदाचार प्रवर्तकः १०३
तेषां च सत्कुले जन्म स्वयंज्ञाति युगे युगे
ब्रह्मज्ञानी महाविप्रा संप्रयाति शिवालये १०४
कलौयुगे च आकारः आद्यंत विवर्जितः
मध्ये धर्म विजानीयात् इति संज्ञां विधाय च १०५
निवसंति सदाचारे विद्यांचैव भविष्यति

प्रचलंति कियत्कालं क्रतेत्यादि महाफलं १०६
नारदशाप दग्धेन नंदवाणेषु ब्राह्मणि
सौख्यं जायते सापि करकाष्टं विहाय च १०७
भवंति सुखिनः सर्वे रूपयौवन गर्जिताः
करकंकण संयुक्ता हेमभार परिवृत्ताः १०८
दिव्य चीर महाशोभा पदक्षीरोदवाससः
सर्वेशाप विनिर्मुक्ता भर्तृ वाचा परायणाः १०९
नंदवाणस्य माहात्म्यं यःश्रृणोति स बुद्धिमान्
विद्यार्थी लभते विद्यां धनार्थी धनमाप्नुयात् ११०
मोक्षार्थी लभते मोक्षं नारायण प्रसादतः
अहोनांदीमुखा विप्रा येषांतुष्टो गदाधरः १११
भविष्यंति यथा रूपा प्राप्ते कृतयुगे पुनः

इति श्रीवह्निपुराणे चतुराशीति साहस्त्र्यां संहितायां
ब्रह्ममरीचि संवादे ब्रह्मखंडे नांदीमुखवर्णने नंदवाणा माहात्म्ये पुनःकृत
युगावस्था वर्णनं नाम पंचदशोऽध्यायः
समाप्तोयं नंदपुराणं

## नव ग्रहनी स्तुतिः

### सूर्यः

जपाकुसुम संकाशं काश्यपेयं महाद्युतिं
तमोऽरिं सर्वपापघ्नं प्रणतोस्मि दिवाकरं

### चंद्रः

दधि शंख तुपाराभं क्षीरोदार्णव संभवम्
नमामि शशिनं सोमं शंभोर्मुकुट भूषणम्

### मंगळः

धरणीगर्भ संभूतं विद्युत्कांति समप्रभं
कुमारं शक्तिहस्तं च मंगलं तंनमाम्यहं

बुधः

प्रियंगु कलिकां श्यामं रूपेणा प्रतिमं बुधं
सौम्यं सौम्यगुणो पेतं बुधं तं प्रणमाम्यहं

गुरुः

ऋषीणां देवतानां च गुरुं कनक सन्निभं
बुद्धियूतं त्रिलोकेशं नमामि तं बृहस्पतिं

शुक्रः

हिमकुंद मृणालाभं दैत्यानां परमं गुरुं
सर्वशास्त्र प्रवक्तारं भार्गवं प्रणमाम्यहं

शनिः

नीलांजन समाभासं रविपुत्रं यमाग्रजं
छाया मार्तण्ड संभूतं नमामि तं शनैश्चरं

राहुः

अर्धकायं महावीर्यं चंद्रादित्य विमर्दनं
सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्यहं

केतुः

पलाश पुष्प संकाशं तारका ग्रहमस्तकं
रौद्रं रौद्रात्मकं घोरं तंकेतुं प्रणमाम्यहं

समाप्त ।

Source: Vajeśaṁkara Devarāma Bola, ed., *Nāndīpurāṇa: nāndīmukha brāhmaṇajātine śāstrīya itihāsa* [Skt., Guj.](Calcutta : Damodara Viththalarama Parakhani, 1948).